पुस्तकप्राप्तिस्थानम्—

झवेरी चंदुलाल मोहोलाल कोठारी.

ऑ. सेक्रेटरी-श्रीदयाविमलजीजैनग्रन्थमाला.

ठे. विमलनो उपाश्रय, देवसानो पाडो—अमदावाद.

न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरच्चरणपङ्कजेभ्यो नमः ।

भट्टारकप्रभुश्री५६आनन्दविमलसूरिगुरुभ्यो नमः ॥

# ॥ पं० श्रीविजयविमलगणिविरचितवृत्तियुतं श्रीगच्छाचारप्रकीर्णकम् ॥

उद्बोधं विदधेऽब्जाना-मिव भव्यशरीरिणाम् । गोविलासैर्निजैर्योऽसौ, जीयाद्वीररविश्चिरम् ॥ १ ॥

पदपद्मं स्वगुरूणां, सदा सदाचारचरणचञ्चूनाम् । नत्वा विदधे विवृत्तिं, गच्छाचाराख्यसूत्रस्य ॥ २ ॥

इह तावच्छास्त्रस्यादौ मङ्गलसम्बन्धाभिधेयप्रयोजनान्यभिधातव्यानि, तत्र विघ्नविनायकोपशान्तये शिष्यजनप्रवर्त्तनाय शिष्टसमयपरिपालनार्थं चेष्टदेवतानमस्काररूपं भावमङ्गलमुपादेयम् । तथा श्रोतृजनप्रवृत्त्यर्थं शिष्टसमयपरिपालनार्थं च सम्बन्धादित्रयं वाच्यम्, तथा हि- इह श्रेयोभूते वस्तुनि प्रवर्त्तमानानां प्रायो विघ्नः सम्भवति श्रेयोभूतत्वादेव, श्रेयोभूतं चेदं, स्वर्गापवर्गहेतुत्वात् । विघ्नोपहतशक्तेश्च शास्त्रकर्त्तुश्चिकीर्षितशास्त्रासंसिद्ध्याऽभिप्रेतपुरुषार्थस्यानिष्पत्तिर्माभूदिति विघ्नविनायकोपशमनाय मङ्गलमुपादेयम् । आह च-" बहुविग्घाइं सेयाइँ, तेण कयमङ्गलोवयारेहिं । सत्थे पयट्टिअव्वं, विज्जाए महानिहीएव ॥ १ ॥ " ननु मानसादिनमस्कारतपश्चरणादिना मङ्गलान्तरेणैव विघ्नोपघातसद्भावादिष्टसिद्धिर्भविष्यतीति किमनेन ग्रन्थगौरवकारिणा वाचनिकनमस्कारेण इति ? सत्यम्, किन्तु श्रोतृप्रवृत्त्यर्थमिदं भविष्यति, तथा हि-यद्यप्युक्तन्यायेन कर्त्तुरविघ्नेष्टसिद्धिः स्यात्, तथापि प्रमादवतः शिष्यस्येष्टदेवतानमस्काररूपमङ्गलं विना प्रक्रान्तग्रन्थाध्ययनश्रवणादिषु प्रवर्त्तमानस्य विघ्न-

सम्भवादप्रवृत्तिः स्यान्मङ्गलवाक्योपन्यासे तु मङ्गलवचनाभिधानपूर्वकं प्रवर्त्तमानस्य मङ्गलवचनापादितदेवताविषयशुभभावव्यपोहितविघ्नत्वेन शास्त्रे प्रवृत्तिरप्रतिहतप्रसरा स्यात्, तथा देवताविशेषे नमस्कारोपादाने सति देवताविशेषगदितागमानुसारीदं शास्त्रम्, अत उपादेयम्, इत्येवंविधबुद्धिनिबन्धनत्वेन शिष्यप्रवृत्त्यर्थमिदं भवतीति। आह च–"मंगलपुवपवत्तो, पमत्तसीसो वि पारमिह जाइ। सत्थिविसेसण्णाणाउ, गोरवादिह पयट्टेज्जा ॥ १ ॥" ननु मङ्गलविकलानामपि बहुतमशास्त्राणां दृश्यते संसिद्धिः श्रोतृजनप्रवृत्तिश्चेति, ततः किमनेनानैकान्तिकेन शास्त्रगौरवकारिणा च मङ्गलेनाभिहितेनेति ? सत्यम्, किन्तु शिष्टसमयपरिपालनार्थमिदं भविष्यति। तथा हि– शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्त्तमाना इष्टदेवतानमस्कारपूर्वकं प्रायः प्रवर्त्तन्ते। शिष्टश्चायमप्याचार्य इति शिष्टसमाचारः परिपालितो भवत्विति मङ्गलमभिधेयम्। आह च–"शिष्टाः शिष्टत्वमायान्ति, शिष्टमार्गानुपालनात्। तल्लङ्घनादशिष्टत्वं, तेषां समनुपद्यते ॥ १ ॥" तथा सम्बन्धादीनि श्रोतृजनप्रवृत्त्यर्थमभिधेयानि, तथा हि–यदसम्बद्धं तत्र न प्रवर्त्तन्ते प्रेक्षावन्तो दशदाडिमादिवाक्य इव, एवं निरभिधेयेऽपि काकदन्तपरीक्षायामिव, एवं निष्प्रयोजनेऽपि कण्टकशाखामर्द्दन इवेति, अतः सम्बन्धादिप्रतिपादनं श्रोतॄणां शास्त्रे प्रवृत्त्यङ्गम्। अथासर्वज्ञावीतरागवचनानां व्यभिचारित्वसम्भवेन सम्बन्धादिसद्भावनिश्चयाभावात् नेतः प्रेक्षावतां प्रवृत्तिरत्र भविष्यति, या पुनः संशयात् प्रवृत्तिस्तां सम्बन्धादिवचनं विनैव भवतीति को निवारयितुं पारयति ? इति न श्रोतृप्रवृत्त्यङ्गं सम्बन्धादिवचनं, सत्यम्, किन्तु शिष्टसमयपरिपालनार्थं भविष्यति। शास्त्रकारा ह्येवं प्रवर्त्तमानाः प्रायः प्रेक्ष्यन्ते इति ग्रन्थकृत् गच्छाचाराभिधप्रकीर्णकं चिकीर्षुर्मङ्गलसम्बन्धाभिधेयप्रयोजनाभिधायिकामिमां गाथामाह–

**नमिऊण महावीरं, तियसिंदनमंसिअं महाभागं। गच्छायारं किंची, उद्धरिमो सुअसमुद्दाओ ॥१॥**

व्याख्या–नत्वा–प्रणम्य कमित्याह–महावीरं, विशेषेण ईरयति क्षिपति कर्म्माणीति वीरः, "विदारयति यत्कर्म, तपसा च विराजते। तपोवीर्येण युक्तश्च, तस्माद्वीर इति स्मृतः ॥ १ ॥" इति लक्षणान्निरुक्ताद्वा वीरः, महांश्चासावितरवीरापेक्षया वीरश्च महावीरस्तम्, जन्ममहोत्सवसमये तनुशरीरोऽयं कथं जलप्राग्भारभारं सोढेति शक्रशङ्काशङ्कुसमुद्धरणाय भगवता वामचरणाङ्गुष्ठनिपीडितसुमेरुशिखरप्रकम्पमानमहीतलोल्लासितसरित्पतिक्षोभशङ्कितब्रह्माण्डभाण्डोदरदर्शनप्रयुक्तावधिज्ञानज्ञातप्रभावातिशयविस्मितेन वास्तोष्पतिना व्यवस्थापितैवंविधनामकं चरमतीर्थाधिपतिम्, शेषजिनत्यागेन च महावीरग्रहणं प्रवर्त्तमानतीर्थाधिपत्वेन परमोपकारित्वात्। किम्भूतं? त्रिदशेन्द्रनमस्यितम्, त्रिदशाः सुमनसस्तेषामिन्द्रास्त्रिदशेन्द्रास्तैर्नमस्यितस्तम्, तथा महाभागं–महान् भागो 'भागोरूपार्द्धके भाग्यैकदेशयोः' इति हेमवचनाद् भाग्यं पारमैश्वर्यादिप्राप्तिहेतुतीर्थकृन्नामकर्मोदयरूपं यस्यासौ महाभागस्तं, ततः किमित्याह–गच्छस्य–सुविहितमुनिसमुदायस्याचारः–शिष्टजनसमाचरितः क्रियाकलापो गच्छाचारस्तम्, उद्धरामः–प्रकीर्णकरूपत्वेन पृथक्कुर्मो वयमिति शेषः, अनेन चास्याभिधेयमुक्तम्, ननु भद्रबाहुस्वाम्यादिभिरेव गच्छाचारस्योद्धृतत्वात् किं तदुद्धरणेनेत्याशङ्क्याह–किञ्चित्–संक्षिप्तमेव, पूर्वाचार्यैर्हि प्रपञ्चतः स उद्धृतो, वयं तु मन्दमतिसत्त्वानुग्रहार्थं सङ्क्षेपेण तमुद्धराम इत्यर्थः, अनेन च प्रकीर्णककरणविषयायाः स्वप्रवृत्तेः प्रयोजनमुक्तम्, यतः–प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्त्तते, तथा सङ्क्षिप्तप्रकीर्णकस्य सुखाध्येयत्वादिना विस्तरवद् ग्रन्थत्यागेन श्रोतारोऽत्र प्रवर्त्तिता भवन्ति। ननु श्रोतृजनप्रवर्त्तकविशेषणकदम्बकोपेतमपीदं प्रकीर्णकमसर्वज्ञेनावीतरागेण च भवतोद्ध्रियमाणमविसंवादार्थिनां न

प्रवृत्तिविषयो भविष्यति, असर्वज्ञवचने विसंवादाशङ्काऽनिवृत्तेः, इत्याशङ्कमान आह–श्रुतसमुद्रात् श्रुतं–कल्पव्यवहारादिरूपं तदेव गम्भीरत्वादिगुणैः समुद्रः श्रुतसमुद्रस्तस्मात्, यदि हि स्वरचितादेर्मयोद्ध्रियते, तदा व्यभिचारशङ्कया नेदं प्रवृत्तिविषयः स्यात्। तदेवमस्या गाथायाः पूर्वार्द्धेन मङ्गलमभिहितम्, उत्तरार्द्धेन तु सविशेषणमभिधेयं मुख्यवृत्त्याऽभिहितम्, तदभिधाने च गौणवृत्त्या प्रयोजनं सम्बन्धश्चोक्तः, तथाहि–अस्य द्विविधं प्रयोजनम्, अनन्तरं परम्परं च, पुनरेकैकं कर्तृश्रोत्रपेक्षया द्विधा, तत्र कर्त्तुरनन्तरप्रयोजनं सङ्क्षेपतो विनेयानां गच्छाचाराधिगमकरणं, परम्परन्तु परोपकारद्वारेण कर्मक्षयान्निर्वाणं, श्रोतॄणां पुनरनन्तरं प्रकीर्णकस्य सङ्क्षिप्तत्वादल्पायासेन गच्छाचाराधिगमः, परम्परं तु निर्वाणमेवेतीदं च प्रयोजनमभिधेयाभिधानेन सामर्थ्यादभिहितम्। न हि पुरुषार्थानुपयोगिवस्तुनोऽभिधानाय सन्तः प्रवर्त्तन्ते, तत्त्वहानिप्रसङ्गात्। तथाऽस्य प्रकीर्णकस्येदं प्रयोजनमिति दर्शयता दर्शित एवास्योपायोपेयभावलक्षणः सम्बन्धस्तर्कानुसारिणः प्रति, तथा हीदं प्रकीर्णकमुपायो वर्त्तते, उपायान्तरेण विवक्षिताधिगमकरणादीनामसिद्धिः, अत एवेदमेवाधिगमादिकरणमस्योपेयमिति। आह च "सम्बन्धः प्रोक्त एव स्यात्, एतस्यैतत् प्रयोजनम्। इत्युक्तेन तेन नो वाच्यो, भेदेनासौ प्रयोजनात् ॥१॥" इति। तथा श्रुतसमुद्रादित्यनेन श्रद्धानुसारिणः प्रति गुरुपर्वक्रमलक्षणोऽपि सम्बन्धोऽभिहितः, तथा हि–प्रथमतो भगवता परमार्हन्त्यमहिम्ना विराजमानेन वर्द्धमानस्वामिना गच्छाचारः प्रतिपादितः, ततः सुधर्मस्वामिना द्वादशस्वङ्गेषु सूत्रतया निबद्धः, ततोऽप्यार्यभद्रबाहुस्वाम्यादिभिः कल्पादिषु समुद्धृतः, तेभ्योऽपि मन्दमेधसामवबोधाय सङ्क्षिप्यास्मिन् प्रकीर्णके समुद्ध्रियते, तत एवं परम्परया सर्वज्ञमूलमिदं प्रकीर्णकमित्यवश्यमवदातधियामुपादेयमिति। गाथाछन्दः, तल्लक्षणं चेदम्–"लक्ष्मैतत् सप्तगणा, गोपेता भवति नेह विषमे

जः। षष्ठोऽयं च न लघुर्वा, प्रथमेऽर्द्धे नियतमार्यायाः ॥ १ ॥ षष्ठे द्वितीयलात् परके ले मुखलाच्च स यतिपदनियमः। चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ २ ॥" (वृत्तरत्नाकरे) आर्यैव संस्कृतेतरभाषासु गाथासंज्ञेति प्रथमगाथार्थः ॥ १ ॥

इह हि साधुना इहपरलोकहितार्थं सदा सदाचारगच्छसंवासो विधेयः, असदाचारगच्छसंवासश्च परिहार्यः, क्रमेण परमशुभाशुभफलत्वात्। तत्रापि अपरिकर्मितप्रदेशं चित्रकरणमिव, सच्छिद्रप्रवहणं समुद्रतरणमिव, अपरिवर्जितापथ्यं तथ्यौषधकरणमिव, अव्याकरणाध्ययनमन्यशास्त्राध्ययनमिव, अपरिवद्धपीठं भित्तिचयनमिव, सधूलीकं लिम्पनमिव, अनम्भःसङ्गं कमलरोपणमिव, अलोचनं मुखमण्डनमिव, अन्तर्गडुव अपरित्यक्तोन्मार्गगामिगच्छसङ्गं सदाचारगच्छसंवसनम्, इत्युन्मार्गगामिगच्छसङ्गतिं परित्यज्यैव सन्मार्गगामिनि गच्छे संवसनीयमिति ज्ञापनार्थं प्रथमशुन्मार्गगामिगच्छसंवासे परमापायफलं दर्शयति—

**अत्थेगे गोअमा ! पाणी, जे उम्मगपइट्ठिए। गच्छम्मि संवसित्ताणं, भमई भवपरंपरं ॥ २ ॥**

व्याख्या—हे गौतम! सन्त्येके—केचन प्राणिनः—सत्त्वाः, ये उन्मार्गप्रतिष्ठिते—उन्मार्गगामिनि गच्छे संवस्य—संवासं कृत्वा, णमिति वाक्यालङ्कारे भवपरम्परां—संसारपरिपाटीं भ्रमन्ति, अत्र वचनव्यत्ययो दीर्घत्वं च प्राकृतत्वात्। एवमग्रेऽपि तत्र तत्र वचनादिव्यत्ययह्रस्वत्वदीर्घत्वविभक्तिलोपादिप्राकृतत्वादिनिबन्धनमनुक्तमपि स्वयमभ्यूह्यम्। असत्सङ्गो हि सतोऽपि शीलस्य विलयेन पातहेतुरेव, उच्यते चान्यत्रापि—" यदि सत्सङ्गनिरतो, भविष्यसि भविष्यसि। अथासज्जनगोष्ठीषु, पतिष्यसि पतिष्यसि ॥ १ ॥" इह च 'अत्थेगे गोअमा पाणी'त्यादि सगौतमामन्त्रेण श्रीमन्महावीरनिर्वचनवा-

क्योपलम्भात् । हे भदन्त ! किं सन्ति ते केचन प्राणिनः ? य उन्मार्गगामिनि गच्छे संवरय भवपरम्परां भ्रमन्ति, इत्यादिरूपं यथासम्भवि सभगवदामन्त्रणश्रीगौतमप्रश्नवाक्यमनुक्तमपि ज्ञेयम् । प्रश्नमन्तरेण निर्वचनस्य प्रायोऽसम्भवादेवमुत्तरत्रापि, तत्र तत्र प्रश्नवाक्यं यथासम्भवि स्वयमेव वाच्यमिति । नन्विदं प्रकीर्णकं केन विरचितमिति ? उच्यते—

"महानिसीहकप्पाओ, ववहाराओ तहेव य। साहुसाहुणिअट्ठाए, गच्छायारं समुद्धिअं ॥१॥" इतीहैववक्ष्यमाणवचनादेवेदमवसीयते । यदुतेदं प्रकीर्णकं श्रीभद्रबाहुस्वामिपादविरचितग्रन्थादिभ्य उद्धृतत्वेन तदर्वाग्भाविना पूर्वान्तर्गतसूत्रार्थधारकेण केनाप्याचार्येण विरचितमिति । यथा ज्योतिष्करण्डकप्रकीर्णकं वालभ्यवाचनानुगतेन पूर्वगतसूत्रार्थधारिणा केनाऽप्याचार्येण विरचितम्। उक्तं च श्रीमलयगिरिसूरिपादैस्तत्प्रथमगाथावृत्तौ 'अयमत्र पूर्वाचार्योपदर्शित उपोद्घातः—कोऽपि शिष्योऽल्पश्रुतः कश्चिदाचार्यं पूर्वगतसूत्रार्थधारकं वालभ्य श्रुतसागरपारगतं शिरसा प्रणम्य विज्ञपयतिस्म, यथा—भगवन् इच्छामि युष्माकं श्रुतनिधीनामन्ते यथावस्थितं कालविभागं ज्ञातुमिति, तत एवमुक्ते आचार्य आह—शृणु वत्स ! तावदित्यादि' तथा तद्द्वितीयप्राभृतवृत्तावपि सङ्ख्यास्थानविसदृशत्वमाश्रित्योक्तम्, 'यथा—इह स्कन्दिलाचार्यप्रवृत्तौ दुःषमानुभावतो दुर्भिक्षप्रवृत्त्या साधूनां पठनगुणनादिकं सर्वमप्यनशत् । ततो दुर्भिक्षातिक्रमे सुभिक्षप्रवृत्तौ द्वयोः सङ्घयोर्मेलापकोऽभवत्। तद्यथा—एको वलभ्यां, एको मथुरायां, तत्र च सूत्रार्थसङ्घटने परस्परवाचनाभेदो जातः । विस्मृतयोर्हि सूत्रार्थयोः स्मृत्वा सङ्घटने भवत्यवश्यं वाचनाभेदो न काचिदनुपपत्तिः, तत्रानुयोगद्वारादिकमिदानीं वर्त्तमानं माथुरवाचनानुगतं, ज्योतिष्करण्डकसूत्रकर्त्ता चाचार्यो वालभ्यः, तत इहेदं संख्यास्थानप्रतिपादनं वालभ्यवाचनानुगतमिति नास्यानुयोगद्वारप्रतिपादितसङ्ख्यास्थानैः सह विसदृशत्वमुपलभ्य

विचिकित्सितव्यमिति'। यथा वा नन्द्यध्ययनं देववाचकेन। उक्तंच श्रीमलयगिरिसूरिपादैरेव तद्वृत्तौ यथा–' तदेवमभीष्टदेवतास्तवादिसम्पादितसकलसौविहित्यो भगवान् दूषगणिपादोपसेवी पूर्वान्तर्गतसूत्रार्थधारको देववाचको योग्यविनेयपरीक्षां कृत्वा सम्मत्यधिकृताध्ययनविषयस्य ज्ञानस्य प्ररूपणां विदधाति। "नाणं पंचविहं पण्णत्तं" इत्यादीति' ननु यद्येवं तर्ह्यत्र गौतमप्रश्नश्रीमन्महावीरनिर्वचने न सम्भवतः? उच्यते, सत्यम्, परं प्रायः सर्वत्र गणधरप्रश्नतीर्थंकरनिर्वचनरूपं सूत्रम्, अतो भगवान् गच्छाचारप्रकीर्णककर्त्तापीत्थमेव सूत्रं रचयति स्मेति। ननु प्रकीर्णकमिति कोऽर्थः? १ कानि वा प्रकीर्णकानि? २ कतिसङ्ख्यानि वा तान्येकैकस्य तीर्थकृत आसीरन्? ३ कैर्वा विरचितानीति? ४ उच्यते, इह यद् भगवदर्हदुपदिष्टं श्रुतमनुसृत्य भगवन्तः श्रमणा विरचयन्ति तत्सर्वं प्रकीर्णकमुच्यते, ' अथवा श्रुतमनुसरन्तो यदात्मनो वचनकौशलेन धर्मदेशनादिषु ग्रन्थपद्धतिरूपतया भाषन्ते तदपि प्रकीर्णकं १। कानीति प्रश्ने यानि अङ्गबाह्यानि दशवैकालिकोत्तराध्ययनादीन्युत्कालिककालिकभेदभिन्नान्यध्ययनानि तानि सर्वाण्यपि प्रकीर्णकानि २। सङ्ख्याप्रश्ने चतुरशीतिप्रकीर्णकसहस्राणि ऋषभस्वामिनः, सङ्ख्येयानि प्रकीर्णकसहस्राण्यजितादितीर्थकृताम्, चतुर्दश प्रकीर्णकसहस्राणि भगवतो वर्द्धमानस्वामिनः, अपरिमाणानि वा एकैकस्य तीर्थकृतस्तीर्थे ३। कैर्वाविरचितानीति प्रश्ने तु, ये ऋषभादितीर्थकरकाले श्रमणाः प्रधानसूत्रविरचनशक्तिसमन्विता आसीरन्, ये वा ऋषभादितीर्थकरतीर्थश्रमणाः प्रधानसूत्रविरचनशक्तिसमन्विताः, ये वा प्रत्येकबुद्धास्तैर्विरचितानि प्रकीर्णकानीति ४, उक्तं चैतदर्थसंवादि श्रीनन्दिसूत्रश्रीमलयगिरिकृततद्वृत्योः तत्र सूत्रं यथा–"अहवा तं समासओ दुविहं पं० तं० अंगपविट्ठं अंगबाहिरं च। से किं तं अंगबाहिरं? अंगबाहिरं दुविहं पं० तं० आवस्सयं च आवस्सयवइरित्तं च से किं तं आवस्सयं

२ छविहं पं० तं० सामाइयं १ चउवीसत्थओ २ वंदणयं ३ पडिक्कमणं ४ काउस्सग्गो ५ पच्चक्खाणं ६ से तं आवस्सयं। से किं तं आवस्सयवइरित्तं २ दुविहं पं० तं० कालिअं उक्कालिअं च। से किं तं उक्कालिअं २ अणेगविहं पं० तं० दसवेयालिअं १ कप्पियाकप्पियं २ चुल्लकप्पसुअं ३ महाकप्पसुयं ४ उववाइअं ५ रायपसेणियं ६ जीवाभिगमो ७ पन्नवणा ८ महापण्णवणा ९ पमायप्पमायं १० नंदी ११ अणुओगदाराइं १२ देविंदत्थओ १३ तंदुलवेयालियं १४ चंदाविज्झयं १५ सूरपण्णत्ती १६ पोरिसिमंडलं १७ मंडलपवेसो १८ विज्जाचरणविणिच्छओ १९ गणिविज्जा २० झाणविभत्ती २१ मरणविभत्ती २२ आयविसोही २३ वीअरागसुअं २४ संलेहणासुअं २५ विहारकप्पो २६ चरणविही २७ आउरपच्चक्खाणं २८ महापच्चक्खाणं २९ एवमाइ, से तं उक्कालियं। से किं तं कालियं २ अणेगविहं पं० तं० उत्तरज्झयणाइं १ दसाओ २ कप्पो ३ ववहारो ४ निसीहं ५ महानिसीहं ६ इसिभासिआइं ७ जंबूदीवपण्णत्ती ८ दीवसागरपण्णत्ती ९ चंदपन्नत्ती १० खुड्डियाविमाणपविभत्ती ११ महल्लियाविमाणपविभत्ती १२ अंगचूलिया १३ वंगचूलिया १४ विवाहचूलिया १५ अरुणोववाए १६ वरुणोववाए १७ गरुलोववाए १८ धरणोववाए १९ वेसमणोववाए २० वेलंधरोववाए २१ देविंदोववाए २२ उट्ठाणसुए २३ समुट्ठाणसुए २४ नागपरिआवलिआओ २५ निरयावलिआओ २६ कप्पिआओ २७ कप्पवडिंसियाओ २८ पुप्फिआओ २९ पुप्फचूलिआओ ३० वण्हीदसाओ ३१ एवमाइआइं चउरासीइं पइन्नगसहस्साइं भगवओ अरहओ उसहसामिस्स आइतित्थयरस्स, तहा संखिज्जाइं पइन्नगसहस्साइं मज्झिमगाणं जिणवराणं, चउदसपइण्णगसहस्साइं भगवओ वद्धमाणसामिस्स, अहवा जस्स जत्तिआ सीसा ऊप्पत्तिआए १ वेणइआए २ कम्मिआए ३ पारिणामिआए ४ चउव्विहाए बुद्धीए उववेआ तस्स तत्तिआइं पइण्णगस-

इस्सराइं, पत्तेअबुद्धावि तत्तिआ चेव। से तं कालिअं, से तं आवस्सयवइरित्तं, से तं अणंगपविट्ठं। अथैतत् वृत्त्येकदेशो यथा—'एवमाइया' इत्यादि कियन्ति नाम नामग्राहमाख्यातुं शक्यन्ते प्रकीर्णकानि, तत एवमादीनि चतुरशीति प्रकीर्णकसहस्राणि भगवतोऽर्हतः श्रीऋषभस्वामिनस्तीर्थंकृतः १, तथा सङ्ख्येयानि प्रकीर्णकसहस्राणि मध्यमानामजितादीनां जिनवरेन्द्राणां एतानि च यस्य यावन्ति भवन्ति तस्य तावन्ति प्रथमानुयोगतो वेदितव्यानि २, तथा चतुर्दशप्रकीर्णकसहस्राणि भगवतोऽर्हतो वर्द्धमानस्वामिनः ३। इयमत्र भावना—इह भगवत ऋषभस्वामिनश्चतुरशीतिसहस्रसङ्ख्याः श्रमणा आसीरन्, ततः प्रकीर्णकरूपाणि चाऽध्ययनानि कालिकोत्कालिकभेदभिन्नानि सर्वसङ्ख्यया चतुरशीतिसहस्रसङ्ख्यान्यभवन्। कथमिति चेत्? उच्यते, इह यत् भगवदर्हदुपदिष्टं श्रुतमनुसृत्य भगवन्तः श्रमणा विरचयन्ति तत्सर्वं प्रकीर्णकमुच्यते, अथवा श्रुतमनुसरन्तो यदात्मनो वचनकौशलेन धर्म्मदेशनादिषु ग्रन्थपद्धतिरूपतया भाषन्ते तदपि सर्वं प्रकीर्णकं, भगवतश्च ऋषभस्वामिन उत्कृष्टा श्रमणसम्पदासीत् चतुरशीतिसहस्रप्रमाणा, ततो घटन्ते प्रकीर्णकान्यपि भगवतश्चतुरशीतिसहस्रसङ्ख्यानि १। एवं मध्यमतीर्थकृतामपि सङ्ख्येयानि प्रकीर्णकसहस्राणि भावनीयानि २। भगवतस्तु वर्द्धमानस्वामिनश्चतुर्दश श्रमणसहस्राणि, तेन प्रकीर्णकान्यपि भगवतश्चतुर्दशसहस्राणि ३। अत्र द्वे मते। एके सूरयः प्रज्ञापयन्ति—इदं किल चतुरशीतिसहस्रादिकमृषभादीनां तीर्थकृतां श्रमणपरिमाणं प्रधानसूत्रविरचनसमर्थान् श्रमणानधिकृत्य वेदितव्यं, इतरथा पुनः सामान्यश्रमणाः प्रभूततरा अपि तस्मिन् तस्मिन् ऋषभादिकाले आसीरन् १। अपरे पुनरेवं प्रज्ञापयन्ति—ऋषभादितीर्थकृतां जीवतामिदं चतुरशीतिसहस्रादिकं श्रमणपरिमाणं, प्रवाहतः पुनरेकैकस्मिन् तीर्थे भूयांसः श्रमणा वेदितव्याः, तत्र ये प्रधानसूत्रविरचनशक्तिसमन्विताः सुप्रसिद्धास्तद्ग्रन्था अत-

त्कालिका अपि तीर्थे वर्त्तमानाः सूत्राधिकृता द्रष्टव्याः २। एतदेव मतान्तरमुपदर्शयन्नाह–

'अहवे' त्यादि अथवेति प्रकारान्तरोपदर्शने यस्य ऋषभादेस्तीर्थंकृतो यावन्तः शिष्यास्तीर्थे औत्पत्तिक्या १ वैनयिक्या २ कर्मजया ३ पारिणामिक्या ४ चतुर्विधया बुद्धया उपेताः–समन्विता आसीरन्, तस्य ऋषभादेस्तावन्ति प्रकीर्णकसहस्राणि अभवन्। प्रत्येकबुद्धा अपि तावन्त एव। अत्रैके व्याचक्षते। इह एकैकस्य तीर्थंकृतः तीर्थेऽपरिमाणानि प्रकीर्णकानि भवन्ति, प्रकीर्णककारिणामपरिमाणत्वात्, केवलमिह प्रत्येकबुद्धरचितान्येव प्रकीर्णकानि द्रष्टव्यानि, प्रकीर्णकपरिमाणेन प्रत्येकबुद्धपरिमाणप्रतिपादनात्। स्यादेतत्प्रत्येकबुद्धानां शिष्यभावो विरुध्यते, तदेतदसमीचीनम्, यतः–प्रव्राजकाचार्यमेवाधिकृत्य शिष्यभावो निषिध्यते, न तु तीर्थकरोपदिष्टशासनप्रतिपन्नत्वेनापि, ततो न कश्चिद्दोषः। तथा च तेषां ग्रन्थः–" इह तित्थे अपरिमाणा पइन्नगा पइण्णगसामिअपरिमाणत्तणओ, किं तु इह सुत्ते पत्तेयबुद्धपणीयं पइन्नगं भाणियव्वं, कम्हा जम्हा पइण्णगपरिमाणेण चेव पत्तेयबुद्धपरिमाणं कीरइ, भणियं 'पत्तेयबुद्धावि तत्तिया चेव' त्ति। चोयग आह–नणु पत्तेयबुद्धा सिस्सभावो य विरुज्झए ? आयरिओ आह–तित्थगरपणीयसासणपडिवन्नत्तणओ तस्स सीसा हवन्तीति।" अन्ये पुनरेवमाहुः– सामान्येन प्रकीर्णकैस्तुल्यत्वात्प्रत्येकबुद्धानामत्राभिधानम्, न तु नियोगतः प्रत्येकबुद्धरचितान्येव प्रकीर्णकानीति 'सेत' मित्यादि तदेतत्कालिकं, तदेतदावश्यकव्यतिरिक्तं, तदेतदनङ्गप्रविष्टमिति। इदमपि गाथाछन्दः। परं तल्लक्षणं चेदम्–" विषमाक्षरपादं वा, पादैरसमं दशधर्मवत्। यच्छन्दो नोक्तमत्र, गाथेति तत्सूरिभिः प्रोक्तमिति ॥ १ ॥" ( वृत्तरत्नाकरपञ्चमाध्याये ) ॥ २ ॥ अथ गाथात्रयेण सदाचारगच्छसंवासे गुणानाह.

जामद्धजामदिणपक्खं, मासं संवच्छरंपि वा । सम्मग्गपट्टिए गच्छे, संवसमाणस्स गोअमा ॥३॥
लीलाअलसमाणस्स, निरुच्छाहस्स वीमणं । पिक्खविक्खइ अन्नेसिं, महाणुभागाण साहुणं ॥४॥
उज्जमं सव्वथामेसु, घोरवीरतवाइअं । लज्जं संकं अइक्कम्म, तस्स वीरिअं समुच्छले ॥५॥

गाथात्रयव्याख्या–यामार्द्धं–चतुर्घटिकं, यामं-प्रहरं, दिनं–अहोरात्रं, अत्र पदत्रयेऽपि विभक्तिलोपः प्राकृतत्वात्, समाहारद्वन्द्वो वा चतुर्णां पदानां, पक्षं–पञ्चदशदिनात्मकं, मासं–पक्षद्वयात्मकं, संवत्सरं–द्वादशमासात्मकं, अपिशब्दाद्वर्षद्वयादिकं यावत् वा शब्दो विकल्पार्थः, सन्मार्गप्रस्थिते–आगमोक्तमार्गप्रवृत्ते गणे संवसतो–निवासं कुर्वाणस्य जन्तोरिति शेषः, हे गौतम! कथम्भूतस्य लीलया अलसायमानस्य अनलसोऽलसो भवतीति अलसायते अलसायते इति अलसायमानस्तस्य, अत्र डाच् 'लोहितादिभ्यः' षिदिति सूत्रेण लोहितादेराकृतिगणत्वात् डार्थे क्यङ् ष् प्रत्ययः । निरुत्साहस्य–निरुद्यमस्य 'वीमणं' ति षष्ठ्यर्थे द्वितीया । विमनस्कस्य–शुन्यचित्तस्य 'पिक्खविक्खइ' त्ति पश्यतः अन्येषां महानुभागानां–महाप्रभावाणां साधूनां, उद्यमं–अनालस्यं सर्वस्थामेसु–सर्वक्रियासु, कथंभूतमुद्यमं? 'घोरवीरतवाइअं' ति घोरं–दारुणमल्पसत्त्वैर्दुरनुचरत्वात्, 'वीर'त्ति वीरे भवं वैरं वीरैः साध्यमानत्वादेवंविधं तप आदिर्यत्र तं आदिशब्दाद्वैयावृत्त्यादिकं लज्जां–व्रीडां शङ्कां–जिनोक्ते संशयरूपामतिक्रम्य-परित्यज्य स्थितस्येति शेषः, तस्य सुखशीलत्वादिदोषयुक्तस्यापि वीर्यं–प्रधानधर्मानुष्ठानकरणोत्साहरूपं समुच्छलेत्–

१ आसोक्त प्र०

प्रादुर्भवेत्, सोऽपि जिनोक्तमोक्षमार्गक्रियां कुर्यादित्यर्थः, षष्ठाङ्गोक्तशैलकाचार्यवदिति, त्रीण्यपि विषमाक्षरेति गाथाछन्दांसि ॥ ३ ॥ ४ । ५ ॥ अथ वीर्योच्छलने किं फलमित्याह–

**वीरिएणं तु जीवस्स, समुच्छलिएण गोअमा । जम्मंतरकए पावे, पाणी मुहुत्तेण निद्दहे ॥६॥**

व्याख्या–जीवस्य–जन्तो (तोः) वीर्येण तु समुच्छलितेन हे गौतम ! जन्मान्तरकृतानि पापानि प्राणी–स एव जन्तुर्मुहूर्त्तमात्रेण निर्दहेत्–ज्वालयेत्, अर्हन्नकवदिति, विषमाक्षरेति गाथाछन्दः ॥ ६ ॥ यस्मादेवं तस्मात्किं कर्त्तव्यमित्याह–

**तम्हा निउणं निहालेउं, गच्छं सम्मग्गपट्ठिअं । वासिज्ज तत्थ आजम्मं, गोअमा ! संजए मुणी ॥७॥**

व्याख्या—यस्मात् सद्गणे एते गुणास्तस्मान्निपुणं निभाल्य–सम्यक् परीक्ष्य, गच्छं सन्मार्गप्रस्थितं, तत्र वसेत्–निवासं कुर्यात् । आजन्म–जीवितकालमभिव्याप्य यावज्जीवमित्यर्थः, हे गौतम ! संयतः सत्क्रियावान् मुनिः–साधुरिति, विषमाक्षरेति गाथाछन्दः ॥ ७ ॥ सम्यक् परीक्ष्य सद्गणे वसेदित्यनन्तरमुक्तं, तत्र गणस्य बहुव्रतिव्रतिनीसमुदायात्मकस्य प्रत्येकं परीक्षाकर्त्तुं न शक्यते । अथाचार्ये च परीक्षिते प्रायो गणोऽपि परीक्षित एव, मेढ्यादिसमानत्वेन तत्प्रवर्त्तकत्वादाचार्यस्य, गणस्य च तदनुवर्त्तित्वादित्यतः प्रथममाचार्यमेव परीक्षेतेत्याह—

**मेढी आलंबणं खंभं, दिट्ठी जाणं सुउत्तमं । सूरी जं होइ गच्छस्स, तम्हा तं तु परिक्खए ॥८॥**

व्याख्या—यद्यस्मात्कारणात्सूरिः–सदाचार्यो गच्छस्य–गणस्य 'मेढि'त्ति मेथिः–खले गोबन्धस्थूणा तत्समानो भवति ।

यथाऽनया बद्धानि पशुवृन्दानि मर्यादया प्रवर्त्तन्ते तथाऽऽचार्यमेथीबद्धो गच्छोऽपि मर्यादया प्रवर्त्तत इत्यर्थः, तथाऽऽलम्बनं-हस्ताद्याधारस्तत्समानः यथा हस्ताद्याधारो गर्त्तादौ पतज्जन्तुं धारयति तथाऽऽचार्योऽपि भवगर्त्ते पतन्तं गच्छं धारयतीत्यर्थः, तथा 'खंभं' ति स्तम्भः-स्थूणा अत्र नपुंसकत्वं प्राकृतत्वादेव तत्समानः यथा स्तम्भः प्रासादाधारः स्यात् तथाऽऽचार्योऽपि गच्छप्रासादाधारः, तथा 'दिट्ठि'त्ति दृष्टिः-नेत्रं तत्समानः यथा जन्तोर्नेत्रं शुभाशुभवस्तुप्रदर्शकं भवति तथाऽऽचार्योऽपि गच्छस्य भाविशुभाशुभप्रदर्शकः स्यात्, तथा 'जाणं सुउत्तमं' ति यानं-यानपात्रं सूत्तमं-अतिप्रधानमच्छिद्रमित्यर्थः, तत्समानो यथाऽच्छिद्रं यानपात्रं समुद्रतीरं नयति जन्तून्, तथाऽऽचार्योऽपि गच्छं भवतीरं नयति तस्मात्प्रथमं, 'तं तु' त्ति तोरेवकारार्थत्वात् तमेवाचार्यमेव परीक्षेत गच्छपरीक्षामिच्छुस्सुधीरिति अनुष्टुप् छन्दः ॥ ८ ॥ एवं चात्र ग्रन्थे त्रयोऽधिकाराः सूचिताः तद्यथा—आचार्यस्वरूपाधिकारः १ साधुस्वरूपाधिकारः २ साध्वीस्वरूपाधिकारश्च ३। तत्र प्रथममाचार्यस्वरूपाधिकारं निरुपयितुकामः कैश्चिन्हैश्छद्मस्थ उन्मार्गप्रस्थितमाचार्यं परीक्षेतेति प्रश्नयन्नाह—

**भयवं केहि लिंगेहि, सूरिं उम्मग्गपट्ठियं। वियाणिज्जा छउमत्थे, मुणी तं मे निसामय ॥ ९ ॥**

व्याख्या—हे भगवन्!—परमैश्वर्यादिसमन्वित कैर्लिङ्गैः—चिन्हैरुन्मार्गप्रस्थितं-असन्मार्गस्थितं सूरिं-आचार्यं, छाद्यते केवलज्ञानं केवलदर्शनं चात्मनोऽनेनेति छद्म तत्र तिष्ठतीति छद्मस्थो, विजानीयात्—परीक्षेतेति परप्रश्ने गुरुराह—हे मुने! यैश्चिन्हैराचार्यमुन्मार्गप्रस्थितं छद्मस्थः परीक्षेत, तत् मे—मम कथयत इति शेषः। 'निसामय' त्ति त्वं निशामया—ऽऽकर्णयेति, अनुष्टुप् छन्दः ॥ ९ ॥ अथ वृत्तद्वयेन पूर्वोक्तशिष्यप्रश्नोत्तरमेवाह—

सच्छंदयारिं दुस्सीलं, आरंभे सुपवत्तयं । पीढयाइ पडिबद्धं, आउक्कायविहिंसगं ॥ १० ॥
मूलुत्तरगुणब्भट्ठं, सामायारीविराहयं । अदिन्नालोयणं निच्चं, निच्चं विगहपरायणं ॥ ११ ॥

अनयोर्व्याख्या—स्वच्छन्देन–स्वाभिप्रायेण न तु जिनाज्ञया चरतीति स्वच्छन्दचारी तं, तथा दुष्टं शीलं–आचारो यस्य स दुःशीलस्तं, तथाऽऽरम्भाः–पृथिव्याद्युपद्रवणानि उपलक्षणत्वात् संरम्भसमारम्भावपि, तत्र संरम्भः–सङ्कल्पः, समारम्भस्तु–परितापकरः, उक्तञ्च–" संकप्पो संरंभो, परितावकरो भवे समारंभो । आरंभो उद्दवओ, सुद्धनयाणं तु सव्वेसिं ॥ १ ॥ " तत्र स्वान्ययोः प्रवर्त्तकस्तं, तथा पीठकं–फलकमादिशब्दात्पट्टिकादयस्तत्र प्रतिबद्धः कारणं विनापि ऋतुबद्धकाले तत्परिभोजीत्यर्थस्तं, ऋतुबद्धकाले च पीठकादिग्रहणे महान् दोषः, उक्तं च–" जे भिक्खू उडुबद्धियं सेज्जासंथारयं परं पज्जोसवणाओ उवाइणेइ उवाइणितं वा साइज्जइ " त्ति । इति श्रीनिशीथसूत्रद्वितीयोद्देशके । अथैतच्चूर्णिः–"उडुबद्धगहितं सेज्जासंथारयं पज्जोसवणरातीओ परं उवातिणावेइ तस्स मासलहु पच्छित्तं । सेज्जासंथारविशेषज्ञापनार्थमाह–' सव्वंगिया उ सेज्जा, दोहत्थद्धं च होइ संथारो । अहसंथडा व सेज्जा, तप्पुरिसो वा समासो उ ॥ १ ॥ ' सव्वंगिया सेज्जा अड्ढाइयहत्थो संथारो, अहवा अहासंथडा सेज्जा अचलेत्यर्थः, चलो संथारतो, अहवा तप्पुरिसो समासो कज्जति । शय्येव संस्तारकः शय्यासंस्तारकः संस्तारो दुविधो ॥ १ ॥ 'परिसाडिमपरिसाडी, दुविहो संथारओ उ नायव्वो । परिसाडी वि य दुविहो, अझुसिरझुसिरो उ नायव्वो ॥ २ ॥ ' जत्थ परिभुज्जमाणे किं वि परिसडति सो परिसाडी, इतरो अपरिसाडी, सो

दुविहो अझुसिरो झुसिरो य ॥ २ ॥ 'सालितणादी झुसिरो, कुसतिणयादी अझुसिरतो होति । एगंगिओ अणेगं–गिओ य दुविधो अपरिसाडी ॥ ३ ॥' सालितणादी झुसिरो कुसवप्पगतणादी अझुसिरो, जो अपरिसाडी सो दुविहो एगंगिओ अणेगंगिओ अ ॥ ३ ॥ 'एगंगिओ उ दुविहो, संघातिमएयरो य नायवो । दोमादी नियमाओ, होति अणेगंगिआ एत्थ ॥ ४ ॥' एगंगिओ दुविहो संघातिमो य असंघातिमो य दुगाइपट्टोपचारेण संघातिता कपाटवत् एस संघातिमो एगं चेव पृथुफलकं असंघातिमो, दुगादिफलहा असंघातिता वंशकंबियाओ वा अणेगंगिओ ॥ ४ ॥ 'एते सामण्णयरं, संथारुडुवद्धि गेण्हए जो उ । सो आणाअणवत्थं, मिच्छत्तविराहणं पावे ॥ ५ ॥' एतेसिं संथारगाणमन्नतरं जो उडुवद्धे गेण्हति सो अतिक्कमे वट्टति, अणवत्थं करेति, मिच्छत्तं जणेति, आयसंजमविराहणं पावति ॥ ५ ॥ इमे दोसा 'सज्झाए पलिमंथो, गवेसणाणयणमप्पिणंते य । झामियहिया वक्खेवो, संघट्टणमादि पलिमंथो ॥ ६ ॥' उडुवद्धे काले निक्कारणे संथारगं गवेसमाणस्स आणेतस्स पुणो पच्चप्पिणंतस्स सज्झाए पलिमंथो भवति, अह कहवि झामिओ हिओ वा, तो संथारगसामी अणुण्णवेंतस्स सुत्तत्थेसु वक्खेवो, संसत्ते तससंघट्टणादिनिप्फण्णं संजमे पलिमंथो य, अह सामी भणेज्जा जओ जाणह तओ मे अण्णं देह, ताहे अण्णं मग्गंताणं सो चेव पलिमंथो ॥ ६ ॥ पायच्छित्तं दाउकामो भेदमाह–'झुसिरेय' गाहा कंठा ७ एतेसु इमं पच्छित्तं 'परिसाडिमे' गाहा । परिसाडिय अझुसिरे मासलहुं । झुसिरे पडिसाडिए १ एगंगिए संघातिमे २ असंघातिमे ३ अणेगंगिए य ४ एतेसु चउसु वि चउलहुयं । झामिते हिते वा अण्णं दवाविज्जति वहंतं साहूण दाउं अवहंतयं पवाहेज्ज ओभासिओ वा साहुअट्ठाए अहाकम्मं करेति । आदिसद्दाओ कीयकडादि वक्खेवो ८ 'सुत्तादि' गाहा गतार्थी, एवकेन दधिमन्थनवत् ९ । चोदक आह–' एवं सुत्तनि-

वंधो, निरत्थओ चोदगो उ चोदेति। जह होति सो सअत्थो, तं सुण वोच्छं समासेणं ॥ १० ॥' संथारगहणं उडुवद्धे अत्थेण निसिद्धं एवं सुत्तं निरत्थयं, जत्तो सुत्ते पज्जोसवणरातिअतिक्कमगं पडिसिद्धं, तं गहिते संभवति एवं चोदकेनोक्ते आचार्य आह—जहा सुत्तत्थो सार्थको भवति तथाऽहं समासतो वोच्छे ॥१०॥ 'सुत्तनिवाउ तणेसुं, देसगिलाणे य उत्तमट्ठे य। चिक्खल्लपाणहरिते, फलगाणि य कारणज्जाते ॥ ११ ॥' दारगाहा ॥ देसं पडुच्च तणा घेप्पेज्ज ११ 'असिवादिकारणगता, उवहीकुच्छण अजीरणभए वा। अझुसिरमसंधिवीए, एक्कमुहे भंगसोलसगं ॥ १२ ॥' जो विसतो वरिसारत्ते पाणिएण प्लावितो सो उडुवद्धे उम्मिज्जति, जहा—सिंधुविसए ऊसरभूमी वा जहारणकंठं तं असिवादिकारणेहिं गता मा उवही कुच्छिस्सति त्ति अजीरणभया वा तणा घेप्पेज्जेत्यादि, तथा अप्कायः—सचित्तजलं तस्य विहिंसको—विराधकस्तं, तथा मूलगुणाः—प्राणातिपातविरमणादयः, उत्तरगुणाः—पिण्डविशुद्ध्यादयस्तेभ्यो भ्रष्टस्तम्, तथा सामाचारी—साध्वहोरात्रक्रियारुपा सद्गच्छमर्यादा तस्या विराधकस्तं, तथा नित्यं अदत्ता—गुरुपुरतोऽप्रकटिता आलोचना—आलोचनार्हं पापं येन सोऽदत्तालोचनस्तं, अत्रालोचनास्वरूपं यथा—जो आलोयणारिहो सो इमो दुविहो। 'आगम १ सुअववहारी २, आगमओ छव्विहो अ ववहारी। केवल १ मणो २ हि ३ चोदस ४—दस ५ नव ६ पुवी य णायवा ॥ १ ॥' आगमववहारी १ सुयववहारी य २, तत्थ जो सो आगमववहारी सो छविहो इमो—केवलणाणी १ मणपज्जवणाणी २ ओहिणाणी ३ चोदसपुव्वी ४ अभिण्णदसपुवी ५ णवपुवी य ६ एए आगमववहारी पच्चक्खणाणिणो जेण जहा अइयारो कओ तं तहा अतियारं जाणंति। तं च आगमववहारिस्स आलोएज्जमाणो जदि आलोयगो पडिकुंचति ॥ 'पम्हुट्ठे पडिसारणा, अपडिवज्जंतगं ण खलु सारे। जति पडिवज्जति सारे, दुविहइयारंपि

पच्चक्खो ॥ २ ॥' 'पम्हुट्ठे' त्ति विस्सरिए तं पच्चक्खणाणी णाउं पडिवज्जिस्सइ त्ति ताहे भणति अमुगं ते विस्सरियं तं आलोएहि, अह जाणइ न पडिवज्जति तो ण पडिसारेइ, दुविहो अइयारो–मूलगुणाइयारो उत्तरगुणाइआरो य, एवं पच्चक्खणाणी सम्मं आउट्टस्स देंति पच्छित्तं, अणाउट्टस्स ण देंति, एते पच्चक्खववहारी वुत्ता ॥ २ ॥ सेसा जे ते इमे सुयववहारी। 'कप्पपकप्पा उ सुए, आलोयावेंति ते उ तिक्खुत्तो। सरिसत्थे अपलिउंची विसरिसपलिउंचिअं जाणे ॥ ३ ॥' 'कप्पो' त्ति दसाकप्पववहारा, 'पकप्पो' त्ति णिसीहं, तुशब्दान्महाकप्पसुयं महाणिसीहणिसीहणिज्जुत्ती पेढियधरा य एवमादि सव्वे सुयववहारिणो ते य सुयववहारी २ एगवारालोइए पलिउंचिए अपलिउंचिए वा विसेसं ण जाणंति तेण कारणेण 'तिक्खुत्तो' त्ति णियमा तिण्णिवारे आलोयावेंति। एकवारा भणति ण सुट्ठु मए अवधारियं, बितियवाराए निद्दावसंगओ, ततियवाराए भणति अणुवउत्तेण किंचि णावधारियं, पुणो आलोएहि। जति तिहिं वाराहिं सरिसं चेव आलोतियं तो णायव्वं अपलिउंची, अह विसरिसं बुल्लवंतो य आलोएति, तो पलिउंचियं जाणियव्वं। तत्थ जो पलिउंची सो इमेण आसदिट्ठंतेण चोएयव्वो, दव्वाइचउविहपडिसेवणाए पलिउंची आगमसुअववहारिहिं भाणियव्वो, सुणेहि अज्जो! उदाहरणं जहा–एकस्स रण्णो आसो सव्वलक्खणजुत्तो धावणपवणसमत्थो तस्स आसस्स गुणेण य अजेयो सो राया, सामंतराइणो य सव्वे अज्जावेति। ताहे सामंतरायाणो अप्पप्पणो सभासु भणंति–अत्थि कोइ एयारिसो पुरिसो जो तं हरित्ता आणेति, सव्वेहिं भणियं सो पुरिसपंजरत्थो चिट्ठति गच्छति वा, णण्णो सक्कति हरिउं, एगस्स रण्णो एगेण पुरिसेण भणियं, जइ सो मारियव्वो तो मारेमि त्ति, ताहे रण्णा भणियं–मा अम्हं तस्स वा भवतु वावादेहि त्ति, तत्थ गतो सो तेण य छण्णपदेसट्ठिएण डिक्कखवणुहकंडस्स अंते खुद्दकंटकं लाएत्ता

विद्धो आसो, तं इसियाकंडगं आहणित्ता पडियं खुद्दकी कंटको वि आससरीरमणुपविट्ठो। सो पभूयजवजोगासणं चरंतो वि तेण अव्वत्तसल्लेण वाहिज्जमाणो परिहाइउमाढत्तो। ताहे वेज्जस्स अक्खाओ, वेज्जेण दिट्ठो भणियं च, णत्थि से कोति धाउविसंवादरोगो, अत्थि से कोइ अव्वत्तसल्लो, ताहे वेज्जेण जमगसमगं पुरिसेहिं कद्दमेण आलिंपाविओ, सो अ सल्लपएसो अतिउण्हत्तणओ पढमं सुक्को, तं फोडित्ता अवणीओ खुद्दकिकंटकसल्लो, सो अ पन्नत्तो सज्जो जाओ। बितिओ एवं अणुद्धियसल्लो मओ। इदाणिं उवसंहारो जहा सो आसो अणुद्धियसल्लो वलणं न गेण्हइ असमत्थो य जुद्धे मओ य। एवं तुमंपि ससल्लो करेंतो किरियकलावं संजमवुड्ढिं ण करेसि, ण य कम्मणो जयं करेसि, अजए य कम्मणो अणेगाणि जम्मणमरणाणि पाविहिसि णो य मोक्खत्थं साहेहिसि, तम्हा सव्वं सम्मं आलोएहि त्ति।" इति निशीथचूर्णिविंशोद्देशके, तथा "आलोअणा सपक्खे, चउकन्ना इह छकन्नपरपक्खे। संविग्गभाविएणं, दायव्व विहीइ जं भणिअं ॥ १ ॥" तथा "सल्लुद्धरणनिमित्तं, खित्तम्मि अ सत्त जोअणसयाइं। कालेण वार वरिसा, गीअत्थगवेसणं कुज्जा ॥१॥" तथा "आयरियाइ सगच्छे, संभोइयइयरगीअपासत्थे। सारूवीपच्छाकडदेवयपडिमाअरिहसिद्धे ॥ १ ॥" स्वगच्छे आचार्यादौ आचार्यसमीपे आदिशब्दादुपाध्यायादीनां वा पार्श्वे आलोचनाऽऽदेया, इयमत्र भावना—प्रायश्चित्तस्थानमापन्नेन साधुना श्राद्धेन वा नियमतः प्रथमं स्वकीयानामाचार्याणां समीपे आलोचयितव्यम्, तेषामभावे उपाध्यायस्य, तस्याप्यभावे प्रवर्त्तिनः, तस्याप्यभावे स्थविरस्य, तस्याप्यभावे गणावच्छेदिनो वा समीपे आलोचनाऽऽदेया। अथ स्वगच्छे पञ्चानामप्यभावस्तर्हि किं कार्यमित्याह—'संभोइय' त्ति स्वगच्छे आचार्यादीनामभावेऽन्यस्मिन् साम्भोगिके एकसामाचार्यादिवति गन्तव्यम्, तत्राप्याचार्यादिक्रमेणा-

लोचयितव्यम् । साम्भोगिकगच्छेऽपि पञ्चानामाचार्यादीनामभावे 'इयर'त्ति इतरोऽसाम्भोगिकः संविग्न इति, 'तस्मिन् गन्तव्यम्, तत्राप्याचार्यादिक्रमेणैवालोचयितव्यम् । संविग्नान्यसाम्भोगिकानां चाभावे 'गीय'त्ति पदैकदेशे पदसमुदायोपचाराद् गीतार्थः, एतच्च विशेषणं पार्श्वस्थसारूपिकपश्चात्कृतरूपाणां त्रयाणामपि योज्यम्, ततश्चायमर्थः—पार्श्वस्थस्य गीतार्थस्य समीपे आलोचयितव्यम् । तस्मिन्नपि गीतार्थे पार्श्वस्थेऽसति गीतार्थस्य सारूपिकस्य पार्श्वे संयतवेषस्य गृहस्थस्य लिङ्गमात्रधारिण इत्यर्थः । तस्मिन्नपि गीतार्थसारूपिकेऽसति पश्चात्कृतस्य गीतार्थस्य पार्श्वे आलोचयितव्यम्, पश्चात्कृतचरणस्य—परित्यक्तचारित्रवेषस्य गृहस्थस्य पार्श्वे इति यावत् । पार्श्वस्थादीनां च मध्ये यस्य पुरत आलोचना दातुमिष्यते तमभ्युत्थाप्य तस्य पुरत आलोचयितव्यम्, अभ्युत्थापनं नाम वन्दनकप्रतीच्छनादिकं प्रत्यभ्युपगमकारापणा अभ्युत्थिते वन्दनाप्रतीच्छनादिकं प्रतिकृताभ्युपगमे प्रतिक्रान्तो भवेत् नान्यथा, विनयमूलत्वाद्धर्म्मस्य । यदुक्तं—'विणओ सासणे मूलं' इत्यादि । अथ ते पार्श्वस्थादय आत्मानं हीनगुणं पश्यन्तो नाभ्युत्तिष्ठन्ति तदा पार्श्वस्थादीनां निषद्यामारचय्य प्रणाममात्रं कृत्वाऽऽलोचनीयम् । पश्चात्कृतस्य पुनरित्वरसामायिकारोपणं लिङ्गप्रदानं च कृत्वा यथाविधि तदन्तिके आलोचनीयम् । यदि पार्श्वस्थादिकोऽभ्युत्तिष्ठति तदा तेनान्यत्र गन्तव्यम्, येन प्रवचनलाघवं न भवति । तत्र च गत्वा तमापन्नप्रायश्चित्तं शुद्धतपो वाहयति मासादिकमुत्कर्षतः षण्मासपर्यवसानम् । अथ स नाभ्युत्तिष्ठति शुद्धं च तपस्तेन प्रायश्चित्ततया दत्तं, ततस्तं तत्रैव तपो वाहयतीति । पार्श्वस्थादीनामप्यभावे यत्र कोरण्टकादौ गुणशिलादौ वा भगवान् मुनिसुव्रतस्वाम्यादिः श्रीवर्द्धमानस्वाम्यादिर्वा समवसृतस्तत्र तीर्थकरैर्गणधरैश्च बहूनां बहूनि प्रायश्चित्तानि दत्तानि तानि च दीयमानानि तत्रस्थया देवतया दृष्टानि ततस्तत्र

गत्वा तत्र च सम्यक्त्वभावितदेवताराधनार्थमष्टमं कृत्वा तत्र च सम्यगाकम्पितायाः देवतायाः पुरतो यथोचितप्रतिपत्तिपुरस्सरमालोचयति, सा च प्रयच्छति यथार्हं प्रायश्चित्तम्। अथ सा देवता कदाचित् च्युता भवेत् पश्चादन्या समुत्पन्ना तया च न दृष्टस्तीर्थंकरस्ततः साष्टमेनाकम्पिता ब्रूते–महाविदेहे तीर्थकरमापृच्छ्य समागच्छामि, ततः सा तेनानुज्ञाता महाविदेहे गत्वा तीर्थकरं पृच्छति, पृष्ट्वा च समागत्य साध्वादिभ्यः प्रायश्चित्तं कथयति। तासामपि देवतानामभावे अर्हत्प्रतिमानां पुरतः स्वयं प्रायश्चित्तदानपरिज्ञानकुशल आलोचयति, ततश्च स्वयमेव प्रतिपद्यते प्रायश्चित्तम्। तासामप्यभावे प्राचीनादिदिगभिमुखोऽर्हतः सिद्धानभिसमीक्ष्य जानन् प्रायश्चित्तदानविधिविद्वानालोचयति, आलोच्य च स्वयमेव प्रायश्चित्तं प्रतिपद्यते। स च तथा प्रतिपद्यमानः शुद्ध एव सूत्रोक्त विधिना प्रवृत्तेरिति श्राद्धजीतकल्पे। तथाऽयमर्थः सविस्तरः श्रीव्यवहार प्रथमोद्देशकप्रान्तसूत्रवृत्तावप्यस्ति। तथा नित्यं–सदा कथा चतुर्द्धा शुभा, तद्विरुद्धा विकथा सप्तधा, तस्यां परायणस्तत्परस्तं, कथाविकथास्वरूपं स्थानाङ्गाद्युक्तं यथा–'चउव्विहा कहा, पं० तं० अक्खेवणी १ विक्खेवणी २ संवेयणी ३ निव्वेयणी ४।' व्याख्या–आक्षिप्यते मोहात्तत्त्वं प्रत्याकृष्यते श्रोता ययेत्याक्षेपणी २, विक्षिप्यते कुमार्गविमुखो विधीयते श्रोता यया सा विक्षेपणी २, संवेद्यते–मोक्षसुखाभिलाषी विधीयते यया सा संवेदनी ३, निर्वेद्यते–संसारनिर्विण्णो विधीयते श्रोता यया सा निर्वेदनी ४। अथैतासां भेदा यथा–"आयारे १ ववहारे २, पन्नत्ती चेव ३ दिट्ठिवाए य ४। एसा चउव्विहा खलु, कहाउ अक्खेवणी नाम ॥१॥" आचारो–लोचाऽस्नानादिः १, व्यवहारः–कथञ्चिदापन्नदोषव्यपोहाय प्रायश्चित्तलक्षणः २, प्रज्ञप्तिश्चैव–संशयापन्नस्य मधुरवचनैः प्रज्ञापनं ३, दृष्टिवादश्च–श्रोत्रपेक्षया सूक्ष्मजीवादिभावकथनं ४, अन्ये त्वाहुराचारादयो

ग्रन्था एव परिगृह्यन्ते आचाराद्यभिधानात्, एषा चतुर्विधा, खलुशब्दात् श्रोत्रपेक्षया आचारादिभेदानाश्रित्यानेकप्रकारा ॥ १ ॥ अस्या रसमाह—" विज्जाचरणं च तवो, पुरिसकारो य समिइगुत्तीओ । उवइस्सइ खलु जहियं, कहाइ अक्खेवणीइ रसो ॥१॥ " विद्या—ज्ञानं भावतमोभेदकं, चरणं—सर्वविरतिरूपं, तपो—ऽनशनादि, पुरुषकारश्च—कर्मशत्रून् प्रति स्ववीर्योत्कर्षलक्षणः, समितिगुप्तयः, एतदुपदिश्यते खलु यत्र क्वचिदसावुपदेशः कथाया आक्षेपण्या रसः ॥१॥ विक्षेपणीमाह—सा चतुर्द्धा—' पुव्विं ससमयं कहित्ता परसमयं कहेइ, ससमयगुणे दीवेइ, परसमयदोसे उवदंसेइ एसा पढमा १ । पुव्विं परसमयं कहित्ता तस्सेव दोसे उवदंसित्ता पुणो ससमयं कहेइ गुणे उवदंसेइ एसा बिइया २ । मिच्छावायं कहित्ता सम्मावायं कहेइ, परसमयं कहित्ता तेसु चेव परसमएसु जे भावा जिणप्पणीएहिं भावेहिं सह विरुद्धा असंता चेव विअप्पिआ ते पुव्विं कहित्ता दोसा य तेसिं भणिऊण पुणो जिणप्पणीयभावसारिसा घुणक्खरमिव कहवि सोभणा भणिया ते कहेइ, अहवा मिच्छावाओ नत्थित्तं सम्मावाओ अत्थित्तं, तत्थ पुव्विं नाहियवाईण दिट्ठीओ कहित्ता पच्छा अत्थित्तपक्खवाईणं दिट्ठीओ कहेइ एसा तइया ३ । सम्मावायं कहित्ता मिच्छावायं कहेइ, सोवि एवं चेव नवरं पुव्विं सोभणे कहेइ, पच्छा इयरे त्ति चउत्था । संवेअणी कहा चउव्विहा पं० तं० आयसरीरसंवेयणी १, परसरीरसं० २, इहलोयसं० ३, परलोयसं० ४ । तत्थ आयसरीरसंवेयणी जहा जमेयं अम्हच्चयं सरीरं, एअं सुक्कसोणियमंसवसामेदमज्जट्ठिण्हारुचम्मकेसरोमनहदंतअंतादिसंघायनिप्फण्णत्तणेण मुत्तपुरीसभायणत्तणेण य असुइ त्ति कहेमाणो सोयारस्स संवेगमुप्पाएइ एसा अत्तसरीरसंवेयणी १ । एवं परसरीरसंवेयणीइ परसरीरं एरिसं चेव असुइ, अहवा परसमयस्स सरीरं वण्णेमाणो सोयारस्स संवेगमुप्पाएइ २ । इयाणिं इह लोयसंवेयणी

जहा सव्वमेव माणुसत्तणं असारमधुवं कदलीथंभसमाणं एरिसं कहं कहेमाणो धम्मकही सोयारस्स संवेगं उप्पाएइ ३। इयाणिं परलोयसंवेयणी जहा देवावि ईसाविसायमयकोहलोहमायाइएहिं दुक्खेहिं अभिभूया किमंगपुण तिरियनारया, एयारिसं कहं कहेमाणो धम्मकही सोयारस्स संवेगमुप्पाएइ ४। निव्वेयणी कहा चउव्विहा पं० तं० इह लोगे दुच्चिण्णा कम्मा इह लोए चेव दुहविवागसंजुत्ता भवंति, जहा–चोराणं पारदारियाणं एवमाई एसा पढमा निव्वेयणी १। इह लोए दुच्चिण्णा कम्मा परलोए दुहविवागसंजुत्ता भवंति जहा–नेरइयाणं अन्नंमि भवे कम्मं कयं निरयभवे फलं देइ विइया निव्वेयणी २। परलोए दुच्चिण्णा कम्मा इह लोए दुहविवागसंजुत्ता भवंति, जहा–बालपभिइमेव अंतकुलेसु उप्पन्ना खयकोढाइएहिं रोगेहिं दारिद्देण य अभिभूया दीसंति तइया निव्वेयणी ३। परलोए दुच्चिण्णा कम्मा परलोए चेव दुहसंविवागसंजुत्ता भवंति, जहा–पुव्विं दुच्चिन्नेहिं कम्मेहिं जीवा संडासतुंडेहिं पक्खीहिं उ विज्झंति, तओ ते नरयपाउग्गाणि कम्माणि असंपुण्णाणि तीए जाईए पूरिंति पूरेऊण नरयभवे जंति चउत्था निव्वेयणी ४। एवं इह लोगो वा परलोगो वा पन्नवयं पडुच्च भवइ, तत्थ पन्नवयस्स मणुस्सभवो इह लोगो अवसेसाओ तिन्निवि गईओ परलोगो ४। तथा "एया चेव कहाओ,पन्नवगपरूवगं समासज्ज। अकहा १, कहा च २, विकहा ३, हविज्ज पुरिसंतरं पप्प ॥ १ ॥" अकथा १, कथा २, विकथानां ३ स्वरूपं यथा– "मिच्छत्तं वेयंतो, अन्नाणी जं कहं परिकहेइ। लिंगत्थो व गिही वा, सा अकहा देसिया समए ॥ २ ॥" मिथ्यात्वमोहनीयं कर्म्म वेदयन् विपाकेन यां काञ्चिदज्ञानी कथां कथयति, अज्ञानित्वं चास्य मिथ्यादृष्टित्वादेव, किंविशिष्टोऽसावित्याह लिङ्गस्थो वा द्रव्यप्रव्रजितोऽङ्गारमर्दकादिर्गृही वा कश्चित्, सा एवमकथा देशिता समये, विशिष्टकथाफला-

भावात् ॥ २ ॥ " तवसंजमगुणधारी, जं चरणरया कहंति सब्भावं । सवजगज्जीवहियं, सा उ कहा देसिया समए ॥ ३ ॥" तपःसंयमगुणधारिणो यच्चरणरता नत्वन्यत्र निदानादिना कथयन्ति सद्भावं-परमार्थं सर्वजगज्जीवहितं न तु व्यवहारतः कतिपयसत्वहितं सैव कथा देशिता समये निर्जराख्यफलसाधनात् ॥ ३ ॥ " जो संजओ पमत्तो, रागद्दोसवसगो परिकहेइ । सा उ विकहा पवयणे, पन्नत्ता धीरपुरिसेहिं ॥ ४ ॥ " यः संयतः प्रमत्तः कषायादिना प्रमादेन रागद्वेषवशगतः सन् न तु मध्यस्थः परिकथयति किञ्चित्, सा तु विकथा प्रवचने प्रज्ञप्ता धीरपुरुषैः, तथाविधपरिणामनिबन्धनत्वात् कर्तृश्रोत्रोरिति, श्रोतृपरिणामभेदे तु तं प्रति कथान्तरमेव । एवं सर्वत्र भावना कार्या इति । गाथाचतुष्कं श्रीदशवैकालिकनिर्युक्तिगतम् । अथ पूर्वोक्तविकथास्वरूपमाह-' विकहा सत्तहा, पं० तं० इत्थिकहा १ भत्तकहा २ देसकहा ३ रायकहा ४ मिउकालुणिया ५ दंसणभेइणी ६ चरित्तभेइणी ७ ॥' व्याख्या-इत्थीणं कहा इत्थिकहा, पसंसानिंदासरूवा जहा-' सा तणुयतणू सुभगा, सोममुही पउमपत्तनयणिल्ला । गुरुयनियंबा उन्नय-पओहरा ललियगयगमणा ॥ १ ॥' तहा ' करहगई कागसरा य, दुब्भगा लंबजठरपिंगच्छी । दुस्सीला दुब्भासा, विद्धी को नियइ तीइ मुहं ॥ १ ॥' अस्यां चात्मपरमोहोदीरणोड्डाहस्वाध्यायसंयमयोगपरिहाणि ब्रह्मव्रतागुप्तिप्रसङ्गादयो दोषा भवेयुः १ । भत्तकहा जहा-' घयखंड जुयं खीररस, भोयणं अमियमइह मणुयाणं । कयसालिदालिअसणं, वंजणपक्कन्नवयसारं ॥ १ ॥' अस्यां चाहारगृद्धिलोकापवादरसनेन्द्रियाजयषड्जीवनिकायवधानुमोदनादयो दोषा भवन्ति २ । देसकहा जहा-' रम्यो मालवकः सुधान्यजनकः काञ्च्यास्तु किं वर्ण्यते, दुर्गा गूर्जरभूमिरुद्भटभटा लाटाः किराटोपमाः । काश्मीरे वरमुख्यता सुखनिधौ स्वर्गोपमाः कुन्तला, वर्ज्या

दुर्जनसङ्गवच्छुभधिया देशी कथैवंविधा ॥ १ ॥' एतस्यां च रागद्वेषोत्पत्तिस्वपक्षपरपक्षाधिकरणादयो दोषाः प्रादुःष्यन्ति ३ । राजकथा यथा—" राजाऽयं रिपुवारदारणसहः क्षेमङ्करश्चौरहा, युद्धं भीममभूत्तयोः प्रतिकृतं साऽवस्य तेनाथवा । दुष्टोऽयं म्रियतां करोतु सुचिरं राज्यं ममाप्यायुषा, भूयो बन्धनिबन्धनं बुधजनै राज्ञां कथा हीयताम् ॥१॥" अस्यां च चौरहेरिकादिशंकाकौतुकनिदानादयो दोषाः स्युः ॥ ४ ॥ ' मिउकालुणिय ' त्ति श्रोतृहृदयमार्दवजननान्मृद्वी साचासौ पुत्रादिप्रलापप्रधानत्वात्कारुण्यवती मृदुकारुणिकी यथा—' हा पुत्त पुत्त हा वच्छ, वच्छ मुक्का सि कहमणाहा हं । एवं कलुणपलावा, जलंतजलणेऽज्ज सा पडिया ॥५॥ ' दर्शनभेदिनी ज्ञानाद्यतिशयतः कुतीर्थिकप्रसंसारूपा यथा—' सूक्ष्मयुक्तिशतोपेतं, सूक्ष्मबुद्धिकरं परम् । सूक्ष्मार्थदर्शिभिर्दृष्टं, श्रोतव्यं बौद्धशासनम् ॥ ६ ॥ ' चारित्तभेइणी जीसे कहाइ पडिवन्नवयस्स वा उवट्ठियस्स वा दिक्खाए चारित्तं पइभेओ भवइ जहा—" केवलिमणोहिचोद्दस-दस नवपुव्वीहिं संपयं रहिए । सुद्धमसुद्धं चरणं, को जाणइ तस्स भावं वा ॥ १ ॥ " अन्नं च ' जह मंचाओ पडियस्स, देहपीडा सुथोविया होइ । गिरिसिहराओ महती, तहणंतभवो तओ भट्ठा ॥ १ ॥ ' तहा ' काले पमायबहुले, दंसणनाणेहिं वट्टए तित्थं । वुच्छिन्नं च चरित्तं, तो गिहिधम्मो वरं काउं ॥ १ ॥ ' एवं च ' इत्थिकहमाइआओ, बहुरूवाओ कुणंति विकहाओ । रागद्दोसेहिं मुहा—ऽइकम्मबंधं कुणइ मूढो ॥ १ ॥ ' अहवा विविहरूवा परपरिवाइयाण कहा विकहेति हे इन्द्रभूते ! एवंविधं सूरिमुन्मार्गगामिनं जानीहीति शेषः । इमे अनुष्टुब्विषमाक्षरेति गाथाछन्दसी ॥ १० ॥ ११ ॥ पूर्वगाथायामदत्तालोचनत्वमधमाचार्यस्य चिन्हमुक्तमतो गुणवताऽप्याचार्येण परसाक्षिकी विशोधिः कर्त्तव्येत्याह—

छत्तीसगुणसमण्णा-गएण तेणवि अवस्स कायव्वा । परसक्खिया विसोही, सुट्ठुवि ववहारकुसलेणं॥१२॥

व्याख्या–षट्त्रिंशत् ये गुणाः सूरिगुणा आर्यदेशोत्पन्नत्वादयः "देस १, कुल २, जाति ३, रूवी ४, संघयणी ५, थिइजुओ ६, अणासंसी ७। अविकत्थणो ८, अमाई ९, थिरपरिवाडी १० गहिअवक्को ११ ॥ १ ॥ जिअपरिसो १२ जिअनिद्दो १३, मज्झत्थो १४ देस १५ काल १६ भावन्नू १७। आसन्नलद्धपइभो १८, नाणाविहदेसभासन्नू १९ ॥ २ ॥ पंचविहे आयारे २४ जुत्तो, सुत्तत्थतदुभयविहिन्नू । आहरण २६ हेउ २७ उवणय २८–नयनिउणो गाहणाकुसलो ३० ॥ ३ ॥ ससमयपरसमयविऊ ३१, गंभीरो ३२ दित्तिमं ३३ सिवो ३४ सोमो ३५ । गुणसयकलिओ ३६ जुग्गो, पवयणसारं परिकहेउं ॥ ४ ॥" इति गाथा चतुष्टयोक्तस्तत्र आर्यदेशोत्पन्नः सुखावबोधवाक्यः स्यात् १, पैतृकं कुलं सुकुलोद्भवो यथोत्क्षिप्तभारोद्वहने न श्राम्यति २, मातृकी जातिस्तत्सम्पन्नो विनयान्वितः स्यात् ३, रूपवान् आदेयवाक्यः स्यादाकृतौ गुणा वसन्तीति ४, संहननयुक्तो व्याख्यानादिषु न श्राम्यति ५, धृतिः–चित्तावष्टम्भस्तद्युतो गहनेष्वर्थेषु न भ्रमं याति ६, अनाशंसी न श्रोतृभ्यो वस्त्राद्याकाङ्क्षति ७, अविकत्थनो न बहुभाषी स्यात् ८, अमायी–त्यक्तशाठ्यः ९, स्थिरपरिपाटिः तस्य हि सूत्रमर्थश्च न गलति १०, गृहीतवाक्यः सर्वत्रास्खलिताज्ञः स्यात् ११, जितपर्षत् राजादिसदसि न क्षोभमुपयाति १२, जितनिद्रोऽल्पनिद्रः १३, मध्यस्थः–सर्वशिष्येषु समचित्तो १४, देशकालभावज्ञः सुखेन विहरति १५, १६, १७, आसन्नलब्धप्रतिभः परतीर्थिकादीनामुत्तरदानसमर्थः १८, नानाविधदेशभाषाज्ञो नानादेशजविनेयान् सुखेन शास्त्राणि ग्राहयति १९, पञ्चविधाचारयुतः श्रद्धेयवचनः स्यात् २४, सूत्रार्थोभयज्ञः सम्यगुत्सर्गापवादप्ररूपकः तस्या २५, आहरणं–दृष्टान्तः २६, हेतुर्द्विधा

कारको ज्ञापकश्च, तत्र कारको यथा—घटस्य कर्त्ता कुम्भकारः, ज्ञापको यथा—तमसि घटादीनामभिव्यञ्जकः प्रदीपः २७, उपनय—उपसंहारो दृष्टान्तदृष्टस्यार्थस्य प्रकृते योजनमिति भावः, क्वचित् कारणं—निमित्तं २८, नया नैगमादयस्तेषु निपुणः २९, स हि श्रोतारमपेक्ष्य तत् प्रतिपत्त्यनुरोधतः क्वचित् दृष्टान्तोपन्यासं २६, क्वचिद्धेतूपन्यासं विदधाति २७, क्वचित् अधिकृतमर्थमुपसंहरति २८, नयप्रस्तावे नयानवतारयति २९ ग्राहणाकुशलः—प्रतिपादनशक्तियुक्तः ३०, स्वसमयं परसमयं च वेत्ति परेणाक्षिप्त उभयं निर्वाहयति ३१, गम्भीरो—ऽतुच्छस्वभावः ३२, दीप्तिमान् परवादिनामक्षोभ्यः ३३, शिवो—मारिरोगाद्युपद्रवविघातकृत् ३४, सौम्यः—शान्तदृष्टितया प्रीत्युत्पादकः ३५, गुणशतकलितः—औदार्यस्थैर्याद्यनेकगुणोपेतः ३६ तैः समन्वागतेन—संयुक्तेन तेनापि—सूरिणाऽपि अन्य आस्तामवश्यं—निश्चयेन कर्त्तव्या, अनुस्वारलोपः प्राकृतत्वात् परसाक्षिकीका विशेषेण शोधिर्विशोधिर्निजपापप्रकटनमित्यर्थः । किं विशिष्टेन सूरिणा सुष्ठ्वतिशयेन व्यवहरणं व्यवहारः पञ्चविधः, तत्र कुशलो—निपुणस्तेन। व्यवहारस्वरूपं यथा "आगम १, सुय २, आणा ३, धारणा य ४, जीयं च होइ ववहारो। केवलिमणोहिचोद्दस—दसनवपुव्वी अ पढमत्थो १ ॥ १ ॥ आयारपकप्पाई, सेसं सव्वं सुयं विणिद्दिट्ठं २ । देसंतरट्ठियाणं, गूढपयालोयणा आणा ३ ॥ २ ॥ गीयत्थाओ पुव्विं, अवधारइ धारणा तहिं दिंते ४ । पायच्छित्तं जीयं, जीयं वा जं जहिं गच्छे ५ ॥ ३ ॥" अपिशब्दादनेकभव्यानां विधिना दत्ताऽऽलोचनेनापि इति गाथाच्छन्दः ॥ १२ ॥ केन दृष्टान्तेनाऽऽलोचनां गृण्हातीत्याह—

**जह सुकुसलो वि विज्जो, अण्णस्स कहेइ अत्तणो वाहिं । विज्जुवएसं सुच्चा, पच्छा सो कम्ममायरइ॥१३॥**

व्याख्या—यथा सुट्ठु कुशलोऽपि—भिषक्शास्त्रे निपुणोऽपि अपिशब्दाद्वयःप्राप्तोऽपि वैद्यः—चिकित्साकर्त्ता आत्मनः—स्व-

स्य व्याधिं– रोगोत्पत्तिमन्यस्य वैद्यस्य कथयति–यथास्थितं निरूपयति वैद्योपदेशं–वैद्यनिरूपितं श्रुत्वा-ऽऽकर्ण्य पश्चात् स वैद्यस्त द्वैद्योक्तं कर्मप्रतीकाररूपमाचरति–करोतीत्यर्थः । एवमालोचकः सूरिरपि अन्यपार्श्वे पापं प्रकाशयति । तदर्पितं च तपो यथाविधि प्रतिपद्यते इति । गाथाछन्दः ॥ १३ ॥ पुनः सद्गुरुस्वरूपं दर्शयति—

**देसं खित्तं तु जाणित्ता, वत्थं पत्तं उवस्सयं। संगहे साहुवग्गं च, सुत्तत्थं च निहालई ॥ १४ ॥**

व्याख्या–आचार्यो देशं मालवकादिकं, क्षेत्रं रूक्षारूक्षभाविताभावितादिरूपं, तु शब्दाद् ग्लानादियोग्यं द्रव्यं, दुर्भिक्षादिकालं, दातृपरिणामादिरूपं भावं च ज्ञात्वा वस्त्रं–चीवरं, पात्रं–पतद्ग्रहादि, उपाश्रयं–मुनियोग्यालयं, सङ्गृह्णीत, कोऽर्थ आचार्यः क्षेत्रादिकारणं ज्ञात्वा वस्त्रादिकं मेलयित्वा प्रायो गृहस्थानामदर्शयन् स्वपार्श्वे एव संरक्षेत्, न तु यथाकथञ्चिदित्यर्थः । यदुक्तं स्थानाङ्गसप्तमस्थाने " आयरियउवज्झायाणं गणंसि सत्तसंगहठाणा पं० तं० आयरियउवज्झाए गणंसि आणं वा धारणं वा सम्मं पउंजित्ता भवति १, आयरियउवज्झाए गणंसि अहाराइणिआए कितिकम्मं वेणइअं सम्मं पउंजित्ता भवइ २, आयरियउवज्झाए गणंसि जे सुअपज्जवजाए धारेति ते काले काले सम्मं अणुप्पवाएत्ता भवइ ३, आयरियउवज्झाए गणंसि गिलाणसेहे वेआवच्चं अब्भुट्ठित्ता भवति ४, आयरियउवज्झाए गणंसि आपुच्छित्तचारी आविहवइ णो अणापुच्छित्तचारी ५, आयरियउवज्झाए गणंसि अणुप्पन्नाइं उवगरणाइं सम्मं उप्पाएत्ता भवइ ६, आयरियउवज्झाए गणंसि पुव्वुप्पण्णाइं उवगरणाइं सम्मं सारक्खित्ता संगोवित्ता भवति ७। " अस्य किञ्चिद्व्याख्या यथा–सङ्ग्रहो ज्ञानादीनां शिष्याणां वा तस्य स्थानानि–हेतवः, आज्ञा–साधो ! भवतेदं विधेयमित्येवंरूपामादिष्टिं, धारणां–न विधेयमिदमित्येवंरूपां सम्मं–औचित्येन १,

'अहा'० यथाज्येष्ठं कृतिकर्म वैनयिकं च २, 'जे'त्ति यानि श्रुतपर्यवजातानि सूत्रार्थप्रकारात् 'ते'त्ति तानि 'काले काले'यथावसरं 'अणुप्पवाएत्ता' अनुप्रवाचयिता पाठयतीत्यर्थः ३, अभ्युत्थाता-अभ्युपगंता भवति ४, आपृच्छ्य चरति क्षेत्रान्तरसङ्क्रमं करोति ५, 'अणुप्पन्नाइं' अनुत्पन्नान्यलब्धानि ६, 'सारक्खित्ता' संरक्षयितोपायेन चौरादिभ्यः 'संगोवित्ता' सङ्गोपयिताऽल्पसागारिककरणेन मलिनता रक्षणेन चेति ७। वस्त्रस्वरूपं किञ्चिद् यथा-इह यद्वस्त्रं प्रथमं लभ्यमानं भवति, तस्य प्रथमतस्त्रयो भागाः कल्प्यन्ते, भूयोऽप्येकैको भागस्त्रिधा विभज्यते, एवं नवभागीकृते वस्त्रे ये चत्वारः कोणकास्ते देवसम्बन्धिनो भागाः, यौ द्वावञ्चलमध्यभागौ तौ मनुष्यसम्बन्धिनौ, यौ च द्वौ भागौ कर्णपट्टिकामध्यलक्षणौ तावसुरसम्बन्धिनौ, सर्वमध्यगतः पुनरेको भागो राक्षससक्तः। यदुक्तं-'चउरो दिव्विआ भागा, दुवे भागा य माणुसा। आसुरा य दुवे भागा, मज्झे वत्थस्स रक्खसो ॥ १ ॥' एतेषु च नवसु भागेषु अञ्जनखञ्जनकर्दमैः खरण्टितेषु मूषककंसारिकादिभिर्भक्षितेषु अग्निना दग्धेषु तुन्नितेषु रजककुट्टनेन पतितच्छिद्रेषु जीर्णेषु कुत्सितवर्णान्तरसंयुक्तेषु वा फलमिदमवबोद्धव्यम्, "दिव्वेसु उत्तमो लाभो, मणुस्सेसु अ मज्झिमो। असुरेसु अ गेलन्नं, मज्झे मरणमाइसे ॥ १ ॥' ततो यौ द्वावसुरौ भागौ यश्चैको राक्षसो भागः एतेषु त्रिषु भागेषु यद्वस्त्रमञ्जनादिभिर्दूषितं भवति, तस्मिन् वस्त्रे गृह्यमाणे गुरुकाश्चत्वारो भवन्ति, आत्मविराधनासद्भावात्, आज्ञा च भगवतां विराधिता भवति, अतो यद्वस्त्रं निर्दोषं लक्षणोपेतं च स्यात् तत्साधुभिः संग्र-

| | | |
|---|---|---|
| देव | असुर | देव |
| मनुष्य | राक्षस | मनुष्य |
| देव | असुर | देव |

मनिर्वाहनिमित्तं ग्राह्यम्, न पुनः कृत्स्नं वस्त्रं । तच्च चतुर्धा, द्रव्यकृत्स्नं क्षेत्रकृत्स्नं कालकृत्स्नं भावकृत्स्नं च । तत्र यत् सदशं प्रमाणातिरिक्तं वा वस्त्रं तद्द्रव्यकृत्स्नं, यद्वस्त्रं यत्र क्षेत्रे दुर्लभं बहुमूल्यं वा तत्तत्र क्षेत्रकृत्स्नं, यद्वस्त्रं यस्मिन् कालेऽर्घितं दुर्लभं वा तत्तस्मिन् काले कालकृत्स्नं, यथा ग्रीष्मे काषायवस्त्रं, शिशिरे प्रावारादि, वर्षासु कुंकमादिखचितं, भावकृत्स्नं द्विधा, वर्णतो मूल्यतश्च, वर्णतः पञ्चविधं वर्णाढ्यं यथा–कृष्णं मयूरग्रीवासन्निभं, नीलं शुकपिच्छसन्निभं, रक्तं इन्द्रगोपकसन्निभं, पीतं सुवर्णच्छविसन्निभं, शुक्लं शङ्खेन्दुसन्निभं, तदेवंविधं वर्णकृत्स्नं । द्रव्यादिकृत्स्ने वर्णकृत्स्ने चोत्कृष्टे चतुर्लघु, मध्यमे मासलघु, जघन्ये पञ्चकं । मूल्यकृत्स्नं पुनस्त्रिविधं जघन्यं मध्यममुत्कृष्टं च । तत्र यस्याष्टादशरूपका मूल्यं तज्जघन्यं, लक्षरूपकमूल्यमुत्कृष्टं, शेषं मध्यमं । रूपकप्रमाणं चेदम्–द्वीपसत्करूपकद्विकेनोत्तरापथरूपक एकः स्यात्, तद्द्वयेन चैकः पाटलिपुत्रीयो रूपकः, अथवा दक्षिणापथरूपकद्वयेन कांचिपुरीयरूपकः एकः स्यात्, तद्द्वयेन च पाटलिपुत्रीय एकः रूपकोऽत्रावगन्तव्यः । १८ रूपकमूल्ये वस्त्रे लघुमासः, २० रूपके चतुर्लघु, १०० रूपके चतुर्गुरु, २५० रूपके षड्लघु, ५०० रूपके षड्गुरुः, सहस्ररूपके छेदः, दशसहस्ररूपके मूलं, पञ्चाशत्सहस्ररूपकमूल्येऽनवस्थाप्यम्, लक्षरूपकमूल्ये पाराञ्चिकम् । कृत्स्नवस्त्रबहुमूल्यपात्रग्रहणे च चौराद्यनर्थः । इत्थ दिट्ठंतो–एगो राया आयरियाण उवसमइ, सो सव्वं गच्छं कंबलरयणेहिं पाडिलाभिउं उवट्ठिओ, आयरिएहिं निसिद्धो न वट्टइ त्ति, अतिनिबंधेणं एगं गहिअं, भण्णइ पाउएणं हट्टमग्गेणं गच्छह, तहा कयं तेणगेण दिट्ठा, रातिं आगंतुं तेणगेण भणिअं–जइ न देह वत्थं रायदिन्नं तो भे सिरच्छेअं करेमि, आयरिएहिं भणिअं–खंडिअं दंसेह, दंसिअं, रुट्ठो भणेति, सिव्विउं देह अन्नहा भे मारेमि, तं च सिव्विउं दिण्णं, एवमनेके दोषाः स्वयं ज्ञेयाः । इतिश्री सोम-

प्रभसूरिविरचितयतिजितकल्पनामकप्रकरणश्रीसाधुरत्नसूरिकृतवृत्तौ । अथ गच्छवासी साधुर्वस्त्रं कथं मार्गयति ? केन वा विधिना ? उच्यते यद्यस्य साधोः कल्पादिकं वस्त्रं नास्ति स तत्प्रवर्त्तिनः कथयति यथा ममामुकं वस्त्रं नास्ति, प्रवर्त्यपि आचार्यस्य कथयति अमुकस्य साधोरमुकं वस्त्रं नास्ति, गच्छे चाभिग्रहिका भवन्ति, अस्माभिर्वस्त्राणि पात्राणि वा आनेतव्यानि । अन्यदपि वा येन केनचित्साधुना प्रयोजनं तदा आचार्यस्तेषां निवेदयति–यथा आर्या अमुकं वस्त्रं नास्ति । अथ न सन्त्याभिग्रहिकास्तदा स एव साधुर्भण्यते त्वमात्मना वस्त्रमुत्पादय । अथ स उत्पादयितुमशक्तः ततो योऽन्यः शक्तस्तमाचार्यो व्यापारयति यथा–अमुकं वस्त्रं मार्गयेति । य आभिग्रहिको यो वा व्यापारितस्तौ केन विधिनोत्पादयतः ? उच्यते सूत्रपौरुषीमर्थपौरुषीं च कृत्वा भिक्षामेव हिण्डमानावुत्पादयतः, यदि भिक्षां हिण्डमानौ न लभेते तदाऽर्थपौरुष्यामपि मार्गयतः, तथाऽप्यलाभे सूत्रपौरुष्यामपि सूत्रं वर्जयित्वा मार्गयतः, यद्येवमपि न लभ्यते तदैकैकं सङ्घाटकं आचार्यो व्यापारयति, आर्या ! यूयं भिक्षामेव हिण्डमाना वस्त्राणां योगं कुर्यास्तदा तेऽपि मार्गयन्ति, तथाऽप्यलभ्यमाने वहूनि वा वस्त्राणि उत्पादयितव्यानि, वृन्दसाध्यानि च कार्याणीति कृत्वा पिण्डकेन सर्वेऽप्युत्तिष्ठन्ति आचार्यं मुक्त्वा, यद्याचार्यः स्वयं हिण्डते तदा चतुर्गुरुका अन्ये च वहवो दोषाः । ये चाचार्यव्यतिरिक्तास्ते पुनः सर्वे गीतार्थाः, अथवा अर्द्धा गीतार्था अर्द्धा अगीतार्थाः, अथवा एको गीतार्थः शेषाः सर्वेऽगीतार्थाः, अथवा आचार्यं मुक्त्वा शेषाः सर्वेऽप्यगीतार्थाः, तदा यस्तेषामगीतार्थानां मध्ये वाग्मी लब्धिसम्पन्नश्च तस्याचार्यो वस्त्रैषणामुत्सर्गापवादाभ्यां कथयति । इत्यादि वस्त्रोत्पादनविधिः सविस्तरःश्रीनिशीथपञ्चदशोद्देशकचूर्णितोऽवसेयः । तथा वर्षाकाले यत्र क्षेत्रे चातुर्मासकं स्थितास्तत्पूर्त्तावपि तत्राऽन्यत्रापि च संविग्नक्षेत्रे सक्रोशयोजनप्रमाणे कारणं

विना मासद्वयं यावन्नोपकरणग्रहणं कुर्युः, पार्श्वस्थादिक्षेत्रे तु मासद्वयमध्येऽप्युपकरणग्रहणे न दोषः, ऋतुबद्धकाले च यत्र मासकल्पं स्थितास्तत्राप्युत्कर्षतः कारणं विना मासद्वयं परिहृत्योपकरणग्रहणं कुर्युः। एतदपि विस्तरतो निशीथदशमोद्देशक चूर्णितो निर्णेयम्। 'तथा जे भिक्खू वत्थस्स एगं पडिआणिअं देइ, देंतं वा साइज्जइ' यो वस्त्रस्य एकं थिग्गलं ददाति ददतं वा स्वादयति—अनुमोदयति तस्य दोषाः। द्वौ कल्पौ सौत्रिकौ एकः और्णिको ग्राह्यः। वर्षाकालं विना और्णिकः एकको न व्यापार्यः, मध्ये सौत्रिको बहिरौर्णिक इति विधिपरिभोगः। और्णिके शरीरे लग्ने षट्पदिकादिजन्तुसंसक्त्यादिदोषाः स्युः। 'जे भिक्खू वत्थस्स परं तिण्हं पडिआणिआणं देइ देंतं वा साइज्जइ।' यः कारणे त्रयाणां थिग्गलानां परतश्चतुर्थं थिग्गलं ददाति तस्य प्रायश्चित्तं। 'जे भिक्खू अविहीए वत्थं सिवइ, सिवंतं वा साइज्जइ' अविधिसीवनं यथा गृहस्थानां पार्श्वद्वय मीलनेन सीवनं तथा न सीव्येत्। 'जे भिक्खू वत्थस्स एगं फालिअगंठिअं करेइ, करेंतं वा साइज्जइ' पाटितवस्त्रस्योभयोरञ्चलयोर्मीलनेन ग्रन्थिं ददाति अधिकं मा पाट्यत्विति। 'जे भिक्खू वत्थस्स परं तिण्हं फालिअगंठियाणं करेइ, करेंतं वा साइज्जइ' वस्त्रे ग्रन्थिस्तावदुत्सर्गतो न कार्यः, यदि च वस्त्रस्यालाभे ग्रन्थिं करोति, तदा त्रयाणां ग्रन्थीनामधिकं ग्रन्थिं न कुर्यात्। 'जे भिक्खू वत्थं अविहीए गंठेइ, गंठेंतं वा साइज्जइ'। सुगमम्। 'जे भिक्खू वत्थं अतज्जाएण गंठेइ।' योऽतज्जातीयेन वस्त्रेण ग्रन्थिं कुर्यात्, श्वेतवस्त्रं रक्तादिना न सीव्यम्—न योज्यम्, यो योजयति अतज्जातीयेन सीव्यति च तस्य दोषाः। 'जे भिक्खू अइरेगं वत्थं गवेसइ, गवेसंतं वा साइज्जइ। जे भिक्खू अइरेगगहिअं वत्थं परेण दिवड्ढाओ मासाओ धरेइ, धरेंतं वा साइज्जइ।' योऽधिकं वस्त्रं गृहीत्वा सार्द्धमासात्परतो धारयेत्, तस्याज्ञादि

दोषाः मासगुरुप्रायश्चित्तं च। इति निशीथसूत्रप्रथमोद्देशके। अथ पात्रम्, तत्र एकादित्रिपर्यन्तकार्षापणमूल्ये पात्रे गृह्यमाणे लघुमासः, चतुराद्यष्टादशपर्यन्तकार्षापणमूल्ये गुरुमासः, अग्रतो मूल्यवृद्धौ प्रायश्चित्तवृद्धिर्वस्त्रवत्पात्रेऽप्यवसेया। तथा— "तुंवयदारुअमट्टिअ—पायं उक्कोसमज्झिमजहन्नं। उप्परिवाडी गहणे, चाउम्मासा भवे लहुगा ॥ १ ॥" पात्रं त्रिविधम्—तुम्बकमयं दारुमयं मृत्तिकामयं। एकैकं त्रिविधम्—उत्कृष्टं मध्यमं जघन्यं, उत्कृष्टं पतद्ग्रहः, मध्यमं मात्रकं, जघन्यं टोप्परिकादि। एकैकं पुनस्त्रिधा यथाकृतमल्पपरिकर्म बहुपरिकर्म च। तत्र यथाकृतं यत्पूर्वमेव कृतमुखं कृतलेपं तादृशं कुत्रिकापणे लभ्यते, निन्हवो वा, प्रतिमाप्रतिनिवृत्तः श्रमणोपासको वा तादृशं ददाति। अर्द्धाङ्गुलं यावच्छेद्यं स्यात् तदल्पपरिकर्म। यदर्द्धाङ्गुलात्परतः छेद्यं भवति तद्बहुपरिकर्म। एतेषां पात्राणामुत्परिपाट्या विपर्यासेन ग्रहणे चत्वारो मासाः लघुका भवन्ति, उपलक्षणत्वाल्लघुमासरात्रिंदिवपञ्चकेऽपि। इदमुक्तं भवति—उत्कृष्टस्य यथाकृतस्य पात्रस्योत्पादनाय निर्गतस्तस्य योगं त्रिःपर्यटनरूपं अकृत्वाऽल्पपरिकर्म उत्कृष्टमेव गृण्हाति चतुर्लघु। बहुपरिकर्म वा प्रथमत एव गृण्हाति चतुर्लघु। यदा यथाकृतं योगे कृतेऽपि न लभ्यते, तदाऽल्पपरिकर्म गवेषणीयम्, तस्योत्पादनाय निर्गतः प्रथमत एव बहुपरिकर्म गृण्हाति चतुर्लघु। इति त्रीणि चतुर्लघुकानि। एवं मध्यमस्यापि त्रिषु स्थानेषु त्रीणि मासिकानि। जघन्यस्य स्थानकत्रयेऽपि त्रीणि रात्रिंदिवपञ्चकानि। यथा यथाकृतादिविपर्यस्तग्रहणे प्रायश्चित्तं तथोत्कृष्टादीनामपि परस्परं विपर्यस्तग्रहणे प्रायश्चित्तम्। तद्यथा—उत्कृष्टस्य प्रतिग्रहस्यार्थाय निर्गतो मध्यमं मात्रकं गृण्हाति मासिकं, जघन्यं टोप्परिकादि गृण्हाति पञ्चकम्। मध्यमस्य निर्गतः उत्कृष्टं गृण्हाति चतुर्लघु, जघन्यं गृण्हाति पञ्चकं। जघन्यस्य निर्गतः उत्कृष्टं गृण्हाति चतुर्लघु, मध्यमं गृण्हाति मासिकं। इत्यादि

यतिजीतकल्पनामकप्रकरणवृत्तौ ॥ अथ किंचिन्निशीथसूत्रोक्तं–यथा 'जे भिक्खू पायस्स एगं तुडिअं तड्डेइ, तड्डेंतं वा साइज्जइ।' 'तुडिअं'ति थिग्गलं। 'तड्डेइ' ददाति। 'जे भिक्खू पायस्स परं तिण्हं तुडिआणं तड्डेइ, तड्डेंतं वा साइज्जइ।' यस्त्रयाणां थिग्गलानां परतश्चतुर्थं थिग्गलं ददाति, तस्याज्ञादयो दोषाः। कोऽर्थः–पूर्वं तावत्परिकर्मणा वर्जितं पात्रं ग्राह्यम्, तदभावे सपरिकर्म, तत्र कारणे थिग्गलं दातव्यम्। अस्थिरं दुर्बलं (यत्) पात्रम्, तत्र भैक्ष्ये गृहीते पात्रं भज्यते, प्रातिहारिकं वा पात्रं धनिकोऽसमयेऽप्युद्दालयति, अथवा यत्पात्रं सत्तायां भवति तल्लघु, यत्र देशे तुम्बकादि पात्राणि लभ्यन्ते तत्र मार्गादि-भयात् गमनं दुष्करम्, एवं प्रकारैः कारणैः पात्रे थिग्गलमेकं द्वे त्रीणि वा दद्यात्, परं चतुर्थस्य दाने आज्ञादिदोषाः। पात्रस्य थिग्गले बन्धविधिमाह–'जे भिक्खू पायं अविहीए बंधइ, बंधेंतं वा साइज्जइ। जे भिक्खू एगेणं बंधेणं बंधइ, बंधेंतं वा साइज्जइ। जे भिक्खू पायं परं तिण्हं बंधाणं बंधइ, बंधेंतं वा साइज्जइ।' एषां समुदायार्थः–स्वस्तिकबन्धः स्तेनबन्धश्चा-विधिबन्धः। मुद्रिकासंस्थानो बन्धो नौसंस्थानो बन्धश्च विधिबन्धः। विधिना बन्धनीयम्। उत्सर्गतस्तु बन्धरहितं पात्रं ग्राह्यम्, तदभावे एको बन्धः कार्यः, तस्याप्यभावे द्वौ बन्धौ भवतः तादृक् पात्रं ग्राह्यम्, तस्याप्यभावे त्रिबन्धं ग्राह्यम्, चतुर्थो बन्धो न कार्यः। 'जे भिक्खू अइरेगबंधणं पायं दिवड्ढाओ मासाओ परेण धरइ, धरेंतं वा साइज्जइ।' अस्यार्थः–यो बन्धत्रयातिरिक्तबन्धनं पात्रं सार्धमासात्परतो धारयति तस्याज्ञादिदोषाः। अतिरिक्तबन्धनं पद्मोत्पलनाभियुक्तं च पात्रमप-लक्षणत्वान्न धारणीयम्। तस्मिन् धृते शेषोपकरणविनाशः, ज्ञानादिविराधना, शरीरस्य पीडा, भैक्ष्यं न लभ्यते, इत्यादि-संयमात्मविराधनासद्भावात्सुलक्षणं पात्रं समचतुरस्रं वृत्तं वा यद्भूमौ मुक्तं स्थिरं तिष्ठति तद् ग्राह्यम्। अत्र वस्त्रस्य पात्रस्य

च गणनाप्रमाणं प्रमाणप्रमाणं च श्रीनिशीथसूत्रषोडशोद्देशकचूर्णितः श्रीबृहत्कल्पतृतीयोद्देशकवृत्तितश्च सविस्तरमवसेयम्, विस्तरभयान्नेह लिखितमिति । अथ वसतिसङ्ग्रहो यथा–यदा वसतिः सङ्कीर्णा मुनयस्तु प्रचुरास्तदा एकद्व्याद्यास्ताः प्रतिलेखनीयाः, चतुर्मासकेऽपि वसतित्रयं प्रतिलेखनीयम् । अथ प्रसङ्गतो वसतिस्वरूपं किञ्चिल्लिख्यते–"मूलुत्तरगुणसुद्धं, थीपसुपंडगविवज्जियं वसहिं । सेवेज्ज सव्वकालं, विवज्जए हुंति दोसाओ ॥ १ ॥" तत्र मूलगुणैरशुद्धा वसतिर्यथा–"पट्ठीवंसो १ दो धारणीउ २, चत्तारि मूलवेलीओ । मूलगुणे हुववेया, एसा उ अहागडा वसही ॥ २ ॥" पृष्टिवंशो–मध्यवलको द्वे धारण्यौ–द्वे वृहद्वेल्यौ चतस्रो मूलवेल्यो याश्चतुर्षु गृहस्य पार्श्वेषु क्रियन्ते, एते सप्तापि मूलगुणास्तैश्च साधुमाधाय कृतैर्युक्ता मूलगुणैरुपपेता, एषा त्वियं पुनराधाकृता वसतिराधाकर्म्मिकीत्यर्थः । उत्तरगुणाश्च द्विविधा भवन्ति मूलोत्तरगुणा उत्तरोत्तरगुणाश्च "वंसग १ कडणुर कंवण ३–छायण ४ लेवण ५ दुवार ६ भूमी य ७ । परिकम्मविप्पमुक्का, एसा मूलुत्तरगुणेसु ॥ ३ ॥" अत्र वृद्धव्याख्या–'वंसग' त्ति दण्डकाः १, 'कडणं' ति कटकादिभिः कुड्यकरणं २, 'उक्कंवणं' ति दण्डकोपरि कंवीनां वन्धनं ३, 'छायणं' ति दर्भादिना आच्छादनं ४, 'लेवणं' ति चिक्खल्लेण कुड्डाण लिंपणं ५, 'दुवार' त्ति गृहद्वारस्य वाहल्यकरणं अन्यस्य वा विधानं ६, 'भूमि' त्ति 'भूमिकम्मं विसमाए समीकरणं ति वुत्तं होइ, एसा सपरिकम्मा वसही मूलुत्तरगुणेसु ।' त्ति मूलभूतोत्तरगुणेष्वित्यर्थः । एते च पृष्टिवंशादयश्चतुर्दशापि अविशोधिकोटिः । इमे पुनरुत्तरोत्तरगुणा विशोधिकोटिस्थिता वसत्युपघातकास्तानाह–"दूमियधूवियवासिय–उज्जोवियवलिकडा अवत्ता य । सित्ता सम्मट्ठावि य, विसोहिकोडीगया वसही ॥ ४ ॥" अत्रापि वृद्धव्याख्या–'दूमिय'

वज्जा ५ ॥ ४ ॥ पासंडिकारणा खलु, आरंभा अभिनवा महावज्जा ६ । समणट्ठा सावज्जा ७, महासावज्जाउ साहूणं ८ ॥ ५ ॥ जा खलु जहुत्तदोसेहिँ, वज्जिया कारिया सअट्ठाए । परिकम्मविप्पमुक्का, सा वसही अप्पकिरिय त्ति ९ ॥ ६ ॥" आसां च नवानां शय्यानां मध्ये प्रथममल्पक्रियाऽनुज्ञाता लेशतोऽपि सावद्यत्वाभावात्, तस्या अलाभे कालातिक्रान्ताऽनुज्ञाता, तस्या अप्यभावे उपस्थाना अनुज्ञाता, एवमग्रतोऽपि पूर्वस्याः पूर्वस्या अलाभे उत्तरोत्तराऽनुज्ञाता वेदितव्येति । तथा 'साहुवग्गं' ति साधूनां वर्गो–वृन्दं साधुवर्गस्तं चशब्दात्साध्वीवर्गं च सङ्गृह्णीत न तु हीनाचारिवर्गं । तथा 'सुत्तत्थं च निहालइ' त्ति सूत्रमाचाराङ्गादि अर्थो निर्युक्ति–भाष्य–चूर्णी–सङ्ग्रहणी–वृत्ति–टिप्पनादिः सूत्रं चार्थश्चेति समाहारद्वन्द्वे सूत्रार्थं तत् निभालयति–चिन्तयतीत्यर्थः । चशब्दात्साधूनामपि सूत्रार्थं ददातीति । एवंविधो यः स सदाचार्यः स्यादिति शेषः । इत्यनुष्टुप् छन्दः ॥ १४ ॥ अथ यः सूरिः शिष्यस्य वैरी स्यात् तं वृत्तद्वयेनाह—

**संगहोवग्गहं विहिणा, न करेइ अ जो गणी । समणं समणिं तु दिक्खित्ता, सामायारिं न गाहए ॥१५॥**

**बालाणं जो उ सीसाणं, जीहाए उवलिंपए । न सम्ममग्गं गाहेइ सो सूरी जाण वेरिओ ॥ १६ ॥**

अनयोर्व्याख्या–'संगहोवग्गहं' ति सङ्ग्रहश्च शिष्यादीनां सङ्ग्रहणम्, उपग्रहश्च तेषामेव भक्तश्रुतादिदानेनोपष्टम्भनं तत्तथा तन्न करोति, चान्न कारयति, विधिना–आगमोक्तप्रकारेण यो गणी–आचार्यः, तथा यः श्रमणं श्रमणीं दीक्षित्वा तुशब्दात् प्रतीच्छकगणमपि सामाचारीं–आगमोक्ताहोरात्रक्रियाकलापरूपां सत्स्वगच्छोक्तां वा न ग्राहयेत्–निर्जरापेक्षी

सम्म शिक्षयेदित्यर्थः, तथा यः पुनर्बालानां शिष्याणां शिरःप्रभृतिअवयवमिति शेषः जिह्वया–रसनया उपलिम्पेत्–गौरिव वत्सस्य चुम्बेत्, अत्यन्तं वात्सहितं करोतीत्यर्थः। ननु बालादीनां प्रव्राजने निषेधोऽस्ति तत्कथं बालानां शिष्यत्वं ? उच्यते यो यं प्रव्राजने बालो निषिध्यते स ऊनाष्टवर्षः, अत्र त्वष्टवर्षोपरिवर्त्ती बालो गृह्यते अपवादपदेन तूनाष्टवर्षोऽपि। अत्र प्रसङ्गात् बालादय उच्यन्ते–" बाले १ वुड्ढे २ नपुंसे य ३, कीवे ४ जड्डे य ५ वाहिए ६। तेणे ७ रायावगारी अ ८, उम्मत्ते ९ य अदंसणे १० ॥ १ ॥ दासे ११ दुट्ठे य १२ मूढे य १३, अणत्ते १४ जुंगिए इ य १५। ओवद्धए य १६ भयए १७, सेहनिप्फेडिया इ य १८ ॥ २ ॥ गुव्विणी सबालवच्छा, पव्वावेउं न कप्पए। कायव्वा दुपयसंजुत्ता, एएसिं तु परूवणा ॥ ३ ॥ " तत्र सप्ताष्टौ वर्षाणि यावद्बालोऽत्राभिधीयते १, सप्ततिवर्षेभ्य उपरि वृद्धः, अन्ये त्वाहुरर्वागपीन्द्रियादिहानिदर्शनात्षष्टिवर्षेभ्योऽप्युपरि वृद्धोऽभिधीयते २, न स्त्री न पुमान्नपुंसकं ३, यः स्त्रीभिर्भोगैर्निमन्त्रितोऽसंवृताया वा स्त्रियोऽङ्गोपाङ्गानि दृष्ट्वा शब्दं वा मन्मनोल्लापादिकं तासां श्रुत्वा समुद्भूतकामाभिलाषोऽभिसोढुं न शक्नोति स क्लीबः ४, जड्डस्त्रिधा–भाषया शरीरेण करणेन च, भाषाजड्डः पुनरपि त्रिधा–जलमूकः मन्मनमूकः एलकमूकः, जलमग्न इव बुडबुडायमानो यो वक्ति स जलमूकः, यस्य तु वदतः खंच्यमानमिव वचनं स्खलति स मन्मनमूकः, यस्त्वेलक इवाव्यक्तं मूकतया शब्दमात्रमेव करोति स एलकमूकः, यः पथि भिक्षाटने वन्दनादिषु वाऽतीव स्थूलतया शक्तो न भवति स शरीरजड्डः, करणं–क्रिया तस्यां जड्डः समितिगुप्तिप्रतिक्रमणप्रत्युपेक्षणासंयमपालनादिक्रियाकलापं पुनःपुनरुपदिश्यमानमप्यतीव जड्डतया यो ग्रहीतुं न शक्नोति स करणजड्ड इत्यर्थः ५, भगन्दरातीसारकुष्टप्लीहशूलार्शःप्रभृतिरोगैर्ग्रस्तो व्याधितः ६, खात्रखन-

नमार्गपातनादिचौर्यनिरतः स्तेनः ७, श्रीगृहान्तःपुरनृपतिशरीरतत्पुत्रादिद्रोहविधायको राजापकारी ८, यक्षादिना प्रबल-मोहोदयेन वा परवशतां नीत उन्मत्तः ९, न विद्यते दर्शनं–दृग् यस्येत्यदर्शनो–अंधः स्त्यानर्द्धिनिद्रोदयवानप्यत्र द्रष्टव्यः १० ॥ १ ॥ गृहदास्याः सञ्जातो दुर्भिक्षादिष्वर्थादिना वा क्रीतः ऋणादिव्यतिकरे वाऽवरुद्धो दास उच्यते ११, दुष्टो द्विधा–कषायदुष्टो विषयदुष्टश्च, तत्र सर्षपभर्जिकाभिनिविष्टसाध्वादिवदुत्कटकषायः कषायदुष्टः, अतीव परयोषिदादिषु गृद्धो विषयदुष्टः १२, स्नेहाज्ञानादिपरतन्त्रतया यथास्थितवस्त्ववगमशून्यमानसो मूढः १३, यो राजादीनां हिरण्यादिकं धारयति स ऋणार्त्तः १४, जातिकर्म शरीरादिभिर्दूषितो जुङ्गितः, तत्र मातङ्गकौलिकवरुटसूचिकछिम्पकादयोऽस्पृश्या जातिजुङ्गिताः, स्पृश्या अपि स्त्रीमयूरकुक्कुटादिपोषकाः वंशवरत्रारोहणनापितसौकरिकवागुरिकत्वादिनिन्दितकर्म्मकारिणः कर्म्मजुङ्गिताः, करचरणकर्णादिवर्जिताः पङ्गुकुब्जवामनककाणप्रभृतयः शरीरजुङ्गिताः १५, अर्थग्रहणपूर्वकं विद्यादिग्रहणनिमित्तं वा एतावन्ति दिनानि त्वदीयोऽहमित्येवं येनात्मनः परायत्तता कृता भवति सोऽवबद्धः १६, रूपकादिमात्रया भृत्या धनिनां गृहे दिनपाटिकादिमात्रेण तदादेशकरणाय प्रवृत्तो भृतकः १७, शैक्षकस्य दीक्षितुमिष्टस्य निःस्फेटिका–अपहरणं शैक्षकनिःस्फेटिका तद्योगाद्यो मातापित्रादिभिरननुज्ञातोऽपहृत्य दीक्षितुमिष्यते सोऽपि शैक्षकनिःस्फेटिका, इत्येतेऽष्टादश पुरुषेषु दीक्षानर्हा-भेदाः। एषां च बालादीनां दीक्षाप्रदाने प्रवचनमालिन्यसंयमात्मविराधनादयो दोषाः सुखावसेया एवेति न दर्शिताः। वैरस्वाम्यादीनां च प्रव्राजने कारणं निशीथैकादशोद्देशकादवसेयम ॥ २ ॥ एते एव चाष्टादश भेदाः स्त्रीष्वपि, परं नपुंसक-द्वारेऽयं विशेषः–यः पुरुषः नपुंसकः स प्रतिसेवते प्रतिसेवापयति च, स्त्री नपुंसिका पुनः स्त्रीवेदं नपुंसकवेदमपि वेदयति।

अन्यावपि द्वाविमौ भेदौ भवतश्च, तद्यथा–गुर्विणी–सगर्भा, सबालवत्सा सह बालेन स्तन्यपायिना वत्सेन वर्त्तते इति सबालवत्सा। एते सर्वेऽपि विंशतिः स्त्रीभेदा दीक्षानर्हाः ॥ ३ ॥ नपुंसकाः पुनः षोडश भेदा भवन्ति, तत्र दश दीक्षानर्हाः। तद्यथा–" पंडए १ वाइए २ कीवे ३, कुंभी ४ ईसालुए त्ति य। सउणी ६ तक्कम्मसेवी य ७, पक्खियापक्खिए इ य ८ ॥ ४ ॥ सोगंधिए अ ९ आसत्ते १०, दस एए नपुंसगा। संकिलिट्ठ त्ति साहूणं, पव्वावेउं अकप्पिया ॥ ५ ॥" तत्र पण्डकस्वरूपं यथा–" महिलासहावो सरवन्नभेओ, मिंढं महंतं मउया य वाणी। ससद्दयं मुत्तमफेणगं च, एयाणि छप्पंडगलक्खणाणि ॥ १ ॥ " पुरुषाकारधारिणोऽपि महिलास्वभावत्वं पण्डकस्यैकं लक्षणम्, तथा हि–गतिस्तस्य मन्दा भवति, सशङ्कश्च पृष्ठतोऽवलोकमानो गच्छति, शरीरं च शीतलं मृदु च भवति, योषिदिवानवरतं हस्तोल्लकान् प्रयच्छन् उदरोपरि तिर्यग् व्यवस्थापितवामकरतलस्य वा उपरिष्टाद्दक्षिणकरकूर्परं विन्यस्य दक्षिणकरतले च मुखं कृत्वा वाहू च विक्षिपन् भाषते, अभीक्ष्णं च कटीहस्तकं ददाति, प्रावरणाभावे स्त्रीवद्बाहुभ्यां हृदयमाच्छादयति, भाषमाणश्च पुनः सविभ्रमं भ्रूयुग्मसुत्क्षिपति, केशबन्धनं प्रावरणादिकं च स्त्रीवत्करोति, योषिदाभरणादिपरिधानं च वहु मन्यते, स्नानादिकं प्रच्छन्ने समाचरति, पुरुषसमाजमध्ये च सभयः शङ्कितस्तिष्ठति स्त्रीसमाजे तु निःशङ्कितः, प्रमदोचितं च रन्धनकण्डनपेषणादिकं कर्म प्रविदधाति, इत्यादि महिलास्वभावत्वं पण्डकलक्षणम्। अपरं च स्वरवर्णभेदः स्वरो वर्णश्च उपलक्षणत्वात् गन्धरसस्पर्शाश्च स्त्रीपुरुषापेक्षया विलक्षणास्तस्य भवन्तीत्यर्थः। मेढ्रं–पुरुषचिन्हं महद्भवति, मृद्वी च वाणी ललनाया इव सञ्जायते, योषित इव सशब्दं मूत्रमभिजायते फेनरहितं च तद्भवति, एतानि षट्पण्डकलक्षणानि १ ॥ वातिकः सनिमित्तमनिमित्तं वा लिङ्गे

स्तब्धे सेवां विना यो वेदं न धारयति २, क्लीवश्चतुर्दा यो विवस्त्रां स्त्रियं वीक्ष्य क्षुभ्यति स दृष्टिक्लीवः १ शब्दं श्रुत्वा क्षुभ्यति स शब्दक्लीवः २, एवमाश्लिष्टः ३, निमन्त्रितः ४, ३। यस्य मोहोत्कटतया द्रवकाले लिङ्गं वृषणौ वा कुम्भवद्भवतः स कुम्भी ४, स्त्रियमासेव्यमानामालोक्य यस्येर्ष्याभिलाषो जायते स ईर्ष्यालुः ५, वेदोत्कटतया यो गृहचटक इवाभीक्ष्णं मैथुनासक्तः स शकुनिः ६, यो गलितशुक्रः श्वान इव स्वलिङ्गं लेढि स तत्कर्मसेवी ७, शुक्लपक्षे सवेदो न कृष्णपक्षे अथवा शुक्लपक्षे कृष्णपक्षे वा पक्षं यावदतीवोदयः स्यात् तावन्मात्रमेव च कालमल्पोदयः सपाक्षिकापाक्षिकः ८, यः सुभगं मन्वानः स्वलिङ्गं जिघ्रति स सौगन्धिकः ९, यो वीर्यपातेऽपि प्रियामालिङ्ग्य तिष्ठति स आसक्तः १०। एते दश नपुंसकाः साधूनां प्रव्राजितुमकल्पिताः–अयोग्याः कुत इत्याह–' संकिलिट्ठ ' त्ति अविशेषतस्तावन्नगरदाहसमानकामाध्यवसायसम्पन्नत्वात्सर्वेऽप्यमी सङ्क्लिष्टाः–स्त्र्याद्यासेवामाश्रित्य अतीवाशुभाध्यवसायवन्त इति दीक्षानर्हा इत्यर्थः ॥ ४ ॥ ५ ॥ ननु पुरुषमध्येऽपि नपुंसका उक्ता इहापि चेति तत्क एतेषां परस्परं प्रतिविशेषः ? सत्यं किन्तु तत्र पुरुषाकृतीनां ग्रहणमिह तु नपुंसकाकृतीनां एवं स्त्रीष्वपि वाच्यम्। शेषाः षट् नपुंसकाः प्रव्रज्यार्हाः। तद्यथा–" वद्धिए चिप्पिए चेव, मंतओसहिउवहए। इसिसत्ते देवसत्ते, पव्वावेज्ज नपुंसए ॥ ६ ॥" आयत्यां राजन्तःपुरमहल्लकपदमाप्त्यादिनिमित्तं यस्य बालत्वेऽपि छेदं दत्वा वृषणौ गालितौ भवतः स वर्द्धितकः १, यस्य तु जातमात्रस्याङ्गुष्ठांगुलीभिर्मर्दयित्वा वृषणौ द्राव्येते स चिप्पितः २, एतयोश्चैवं कृते सति किल नपुंसकवेदोदयः सम्पद्यते, कस्यचित्तु मन्त्रसामर्थ्यादन्यस्य त्वौषधिप्रभावात् पुरुषवेदे स्त्रीवेदे वा समुपहते सति नपुंसकवेदः समुदेति ३–४, अपरस्य तु मदीयतपः प्रभावान्नपुंसको भव त्वमिति ऋषिशा-

पात् ५, अन्यस्य तु देवशापात्तदुदयो जायते ६, इत्येतान् षट् नपुंसकान् निशीथोक्तविशेषलक्षणासम्भवे सति प्रव्राजयेदिति ६ एतेषामष्टचत्वारिंशतः प्रव्रज्याऽनर्हाणामुत्सर्गापवादपदाभ्यां विशेषव्याख्यानं निशीथाद् ज्ञेयमिति । तथा सम्यग्मार्ग-मोक्षपथं न ग्राहयति-न दर्शयति न शिक्षयतीत्यर्थः स आचार्यो वैरीति जानीहि, हे गौतम ! त्वमिति विषमाक्षरेति गाथाऽनुष्टुप्छन्दसी १५ ॥ १६ ॥ अथ पूर्वोक्तार्थलेशं विशेषयन्नाह—

जीहाए विलिहंतो, न भद्दओ सारणा जहिं नत्थि । दंडेण वि ताडंतो, स भद्दओ सारणा जत्थ ॥१७॥

व्याख्या—जिह्वया विलिहन्-शिष्यं चुम्बन्नाचार्यो न भद्रको-न श्रेष्ठः, यत्राचार्ये सारणा-हिते प्रवर्त्तनलक्षणा, स्मारणा वा-कृत्यस्मारणलक्षणा, उपलक्षणत्वाद्वारणा अहितान्निवारणलक्षणा, नोदना-संयमयोगेषु स्खलितस्यायुक्तमेतद्भवादृशां विधातुमित्यादिवचनेन प्रेरणा, प्रतिनोदना-तथैव पुनः पुनः प्रेरणा, नास्ति-न विद्यते । तथा दण्डेनापि-यष्ट्याऽपि किं पुनर्दवरकादिना ताडयन्-शरीरे पीडां कुर्वन् स आचार्यो भद्रकः-श्रेष्ठः, यत्र गणिनि सारणा उपलक्षणत्वाद्वारणादि वाऽस्तीति । गाथाछन्दः ॥ १७ ॥ अथ सूरिस्वरूपप्रक्रमेऽपि प्रसङ्गाद् यः शिष्योऽपि गुरोर्वैरी तमाह—

सीसो वि वेरिओ सो उ, जो गुरुं न विबोहए । पमायमइराघत्थं, सामायारीविराहयं ॥ १८ ॥

व्याख्या—शिष्योऽपि विनेयोऽपि स वैर्येव-शत्रुरेव तुरेवकारार्थो भिन्नक्रमश्च स च योजित एव, यो गुरुं-धर्मोपदेशकं न विबोधयति-हितोपदेशदानेन धर्मे न स्थापयति, किम्भूतं गुरुमित्याह-प्रमादमदिराग्रस्तं प्रमादो-निद्राविकथादिरूपः स

एव मदिरा—वारुणी प्रमादमदिरा तया ग्रस्तस्तथाविधतत्त्वज्ञानरहित इत्यर्थः, तं पुनः किंभूतं ? गुरुं सामाचारीविराधकं शैलकाचार्यवत्, किञ्च महोपकार्यपि शिष्यादिः केवलिप्रज्ञप्ते धर्मे स्थापनं विना गुर्वादेः प्रत्युपकारकारी न स्यात् । यदुक्तं स्थानाङ्गे—' तिण्ह दुप्पडियारं समणाउसो तं० अम्मापिउणो १ भट्टिस्स २ धम्मायरियस्स ३, संपातो वि य णं केइ पुरिसे अम्मापियरं सयपागसहस्सपागेहिं तेल्लेहिं अब्भंगेत्ता सुरभिणा गंधवट्टएणं उवट्टित्ता तिहिं उदगेहिं मज्जावेत्ता सव्वालंकारविभूसियं करेत्ता मणुन्नं थालीपागसुद्धं अट्ठारसवंजणाउलं भोयणं भोयावेत्ता जावज्जीवं पिट्ठिवडिंसियाए पडिवहेज्जा, तेणावि तस्स अम्मापिउस्स दुप्पडियारं हवइ '। दुःखेन—कृच्छ्रेण प्रतिक्रियते—प्रत्युपक्रियते इति दुःप्रतिकारं प्रत्युपकर्तुमशक्यमिति यावत् । ' अहे णं से तं अम्मापियरं केवलिपन्नत्ते धम्मे आघवइत्ता पण्णवइत्ता परूवतित्ता ठावइत्ता भवति, तेणामेव अम्मापिउस्स सुप्पडियारं भवति समणाउसो ! ' सुखेन प्रतिक्रियते—प्रत्युपक्रियते इति सुप्रतिकारं तद्भवति, प्रत्युपकारः कृतो भवतीत्यर्थः । धर्मस्थापनस्य महोपकारत्वात् १ । ' केति महच्चे दरिद्दं समुक्कसेज्जा, तए णं से दरिद्दे समुक्किट्ठे समाणे पच्छा पुरं च णं विपुलभोगसमितिसमण्णागए यावि विहरेज्जा, तए णं से महच्चे अण्णया कयाइ दरिद्दी हूए समाणे तस्स दरिद्दस्स अंतियं हव्वमागच्छेज्जा, तए णं से दरिद्दे तस्स भट्टिस्स सव्वस्समविदलयमाणे तेणावि तस्स भट्टिस्स दुप्पडियारं भवति, अहे णं से तं भट्टिं केवलिपण्णत्ते धम्मे आघवइत्ता पण्णवइत्ता परूवइत्ता ठावतित्ता भवति, तेणामेव तस्स भट्टिस्स सुपडियारं भवति २ । केइ तहारूवस्स समणस्स वा माहणस्स वा अंतियं एगमवि आरियं धम्मियं सुवयणं सोच्चा निसम्म कालमासे कालं किच्चा अन्नतरेसु देवलोएसु देवत्ताए उववन्ने, तए णं से देवे तं धम्मायरियं दुब्भिक्खाओ देसाओ

सुभिक्खं देसं साहरेज्जा, कंताराओ वा निकंतारं करेज्जा, दीहकालिएण वा रोगायंकेणं अभिभूयं विमोएज्जा, तेणावि तस्स धम्मायरियस्स दुप्पडियारं भवति, अहे णं से तं धम्मायरियं केवलिपण्णत्ताओ धम्माओ भट्ठं समाणं भुज्जो केवलि-पन्नत्ते धम्मे आघवइत्ता जाव ठावइत्ता भवति, तेणामेव तस्स धम्मायरियस्स सुप्पडियारं भवति ३ ।' तथा सर्वेष्वपि गुरुः सुदुष्करतरप्रतीकारः । यदुक्तं श्रीउमास्वातिवाचकपादैः प्रशमरतिग्रन्थे "दुःप्रतिकारौ माता-पितरौ स्वामी गुरुश्च लोकेऽस्मिन् । तत्र गुरुरिहामुत्र च, सुदुष्करतरप्रतीकारः ॥ १ ॥" इति, अनुष्टुप्छन्दः । ॥ १८ ॥ अथ कथं कथञ्चित्प्रमादिनं गुरुं शिष्यो विबोधयतीत्याह—

तुम्हारिसा वि मुणिवर, पमायवसगा हवंति जइ पुरिसा । तेणन्नो को अम्हं, आलंबण हुज्ज संसारे॥१९॥

व्याख्या—युष्मादृशा अपि हे मुनिवर !—श्रमणश्रेष्ठ ! प्रमादवशगाः—प्रमादपरवशा भवन्ति यदि चेत् पुरुषाः—पुंमासः, तेन कारणेनान्यो—युष्मद्व्यतिरिक्तः कोऽस्माकं मन्दभाग्यानां आलम्बनमत्र, विभक्तिलोपः प्राकृतत्वात्, सागरे नौरिव भविष्यति, संसारे—चतुर्गत्यात्मके पततामिति शेषः । अनेन विधिना शिष्यः प्रमादिनं गुरुं विबोधयतीत्यधिकाराल्लभ्यते । तथाऽत्र विबोधनविधये आचार्यगुणानपि शिष्य आचार्यस्य दर्शयति । यथा—पुढवीविव सव्वसहं, मेरुव्व अकंपिरं ठियं धम्मे । चंदुव्व सोमलेसं, तं आयरियं पसंसंति ॥ १ ॥ अप्परिसाविं आलो—यणारिहं हेउकारणविहिन्नुं । गंभीरं दुद्धरिसं, तं आयरियं पसंसंति ॥ २ ॥ कालन्नुं देसन्नुं, भावन्नुं अतुरिअं असंभंतं । अणुवत्तयं अमायं, तं आयरियं पसंसंति ॥ ३ ॥ लोइय-

सामइएसुं, सत्थेसुं जस्स नत्थि वक्खेवो। ससमयपरसमयम्मि अ, तं आयरिअं पसंसंति ॥ ४ ॥ वारसहि वि अंगेहिं, सामाइयमाइपुव्वनिवद्धे। लद्धट्ठं गहियट्ठं, तं आयरिअं पसंसंति ॥ ५ ॥ आयरियसहस्साइं, लहइ अ जीवो भवेहि वहुएहिं। कम्मेसु य सिप्पेसु य, धम्मायरणेसु नो कहवि ॥ ६ ॥ जे पुण जिणोवइट्ठे, निग्गंथे पवयणंमि आयरिया। संसारमुक्खमग्गस्स, देसगा ते हु आयरिया ॥ ७ ॥ देवा वि देवलोए, निग्गंथं पवयणं अणुसरंता। अच्छरगणमज्झगया, आयरिए वंदया इंति ॥ ८ ॥ जह दीवो दीवसयं, पइप्पए दिप्पई य सो दीवो। दीवसमा आयरिया, अप्पं च परं च दीवंति ॥ ९ ॥ देवा वि देवलोए, निच्चं दिव्वोहिणा वियाणंता। आयरियमणुसरंता, आसणसयणाणि मुंचंति ॥ १० ॥" इत्यादि चन्द्रवेध्यकप्रकीर्णकोक्तं वाच्यमिति। गाथाछन्दः ॥ १९ ॥ अथ द्वादशभिस्त्रैरुत्तमाऽधमाचार्ययोः स्वरूपमाह—

**नाणम्मि दंसणम्मि य, चरणम्मि य तिसु वि समयसारेसु। चोएइ जो ठवेउं, गणमप्पाणं च सो अ गणी ।२०**

व्याख्या—ज्ञाने-ऽष्टविधे ज्ञानाचारे, दर्शने-ऽष्टविधे दर्शनाचारे, चकाराद् द्वादशविधे तपआचारे, चरणे-ऽष्टविधे चारित्राचारे, चकारात् षट्त्रिंशल्लक्षणे वीर्याचारे, एषु त्रिष्वपि समयसारेषु-प्रवचनप्रधानेषु चकारद्वयसूचिततपोवीर्याचारयोश्च 'चोएइ' त्ति प्रेरयति यः किं कर्तुं स्थापयितुं कं गणं-यतिसमुदायरूपं, तथा आत्मानं चात् श्रोतृवर्गं च, 'सो अ' त्ति चकारस्यैवकारार्थत्वात् स एव गणी आचार्यः कथ्यते इति शेषः। अत्र ज्ञानाचारादिस्वरूपं किञ्चिद् यथा "काले १ विणए २ बहुमाणे ३, उवहाणे ४ तहा अनिन्हवणे ५। वंजण ६ अत्थ ७ तदुभए ८, अट्ठविहो णाणमायारो ॥ १ ॥"

यो यस्याङ्गप्रविष्टादेः श्रुतस्य काल उक्तस्तस्य तस्मिन्नेव काले स्वाध्यायो विधेयः नत्वकाले तथैव फलप्रदत्वात्, कृष्यादेरपि काल एव करणे फलं नान्यथा १, श्रुतादानं कुर्वता गुरोर्विनयः कार्यः—अभ्युत्थानाङ्घ्रिधावनादिः २, तथा श्रुतादाने गुरोर्बहुमान—आन्तरो भावप्रतिबन्धः कार्यः, एवं सुखेनाधिकफलं श्रुतं स्यात्, विनयबहुमानाभ्यां चतुर्भङ्ग्यत्र ३, उपदधातीति उपधानं तपः तद्यत्र यत्र अध्ययने आगाढानागाढयोगलक्षणमुक्तं तत्तत्र तत्र कार्यं तत्पूर्वकस्यैव श्रुतग्रहणस्य सफलत्वात् ४, अनिन्हवः गृहीतश्रुतेनानिन्हवः कार्यः यद्यस्यान्तेऽधीतं तत्र स एव वाच्यः नान्यः चित्तकालुष्यापत्तेः ५, व्यञ्जनार्थतदुभयान्याश्रित्य भेदो न कार्य इति शेषः, एतदुक्तं भवति—श्रुतप्रवृत्तेन तत्फलमीप्सिता व्यञ्जनभेदोऽर्थभेद उभयभेदश्च न कार्यः, तत्र व्यञ्जनभेदो यथा—'धम्मो मंगलमुक्किट्ठं' इति वक्तव्ये 'पुन्नं कल्लाणमुक्कोसं' इत्यादि ६, अर्थभेदस्तु यथा—'आवन्ती केयावंती लोगंसि विप्परामुसंती'त्यत्राचारसूत्रे यावन्तः केचन लोके—ऽस्मिन् पाखण्डिलोके षड्जीवनिकायान् विपरामृशन्ति—अनेकप्रकारं घातयन्त्येवंविधार्थोक्तौ । अवन्तिजनपदे केया—रज्जुर्वान्ता—पतिता लोकः परामृशति कूप इत्याह ७, उभयभेदस्तु द्वयोरपि याथात्म्योपमर्देन यथा 'धम्मो मंगलमुत्कृष्टः अहिंसा पर्वतमस्तकः' दोषश्चात्र व्यञ्जनभेदेऽर्थभेदः, तद्भेदे क्रियाया भेदः, क्रियाभेदे च मोक्षाभावः, तदभावे निरर्थका दीक्षा आचारः, इति सर्वत्र योजनीयम् ८, अष्टविधः कालादिभेदद्वारेण ज्ञानाचार इति ॥ १ ॥ अथ दर्शनाचारः—"निस्संकिय १ निक्कंखिय २—निव्वितिगिच्छा ३ अमूढदिट्ठी अ ४ । उववूह ५ थिरीकरणे ६, वच्छल्ल ७ पभावणे अट्ठ ८ ॥ २ ॥" निःशङ्कितः—देशशङ्का समाने जीवत्वे कथमेको भव्योऽन्यस्त्वभव्य इति शङ्कते, सर्वशङ्का तु सिद्धान्तस्य प्राकृतबन्धतया कल्पितत्वं मन्यते न तु—"बालस्त्रीमन्द-

मूर्खाणां, नृणां चारित्रकाङ्क्षिणाम् । अनुग्रहार्थं तत्त्वज्ञैः, सिद्धान्तः प्राकृतः कृतः ॥ १ ॥ " इत्यादिकारणानि, ततश्च-निःशङ्कितो जीव एवार्हच्छासनप्रतिपन्नो दर्शनाचरणात् तत्प्राधान्यविवक्षया दर्शनाचार उच्यते, अनेन दर्शनदर्शनिनोर-भेदमाह १, निष्काङ्क्षितः देशसर्वकाङ्क्षारहितः, तत्राद्यः एकं दर्शनं काङ्क्षति, सर्वकाङ्क्षा तु बौद्धादीनि सर्वाणि २, निर्गता विचिकित्सा-फलं प्रति सन्देहो यस्मादसौ निर्विचिकित्सः, साध्वेव जिनमतं, किन्तु प्रवृत्तस्यापि सतो ममास्मात् फलं भ-विष्यति न भविष्यतीति क्रियाया इति सन्देहो विचिकित्सा जातनिश्चयो निर्विचिकित्स उच्यते, यद्वा विदो-विज्ञास्ते च तत्त्वतः साधव एव तेषां जुगुप्सारहितो निर्विजुगुप्सः ३, बालतपस्वितपोविद्यातिशयदर्शनैर्न मूढा-स्वरूपान्न चलिता दृष्टिः-सम्यग्दर्शनरूपा यस्यासौ अमूढदृष्टिः ४, अयं चतुर्विधोऽप्यान्तर आचारो । बाह्यं त्वाह-उपबृंहा च समानधार्म्मिकाणां प्रशंसनं-तत्तद्गुणपरिवर्णनम् ५, स्थिरीकरणं च धर्माद्विषीदमानानां तत्रैव स्थापनं उपबृंहास्थिरीकरणे ६, वात्सल्यं च समानधार्मिकप्रीत्युपकारकरणं ७, प्रभावना च धर्मोक्त्यादिभिस्तीर्थख्यापनं वात्सल्यप्रभावने ८, इत्यष्टविधो दर्शनाचारः ॥ २ ॥ अथ चारित्राचारः-" पणिहाणजोगजुत्तो, पंचहिं समिईहिं तिहिं गुत्तीहिं । एस चरित्तायारो, अट्ठविहो होइ नायव्वो ॥ ३ ॥ " प्रणिधानं-चेतःस्वास्थ्यं तत्प्रधाना योगा-व्यापारास्तैर्युक्तः, अयं च ओघतोऽविरतसम्यग्दृष्टिरपि स्यादत आह-पञ्चभिः समितिभिस्तिसृभिश्च गुप्तिभिर्यः प्रणिधानयोगयुक्तः, एतद्योगयुक्त एतद्योगवानेव, अथवा पञ्चसु समितिषु तिसृषु गुप्तिषु अस्मिन् विषये एता आश्रित्य प्रणिधानयोगयुक्तो यः, एष चारित्राचारः । आचाराचारवतोः कथञ्चिदभे-दात् अष्टविधः स्याद् ज्ञातव्यः ॥ ३ ॥ अथ तपआचारः-बारसविहम्मि वि तवे, सब्भिंतरबाहिरे कुसलदिट्ठे । अगिलाइ

अणाजीवी, नायव्वो सो तवायारो ॥ ४ ॥ द्वादशविधेऽपि तपसि साभ्यन्तरबाह्ये कुशलदृष्टे जिनोपलब्धेऽग्लान्या—न राजवेष्टिकल्पेन यथा शक्त्या वा अनाजीविको निःस्पृहः फलान्तरमाश्रित्य यः ज्ञातव्योऽसौ तपआचारः, आचारतद्वतोरभेदात् ॥ ४ ॥ तत्र बाह्यं तप आह—" अणसण१मूणोयरिया २, वित्तीसंखेवणं ३ रसच्चाओ ४ । कायकिलेसो ५ संलीणया य ६, बज्झो तवो होइ ॥ ५ ॥ " अनशनं—आहारत्यागः, तद्द्विधा—इत्वरं यावत्कथिकं च, तत्राद्यं चरमजिनतीर्थे चतुर्थादिषण्मासान्तं यावत्, उत्तराध्ययने तु " इत्तरियमरणकाला य, अणसणा दुविहा भवे । इत्तरिया सावकंखा, निरवकंखा वितिज्जिया ॥ १ ॥ " इत्वरकं सावकाङ्क्षं घटिकाद्वयाद्युत्तरकालं भोजनेच्छया वर्त्तते इति सावकाङ्क्षमित्यस्ति, यावत्कथिकं तु आजन्मभावि, तत्पुनश्चेष्टाभेदोपाधेर्विशेषतस्त्रिधा, पादपोपगमनं १, इङ्गितमरणं २, भक्तपरिज्ञा ३, तत्रानशनिनः—त्यक्तचतुर्विधाहारस्याधिकृतचेष्टा व्यतिरेकेण चेष्टान्तरमधिकृत्य एकान्तनिःप्रतिकर्माङ्गस्य पादपस्येवोपगमनं—सामीप्येन वर्त्तनं पादपोपगमनं, तच्च सव्याघातं निर्व्याघातं च, तत्र सव्याघातं व्याघ्रसिंहाद्युपद्रवे सति क्रियते, निर्व्याघातं तु यत्सूत्रार्थोभयनिष्ठितो निष्पादितशिष्यः संलेखनापूर्वमेव विधत्ते, अन्यथा आर्त्तध्यानसम्भवः । तथा इङ्गिते प्रदेशे मरणं इङ्गितमरणं, इदं च संहननापेक्षं पूर्वोक्तं अशक्नुवतश्चतुर्धाहारनिवृत्तिरूपं स्वत एवोद्वर्त्तनादिक्रियायुक्तस्य ज्ञेयम् २, भक्तपरिज्ञा त्रिधाहारचतुर्धाहारनिवृत्तिरूपा, सा नियमात् सप्रतिकर्माङ्गस्य धृतिसंहननवतो यथा समाधिभावतोऽवगन्तव्या ३ ॥ १ ॥ यद्यनशनं कर्त्तुं न शक्नोति तदोनोदरतां कुर्यादित्यनशनानन्तरमूनोदरतामाह एवमग्रेऽपि ज्ञेयम्—' ऊणोयरिय ' त्ति ऊनोदरता सा त्रिधा, यदुक्तं स्थानाङ्गे ' तिविहा ओमोयरिया पं० तं० उवगरणोमोयरिया १, भत्तपाणओमोयरिया २, भावोमोयरिया ३ ' अस्य

वृत्तिः—तत्र प्रथमा जिनकल्पिकादीनामेव न पुनरन्येषां शास्त्रीयोपध्यभावे हि समग्रसंयमाभावात्, अतिरिक्ताऽग्रहणतो वोनोदरतेति । " अप्पाहारउवड्ढा, दुभागपत्ता तहेव किंचूणा । अट्ठ दुवालस सोलस, चउवीस तहिक्कतीसा य ॥ १ ॥ " अल्पाहारोनोदरता नाम एककवलादारभ्य यावदष्टौ कवला, अत्रैककवलमाना जघन्या अष्टकवला तूत्कृष्टा शेषभेदा मध्यमा । एवं नवभ्य आरभ्य यावद् द्वादश कवलास्तावदुपार्द्धोनोदरता, एवं त्रयोदशभ्य आरभ्य यावत् षोडश तावद् द्विभागोनोदरता। एवं सप्तदशभ्य आरभ्य यावच्चतुर्विंशतिस्तावत्प्राप्ता, इत्थं पञ्चविंशतिभ्य आरभ्य यावदेकत्रिंशत्तावत्किञ्चिन्न्यूनोदरता । जघन्यादिका स्वधिया ज्ञेया । एवमनेनानुसारेण पानेऽपि वाच्या २, भावोनोदरता क्रोधादित्यागेन ३ ॥ २ ॥ वृत्तिसङ्क्षेपो भिक्षाचर्यारूपः यदुक्तमौपपातिके—' भिक्खायरिया अणेगविहा, पं० तं० दव्वाभिग्गहचरए ' द्रव्याभिग्रहः लेपकृतादिद्रव्यविषयः, ' खेत्ताभिग्गहचरए '—क्षेत्राभिग्रहः स्वग्रामपरग्रामादिविषयः, ' कालाभिग्गहचरए '—कालाभिग्रहः पूर्वान्हादिविषयः; ' भावाभिग्गहचरए ' भावाभिग्रहः गानहसनादिप्रवृत्तनरादिविषयः इत्यादि ३, रसत्यागोऽनेकधा, यथौपपातिके —'णिव्विइए पणीयरसपरिच्चाई आयंबिलिए आयामसित्थभोई अरसाहारे विरसाहारे अंताहारे पंताहारे लूहाहारे' इत्यादि ४, कायक्लेशो यथा—'ठाणठिइए ठाणाइए उक्कुडुयासणिए पडिमट्ठाई वीरासणिए नेसज्जिए आयावए अवाउडए अकंडुयए अणिट्ठुभए सव्वगायपडिकम्मविभूसविप्पमुक्के इत्यादि ५, संलीनता इन्द्रियसंलीनतादिभेदाच्चतुर्धा,—" इंदियकसायजोए, पडुच्च संलीणया मुणेयव्वा । तह य विवित्ताचरिया, पन्नत्ता वीयरागेहिं ॥ १ ॥ " श्रोत्राद्यैरिन्द्रियैः सुन्दरेतरशब्दादिषु तोषद्वेषाकरणमिन्द्रियसंलीनता, कषायसंलीनता तदुदयनिरोधोदीर्णविफलीकरणरूपा, योगसंलीनता मनोयोगादीनाम-

कुशलतानिरोधः कुशलानामुदीरणं, विविक्तचर्या "आरामुज्जाणाइसु, थीपसुपंडगविवज्जियं ठाणं। फलयाईण य गहणं, तह भणियं एसणिज्जाणं ॥ १ ॥" एतद्बाह्यं तपो भवति लौकिकैरपि आसेव्यमानं ज्ञायते इति बाह्यम्, विपरीतग्राहेण कुतीर्थिकैरपि क्रियते इति बाह्यतपः ५ ॥ अथाभ्यन्तरं तपो यथा "पायच्छित्तं १ विणओ २, वेयावच्चं ३ तहेव सज्झाओ ४। झाणं ५ उस्सग्गो ६ वि य, अब्भिंतरओ तवो होइ ॥ ६ ॥" तथा चौपपातिकेऽपि "से किं तं अब्भितरए तवे ? २ छव्विहे पं० तं० पायच्छित्तं १ विणओ २ वेयावच्चं ३ सज्झाओ ४ झाणं ५ विउसग्गो ६" 'पायच्छित्तं' अतिचारविशुद्धिः सा च वन्दनादिना विनयेन विधीयते, इत्यत आह-वि० कर्मविनयनहेतुर्व्यापारविशेषः, तद्वानेव च वैयावृत्त्ये प्रवर्त्तते इत्यत आह-वे० भक्तादिभिरुपष्टम्भः वैयावृत्त्यान्तराले च स्वाध्यायो विधेयः इत्यत आह-स० शोभनो मर्यादया पाठः, तत्र च ध्यानं भवतीत्याह-झा० शुभध्यानं, शुभध्यानादेव हेयत्यागो भवतीत्यत आह-विउ० व्युत्सर्गः, "से किं तं पायच्छित्ते ? २ दसविहे पं० तं० आलोयणारिहे १ पडिक्कमणारिहे २ तदुभयारिहे ३ विवेगारिहे ४ विउस्सग्गारिहे ५ तवारिहे ६ छेदारिहे ७ मूलारिहे ८ अणवठ्ठप्पारिहे ९ पारंचियारिहे १० से तं पायच्छित्ते।" आलोचनां-गुरुनिवेदनां विशुद्धये यदर्हति भिक्षाचर्याद्यतिचारजातं तदालोचनार्हं तद्विषयत्वादालोचनालक्षणा विशुद्धिरपि आलोचनार्हमित्युक्तम्, तस्या एव तपोरूपत्वादिति, एवमन्यान्यपि, नवरं प्रतिक्रमणं-मिथ्यादुष्कृतं २, तदुभयं-आलोचना प्रतिक्रमणस्वभावं ३, विवेको-ऽशुद्धभक्तादिविवेचनं ४, व्युत्सर्गः-कायोत्सर्गः ५, तपो-निर्विकृतिकादिकं ६, छेदो-दिनपञ्चकादिक्रमेण पर्यायछेदनं ७, मूलं-पुनर्व्रतोपस्थापनं ८, अनवस्थाप्यं अचरिततपोविशेषस्य व्रतेष्वनवस्थापनम् ९, पाराञ्चिकं-तपोविशेषेणैवातिचारपारगमनमिति १०, "से किं तं विणए ? विणए

सत्तविहे पं० तं० णाणविणए १ दंसण २ चरित्त ३ मण ४ वय ५ काय ६ लोगोवयारविणए ७ । से किं तं णाणविणए ? णाण० पंचविहे पं० तं० आभिणिबोहियणाणविणए १, सुयणाणविणए २, ओहिणाणविणए ३, मणपज्जवणाणविणए ४, केवलणाणविणए, से तं नाण विणए १ । से किं तं दंसणविणए ? २ दुविहे पं० तं० सुस्सूसणाविणए य अणच्चा-सयणाविणए य । से किं तं सुस्सूसणाविणए ? २ अणेगविहे पं० तं० अब्भुट्ठाणेइ वा, आसणाभिग्गहेइ वा, आसणप्पयाणेइ वा, सक्कारेइ वा, सम्माणेइ वा, कितिकम्मेइ वा, अंजलिपग्गहेइ वा, इंतस्स अभिगच्छणया, ठियस्स पज्जुवासणया, गच्छंतस्स पडिसंसाहणया, से तं सुस्सूसणाविणए ॥ " 'आसणाभिग्गहेइ व'त्ति, यत्र यत्रोपवेष्टुमिच्छन्ति तत्र तत्रासन-नयनं । 'आसणपयाणं' ति आसनदानमात्रमेवेति । " से किं तं अणच्चासायणाविणए ? २ पणयालीसविहे पं० तं० अरहंताणं अणच्चासादणया १, अरहंतपन्नत्तस्स धम्मस्स अणच्चासादणया २, आयरियाणं अण० ३, एवं उवज्झायाणं ४, थेराणं ५, कुलस्स ६, गणस्स ७, संघस्स ८, किरियाणं–क्रियावादिनां ९, संभोगियस्स–एकसामाचारीकतया १०, आभिणिबोहिय-णाणस्स ११, जाव केवलणाणस्स १२ । १३ । १४ । १५ । एतेसिं चेव १५ भत्तिबहुमाणे २, एतेसिं चेव वण्णसंजलणया ३, से तं अणच्चासादणाविणए " बाह्या प्रतिपत्तिर्भक्तिरुच्यते, मनसि निर्भरा प्रीतिर्बहुमानः, अतिशयगुणकीर्त्तनादिभिर्यश उत्पादनं वर्णसञ्जननमिति । " से किं तं चरित्तविणए ? २ पंचविहे पं० तं० सामाइयचरित्तविणए १, छेदोवट्ठावणियच० २, परिहारविसुद्धिच० ३, सुहुमसंपरायच० ४, अहक्खायच० ५, से तं चरित्तविणए । से किं तं मणविणए ? २ दुविहे पं० तं० अपसत्थमणविणए य पसत्थमणविणए य, से किं तं अपसत्थमणविणए ? २ जे य मणे सावज्जे १, सकिरिए २

सकक्कसे ३, कडुए ४, निट्ठुरे ५, फरुसे ६, अण्हयकरे ७, छेयकरे ८, भेयकरे ९, परितावणकरे १०, उद्दवणकरे ११, भूतोवघाइए १२, तहप्पगारं मणं नोपधारेज्जा, से तं अपसत्थमणविणए। से किं तं पसत्थमणविणए ? २ तं चेव पसत्थेणं। एवं चेव वइविणओ वि एएहिं चेव पदेहिं नायव्वो ७ से तं वइविणए।" यत्पुनर्मनः—चित्तमसंयतानामिति गम्यते, सहावद्येन—गर्हितकर्म्मणा हिंसादिना वर्त्तत इति सावद्यम्,एतदेव प्रपञ्च्यते—स० कायिक्यादिक्रियोपेतं२, सकार्कश्यं—कर्कशभावोपेतं ३, परेषामात्मनो वा कटुकमिव कटुकमनिष्टमित्यर्थः ४, निष्ठुरं मार्द्दवाननुगतं ५, फ० स्नेहाननुगतं ६, आश्रवकरं—अशुभकर्माश्रवकारि ७, कुत इत्याह—छे० हस्तादिछेदनकारि ८, भे० नासिकादीनां भेदनकारि ९, प० प्राणिनामुपतापहेतुः १०, उ० मारणान्तिकभेदकारि धनहरणाद्युपद्रवकारि वा ११, भू० भूतोपघातो यत्रास्ति तद्भूतोपघातिकमिति १२, 'तहप्पगारं' ति एवं प्रकारं असंयतमनःसदृशमित्यर्थः, 'मनो नो०' न प्रवर्त्तयेत्। "से किं तं० कायविणए ? २ दुविहे पं० तं० पसत्थकायविणए अपसत्थकायविणए य, से किं तं अप्पसत्थकायविणए ? २ सत्तविहे पं० तं० अणाउत्तं गमणे १, अणाउत्तं ठाणे २, अणाउत्तं निसीदणे ३, अणाउत्तं तुयट्टणे ४, अणाउत्तं उल्लंघणे ५, अणाउत्तं पल्लंघणे ६, अणाउत्तं सव्विंदियकायजोगजुंजणता ७, से तं अपसत्थकायविणए। से किं तं पसत्थकायविणए ? पसत्थकायविणए एवं चेव पसत्थं भाणियव्वं, से त्तं पसत्थकायविणए। से त्तं कायविणए।" 'अणाउत्तं' त्ति अयतनया १, 'उल्लं०' कर्दमादीनामतिक्रमणं ५, पौनःपुन्येन तदेव प्रलङ्घनमिति ६, सर्वेन्द्रियाणां काययोगस्य च योजनता—प्रयोजनं व्यापारणं सर्वेन्द्रियकाययोगयोजनतेति ७। "से किं तं लोगोवयारविणए ? २ सत्तविहे पं० तं० अब्भासवत्तियं १, परछंदाणुवत्तियं २, कज्जहेउं ३, कयपडिकि-

रिया ४, अत्तगवेसणया ५, देसकालण्णुया ६, सव्वत्थेसु अपडिलोमया ७, से तं लोगोवयारविणए । से तं विणए।" अभ्यासवर्त्तिता-समीपवर्त्तित्वं १, पराभिप्रायानुवर्त्तनं २, कार्यहेतोर्ज्ञानादिनिमित्तं भक्तादिदानमिति गम्यम् ३, कय० अध्यापितोऽहमनेनेति बुद्ध्या भक्तादिदानमिति ४, आर्त्तस्य-दुःस्थितस्य वार्त्तान्वेषणं ५, दे० प्रस्तावज्ञता-अवसरोचितार्थसम्पादनमित्यर्थः ६, सर्वप्रयोजनेष्वाराध्यसम्बन्धिष्वानुकूल्यमिति ७। "से किं तं वेयावच्चे ? २ दसविहे पं० तं० आयरियवेयावच्चे १, उवज्झाय २, सेह ३, गिलाण ४, तवस्सि ५, थेर ६, साहम्मिय ७, कुल ८, गण ९, संघवेयावच्चे १०, से तं वेयावच्चे।" वैयावृत्त्यं-भक्तपानादिभिरुपष्टम्भः, शैक्षः-अभिनवप्रव्रजितः ३, तपस्वी-अष्टमादिक्षपकः ४, स्थविरो-जन्मादिभिः ६, साधर्मिकः-साधुः साध्वी वा ७, कुलं-गच्छसमुदायः ८, गणः-कुलानां समुदायः ९, संघो-गणसमुदायः १० । "से किं तं सज्झाए? २ पंचविहे पं० तं० वायणा १ पडिपुच्छणा २ परियट्टणा ३ अणुप्पेहा ४ धम्मकहा ५, से तं सज्झाए। से किं तं झाणे? २ चउविहे पं० अट्टज्झाणे १, रुद्दज्झाणे २, धम्मज्झाणे ३, सुक्कज्झाणे ४, अट्टज्झाणे चउव्विहे पं० तं० अमणुण्णसंपओगसंपउत्ते तस्स विप्पओगस्सतिसमन्नागते आवि भवति १, मणुण्णसंपओगसंपउत्ते तस्स अविप्पओगस्सतिसमन्नागते आवि भवति २, आयंकसंपओगसंपउत्ते तस्स विप्पओगस्सतिसमन्नागए आवि भवइ ३, परिजुसियकामभोगसंपओगसंपउत्ते तस्स अविप्पओगस्सतिसमन्नागए आवि भवइ ४।" अमनोज्ञो-ऽनिष्टो यः शब्दादिस्तस्य यः सम्प्रयोगो-योगस्तेन सम्प्रयुक्तो यः स तथा, तथाविधः सन् तस्यामनोज्ञस्य शब्दादेर्विप्रयोगस्मृतिसमन्वागतश्चापि भवति, वियोगचिन्तानुगतः स्यात्, चापीत्युत्तरवाक्यापेक्षया समुच्चयार्थः, असावार्त्तध्यानं स्यादिति शेषः, धर्मधर्मिणोरभेदादिति १ । तथा मनोज्ञ-

धनादि 'तस्स'त्ति मनोज्ञस्य धनादेः 'अविप्पओ०' व्यक्तं, नवरं आर्त्तध्यानमसावुच्यत इति वाक्यशेषः २। आतङ्को—रोगः तस्यातङ्कस्य २, जुषी प्रीतिसेवनयोरिति वचनात्सेवितः प्रीतो वा यः कामभोगः—शब्दादिभोगो मदनसेवा वा तस्य कामभोगस्य ४। "अट्टस्स णं झाणस्स चत्तारि लक्खणा पं० तं० कंदणया १ सोयणया २ तिप्पणया ३ विलवणया ४।" कं० महता शब्देन विरवणं १, सो० दीनता २, ति० तेपनता तिपेः क्षरणार्थत्वादश्रुविमोचनं ३, विलपनता पुनः पुनः क्लिष्टभाषणमिति ४। १ "रुद्दे झाणे चउविहे पं० तं० हिंसाणुबंधी १, मोसाणुबंधी २, तेणाणुबंधी ३, सारक्खणाणुबंधी ४, रुद्दस्स णं झाणस्स चत्तारि लक्खणा पं० तं० ओसन्नदोसे १, बहुदोसे २, अन्नाणदोसे ३, आमरणंतदोसे ४।" ओसन्नेन—बाहुल्येनानुपरतत्वेन दोषो हिंसानृतादत्तादानसंरक्षणानामन्यतम ओसन्नदोषः १, बहुष्वपि—सर्वेष्वपि हिंसादिषु दोषः—प्रवृत्तिलक्षणो बहुदोषः २, अज्ञानात्—कुशास्त्रसंस्कारात् हिंसादिष्वधर्मस्वरूपेषु ग्रं० १००० धर्म्मबुद्ध्या या प्रवृत्तिस्तल्लक्षणो दोषोऽज्ञानदोषः ३, मरणमेवान्तो मरणान्तः आमरणान्तात् आमरणान्तमसञ्जातानुतापस्य कालसौकरिकादेरिव या हिंसादिषु प्रवृत्तिः सैव दोष आमरणान्तदोषः ४। इह चार्त्तरौद्रे परिहार्यतया साधुविशेषणे धर्म्मशुक्ले त्वासेव्यतयेति २। "धम्मज्झाणे चउव्विहे चउपडोयारे पं० तं० आणाविजए १, अवायविजए २, विवागविजए ३, संठाणविजए ४।" 'चउपडोयारे'त्ति चतुर्षु भेदलक्षणालम्बनानुप्रेक्षालक्षणेषु पदार्थेषु प्रत्यवतारः—समवतारो वक्ष्यमाणस्वरूपो यस्य तच्चतुःप्रत्यवतारमिति, आज्ञा—जिनप्रवचनं तस्या विचयो—निर्णयो यत्र तदाज्ञाविचयं प्राकृतत्वात् आणाविजयं आज्ञागुणानुचिन्तनमित्यर्थः; एवं शेषपदान्यपि, नवरं अपाया रागद्वेषादिजन्या अनर्थाः, विपाकः—कर्म्मफलं, संस्थानानि—लोकद्वीपसमुद्राद्याकृतयः।

“ धम्मस्स णं झाणस्स चत्तारि लक्खणा पं० तं० आणारुई १ निसग्गरुई २ उवदेसरुई ३ सुत्तरुई ४ । ” आ० निर्युक्त्या स्तत्त्वश्रद्धानं १, नि० स्वभावत एव तत्त्वश्रद्धानं २, उ० साधूपदेशात् तत्त्वश्रद्धानं ३, आगमतस्तत्त्वश्रद्धानं ४ । ” धम्मस्स णं झाणस्स चत्तारि आलंबणा पं० तं० वायणा १ पुच्छणा २ परियट्टणा ३ धम्मकहा ४ । ” आलम्बमानि धर्मध्यानसौधशिखरारोहणार्थं यान्यालम्ब्यन्ते–आश्रीयन्ते तान्यालम्बनानि वाचनादीनि ४ “ धम्मस्स णं झाणस्स चत्तारि अणुप्पेहाओ पं० तं० अणिच्चाणुप्पेहा १ असरणाणुप्पेहा २ एकत्ताणुप्पेहा ३ संसाराणुप्पेहा ४ । ” अनित्यत्वाशरणत्वैकत्वसंसारानुप्रेक्षाः प्रतीताः । “ सुक्कज्झाणे चउव्विहे चउपडोयारे पं० तं० पहुत्तवियक्के सवियारी १, एगत्तवियक्के अवियारी २, सुहुमकिरिए अपडिवाई ३, समुच्छिन्नकिरिए अनियट्टी ४ । ” पृथक्त्वेन–एकद्रव्याश्रितानामुत्पादादिपर्यायाणां भेदेन वितर्को–विकल्पः पूर्वगतश्रुतालम्बनो नानानयानुसरणलक्षणो यत्र तत्पृथक्त्ववितर्कं, तथा विचारोऽर्थाद् व्यञ्जने व्यञ्जनादर्थे मनःप्रभृतियोगानां चान्यस्मादन्यतरस्मिन् विचरणं, सह विचारेण यत्तत्सविचारि, सर्वधनादित्वादिन् समासान्तः १ । एकत्वेन–अभेदेनोत्पादादिपर्यायाणामन्यतमैकपर्यायालम्बनतयेत्यर्थो वितर्कः–पूर्वगतश्रुताश्रयो व्यञ्जनरूपोऽर्थरूपो वा यस्य तदेकत्ववितर्कं, तथा न विद्यते विचारोऽर्थव्यञ्जनयोरितस्मादितरत्र तथा मनःप्रभृतीनामन्यतरस्मादन्यत्र यस्य तदविचारीति २ । सूक्ष्मक्रिया यत्र निरुद्धवाङ्मनोयोगत्वे सत्यर्द्धनिरुद्धकाययोगत्वात् तत्सूक्ष्मक्रियं, अप्रतिपाति–अप्रतिपतनशीलं प्रवर्द्धमानपरिणामत्वादेतच्च निर्वाणगमनकाले केवलिन एव स्यादिति ३ । समुच्छिन्ना–क्षीणा क्रिया–कायिक्यादिका शैलेशीकरणे निरुद्धयोगत्वेन यस्मिंस्तत्तथा, अनिवर्त्ति–अव्यावर्त्तनस्वभावमिति ४ । “ सुक्कस्स णं झाणस्स चत्तारि लक्खणा पं० तं० विवेगे १

विउस्सग्गे २ अव्वहे ३ असम्मोहे ४।" देहादात्मन आत्मनो वा सर्वसंयोगानां विवेचनं—बुद्ध्या पृथक्करणं विवेकः १, व्युत्सर्गो निस्सङ्गतया देहोपधित्यागः २, देवाद्युपसर्गजनितं भयं चलनं वा व्यथा तदभावो अव्यथं ३, देवादिकृतमायाजनितस्य सूक्ष्मपदार्थविषयस्य सम्मोहस्य—मूढताया निषेधोऽसम्मोहः ४। " सुक्कस्स णं झाणस्स चत्तारि आलंबणा पं० तं० खंती १ मुत्ती २ अज्जवे ३ मद्दवे ४। सुक्कस्स णं झाणस्स चत्तारि अणुप्पेहाओ पं० तं० अवायाणुप्पेहा १ असुभाणुप्पेहा २ अणंतवत्तियाणुप्पेहा ३ विपरिणामाणुप्पेहा ४, से तं झाणे ५।" अपायानां—प्राणातिपाताद्याश्रवद्वारजन्यानर्थानां अनुप्रेक्षा—ऽनुचिन्तनमपायानुप्रेक्षा १, संसाराशुभत्वानुचिन्तनं २, भवसन्तानस्यानन्तवृत्तितानुचिन्तनं ३, वस्तूनां प्रतिक्षणं विविधपरिणामगमनानुचिन्तनमिति ४। " से किं तं विउस्सग्गे ? विउस्सग्गे दुविहे पं० तं० दव्वविउस्सग्गे १, भावविउस्सग्गे य २। से किं तं दव्वविउस्सग्गे ? २ चउव्विहे पं० तं० सरीरविउस्सग्गे १, गणविउस्सग्गे २, उवहिविउस्सग्गे ३, भत्तपाणविउस्सग्गे ४, से तं दव्वविउस्सग्गे १"। से किं तं भावविउस्सग्गे ? २ तिविहे पं० तं० कसायविउस्सग्गे १, संसारविउस्सग्गे २, कम्मविउस्सग्गे ३।" सं० नारकायुष्कादिहेतूनां मिथ्यादृष्टित्वादीनां त्यागः २, क० ज्ञानावरणादिकर्म्मबन्धहेतूनां ज्ञानप्रत्यनीकत्वादीनां त्यागः ३, " से किं तं कसायविउस्सग्गे ? २ चउव्विहे पं० तं० कोहकसायविउस्सग्गे १, माण० २, माया० ३, लोभ० विउस्सग्गे ४, से तं कसायविउस्सग्गे १। से किं तं संसारविउस्सग्गे ? संसारविउस्सग्गे चउव्विहे पं० तं० नेरइयसंसारविउस्सग्गे १, तिरियसंसा० २, मणुयसंसा० ३, देवसंसा० ४, से तं संसारविउस्सग्गे १। से किं तं कम्मविउस्सग्गे ? २ अट्ठविहे पं० तं० णाणावरणिज्जकम्मविउस्सग्गे १, दरिसणावरणीय० २, वेयणीय० ३, मोहणीय० ४, आउय० ५, नाम० ६, गोय० ७,

अंतरायकम्मविउस्सग्गे ८, से तं कम्मविउस्सग्गे। से तं भावविउस्सग्गे २ ।" इदं प्रायश्चित्तादि लौकिकैरनभिलषितत्वात् तत्रान्तरैश्च भावतोऽनासेव्यमानत्वात् मोक्षप्राप्त्यन्तरङ्गत्वाच्चाभ्यन्तरमिति । अथ वीर्याचारः—"अणिगूहियवलविरिओ, परक्कमइ जो जहुत्तमाउत्तो । जुंजइ य जहाथामं, नायव्वो वीरियायारो ॥ १ ॥ " अनिगूहितवलवीर्यो—ऽनिह्नुतबाह्याभ्यन्तरसामर्थ्यः सन् पराक्रमते—चेष्टते यो यथोक्तं षट्त्रिंशल्लक्षणं आचारमाश्रित्येति गम्यम् । षट्त्रिंशद्विधत्वं च ज्ञानदर्शनचारित्राचाराणामष्टविधत्वात् तप आचारस्य च द्वादशविधत्वात्, उपयुक्तः—अनन्यचित्तः पराक्रमते ग्रहणकाले तत ऊर्ध्वं युनक्ति च—प्रवर्त्तयति च यथास्थाम—यथासामर्थ्यं ज्ञातव्योऽसौ वीर्याचारः, आचाराचारवतोः कथञ्चिदभेदादिति । गाथाछन्दः ॥ २० ॥

पूर्वमाचारेषु चारित्राचारः प्रतिपादितः, स तु शुद्धपिण्डादिग्रहणे स्यादित्याह—

पिंडं उवहिं सिज्जं, उग्गमउप्पायणेसणासुद्धं । चारित्तरक्खणट्ठा, सोहिंतो होइ स चरित्ती ॥ २१ ॥

व्याख्या—पिण्डश्चतुर्विधाहारलक्षणः, उपधिरौघिकौपग्रहिकलक्षणः, तत्रौघिकस्त्रिविधः—मुखवस्त्रिका १ पात्रकेसरिका २ गुच्छकः ३ पात्रस्थापनं ४ चेति चतुर्विधो जघन्यः १, पटलानि १ रजस्त्राणं २ पात्रबन्धः ३ चोलपट्टः ४ मात्रकं ५ रजोहरणं ६ चेति षड्विधो मध्यमः २, पतद्ग्रहः १ कल्पत्रयं ४ चेति चतुर्विध उत्कृष्टः ३। औपग्रहिकोपधिरपि त्रिधा—तत्र पीठ १ पादप्रोञ्छन २ दण्डकप्रमार्जन ३ डगल ४ सूची ५ नखहरणी ६ कर्णशोधना७दिरूपो जघन्यः, संस्तारक १ उत्तरपट्ट २ दण्डक ३ उच्चार ४ प्रस्रवण ५ खेलमल्लक ६ योगपट्ट ७ सन्नाहपट्ट ८ चिलिमिल्या९दिरूपो मध्यमः, अक्ष १ पञ्चविधपुस्तका२दिरूप उत्कृष्टः । विशेषतस्तु औघिकोपग्रहिकौपधिस्वरूपं यतिजीतकल्पटिकादिभ्योऽवसेयम् । शय्या-

वसतिः एतत्रयमुद्गमोत्पादनैषणादोषशुद्धम्, तत्र गृहिप्रभवाः षोडशोद्गमदोषा गृहिणा प्रायेण तेषां क्रियमाणत्वात्, प्रायेणेत्युक्ते स्वद्रव्यक्रीतस्वभावक्रीतलोकोत्तरप्रामित्यलोकोत्तरपरिवर्त्तितरूपदोषाः साधुनाऽपि क्रियमाणा अवसेया इति, साधुसमुत्थाः षोडशोत्पादना दोषाः साधुनैव तेषां विधीयमानत्वात्, गृहिसाधुजन्यदशग्रहणैषणादोषाः शङ्कितदोषस्य साधुभावापरिणतदोषस्य च साधुजन्यत्वाच्छेषाणां च गृहिप्रभवत्वात्, तैः शुद्धं–रहितं चारित्ररक्षणार्थं–संयमपरिपालनार्थं शोधयन्–उत्पादयन्नाचार्यो भवति सचारित्री सह चारित्रेण वर्त्तते यः स सचारित्री सर्वधनादीत्वादिन् समासान्तः चारित्रवानित्यर्थः। तत्रोद्गमादि दोषस्वरूपं किञ्चिद् यथा–" आहाकम्मु१देसिय २ पूईकम्मे अ ३ मीसजाए य ४। ठवणा ५ पाहुडियाए ६, पाओयर ७ कोय ८ पामिच्चे ९ ॥ १ ॥ परियट्टिए १० अभिहडु ११–ब्भिन्ने १२ मालोहडे य १३ अच्छिज्जे १४। अणिसिट्ठ १५ ज्झोयरए १६, सोलसपिंडुग्गमे दोसा ॥ २ ॥ " आधानमाधा प्रस्तावात्साधुप्रणिधानं अमुकस्मै साधवे देयमिति तया, आधाय वा साधून् कर्म षड्जीवनिकायविराधनादिना भक्तादिपाकक्रिया आधाकर्म्म तद्योगाद् भक्ताद्यपि तथा निरुक्ताद्यलोपः १, उद्देशनमुद्देशो वा यावदर्थिकादिप्रणिधानं तेन निर्वृत्तं उद्दिश्य कृतं वा औद्देशिकम् २, शुद्धस्याप्यविशुद्धभक्तमीलनात् पूतिकर्म, आधाकर्माद्यवयवः पूतिः तद्योगाद्वा ३, मिश्रेण–किञ्चिद् गृहयोग्यं किञ्चित्साधूनामिति विकल्पेन जातं–पाकादिभावमुपागतं मिश्रजातं ४, स्थाप्यते साधुदानार्थं किञ्चित्कालं इति स्थापना ५, प्र–इतिविवक्षितकालादौ आ–इति साध्वागमनरूपमर्यादया विवाहादिकरणेन भृता–धारिता या भिक्षा, स्वार्थिके कप्रत्यये प्राभृतिका ६, यत्यर्थं देयवस्तुनः प्रकटीकरणं–प्रादुःकरणं ७, क्रीतं द्रव्यादिना ८, साध्वर्थमुद्धारानीतं प्रामित्यं अपमित्यं

वा ९, परिवर्त्तितं—साध्वर्थं कृतपरावर्त्तं १०, अभिमुखं—साध्वालयं आनीय दत्तं अभ्याहृतं ११, उद्भेदनं उद्भिन्नं साध्वर्थं कुशूलघटादेरुद्घाटनं तद्योगाद् भक्ताद्यपि तथा १२, मालादेः शिक्यादेरपहृतं—साध्वर्थमानीतं मालापहृतं १३, आच्छिद्यते-अनिच्छतोऽपि पुत्रादेः सकाशात् साधुदानाय गृह्यते तदाछेद्यं १४, बहूनां सत्कं शेषैरननुज्ञातं एकेन दत्तं अनिसृष्टं १५, अधीत्याधिक्येनाऽवपूरणं स्वार्थदत्तार्द्रहणादेर्भरणं अध्यवपूरः स एवाध्यवपूरकः तद्योगाद् भक्ताद्यपि १६, इतरत्र गम्यमानत्वादित्येवं षोडश पिण्डोद्गमे—आहारोत्पत्तौ दोषाः स्युरिति शेषः । "धाई १ दूइ २ निमित्ते ३, आजीव ४ वणीमगे ५ तिगिच्छा य ६ । कोहे ७ माणे ८ माया ९, लोभे १० य हवंति दस एए ॥ १ ॥ पुव्विपच्छासंथव ११, विज्जा १२ मंते य १३ चुन्न १४ जोगे य । उप्पायणाइदोसा, सोलसमे मूलकम्मे य १६ ॥ २ ॥" बालानां धात्रीकर्म १, दूतीकर्म परस्परं सन्दिष्टार्थकथनात् २, निमित्तं—अतीताद्यर्थसूचनं ३, आजीवो—जात्यादिकथनात् उपजीवनं ४, वनीपकं—अभीष्टजनप्रशंसनम् ५, चिकित्सा—रोगप्रतीकारः ६, क्रोध ७ मान ८ माया ९ लोभाः प्रतीताः १०, तथा पूर्वं पश्चाद्वा संस्तवो—दातृश्लाघनम् ११, विद्या—देव्यधिष्ठिता ससाधना च १२, मन्त्रो—देवाधिष्ठितोऽसाधनश्च १३, चूर्णो—नयनाञ्जनादिरूपः १४, योगश्च—सौभाग्यादिकृद् द्रव्यनिचयः १५, एतेषां प्रयोगात् उत्पादना दोषाः, षोडशो मूलकर्म च १६, तत्र मूलं—दशप्रायश्चित्तानां मध्ये अष्टमं तत्प्राप्तिनिबन्धनं कर्म गर्भघाताद्यपि मूलकर्म, मूलानां वा—वनस्पत्यवयवानां कर्म—औषधाद्यर्थं छेदनादिक्रिया मूलकर्म, चः समुच्चये ॥ २ ॥ " संकिय १ मक्खिय २ निक्खित्त ३, पिहिय ४ साहरिय ५ दायगु६म्मीसे ७ । अपरिणय ८ लित्त ९ छड्डिय १०, एसणदोसा दस हवंति ॥ १ ॥ " शङ्कितं—सम्भाविताधाकर्मादिदोषं भक्तादि १, म्रक्षितं—सचित्ता-

दिभिः २, निक्षिप्तं–न्यस्तं सचित्तादिपु ३, पिहितं–तैः स्थगितं ४, संहृतं–तस्मादन्यत्र क्षिप्तम् ५, दायका–बालकादयः तैर्दीयमानं ६ उन्मिश्रं–सचित्ताचित्तयुक्तम् ७, अपरिणतं द्रव्यं भावो वा ८, लिप्तं–खरण्टितं ९, छर्दितं–परिशाटनावत् १०, एवमेषणादोषा दश भवन्ति १। प्रस्तावाद् ग्रासैषणा दोषा अपि पञ्चोच्यन्ते–'संजोयणा १ पमाणे २, इंगाले ३ धुम ४ कारणे पढमा। वसहिबहिरंतरे वा, रसहेउं दव्वसंजोगा ॥ १ ॥" संयोजना–रसगृद्ध्या गुणान्तरार्थं द्रव्यान्तरयोजनं १, प्रमाणं मानमतिक्रम्य भोजनं २, अङ्गार इति चारित्रेन्धनस्य रागाग्निना अङ्गारस्येव करणं ३, 'धुम' त्ति चरणेन्धनस्य द्वेषेण धुमवत्करणं वतुःप्रत्ययलोपात् धूमः ४, कारणं–भोजनहेत्वनाश्रयणं ५, इति किञ्चिन्न्यूनगाथार्द्धार्थः। इति सङ्क्षेपेण सप्तचत्वारिंशद्दोषस्वरूपं विस्तरतस्तु पिण्डनिर्युक्त्यादिभ्यो ज्ञेयम्। इदं च दोषस्वरूपं पिण्डमाश्रित्योक्तम्। एवं वस्त्रादीन्यप्याश्रित्य यथासम्भवं ज्ञेयम्। अथ प्रसङ्गतो गुरुलघुदोषस्वरूपं यथा–तत्र सर्वगुरुमूलकर्म, तत्र मूलं १८०। तस्माच्चाधाकर्म्मकं कर्म्मोद्देशिकचरमत्रिकं मिश्रान्त्यद्विकं बादरप्राभृतिका सप्रत्यपायाभ्याहृतं लोभपिण्डोऽनन्तकायाव्यवहितनिक्षिप्तपिहितसंहृतमिश्रापरिणतछर्दितानि संयोजना साङ्गारवर्त्तमानभविष्यन्निमित्तं चेति लघवो दोषा मूलप्रायश्चित्ताच्चतुर्थतपोवत्। एतेभ्यः कर्म्मोद्देशिकाद्यभेदो मिश्रप्रथमभेदो धात्रीत्वं दूतीत्वमतीतनिमित्तमाजीवनापिण्डो वनीपकत्वं बादरचिकित्साकरणं क्रोधमानपिण्डौ सम्बन्धिसंस्तवकरणं विद्यायोगचूर्णपिण्डाः प्रकाशकरणं द्विविधम् द्रव्यक्रीतमात्मभावक्रीतं लौकिकप्रामित्यपरावर्त्तिते निःप्रत्यपायपरग्रामाभ्याहृतं पिहितोद्भिन्नं कपाटोद्भिन्नमुत्कृष्टमालापहृतं सर्वमाच्छेद्यं सर्वमनिसृष्टं पुरःकर्म्म पश्चात्कर्म्म गर्हितम्रक्षितं संसक्तम्रक्षितं प्रत्येकाव्यवहितनिक्षिप्तपिहितसंहृतमिश्रापरिणतछर्दितानि प्रमाणोल्लङ्घनं सधूमकारण-

भोजनं चेति लघवश्चतुर्थादाचाम्लमिव । एतेभ्योऽप्यध्यवपूरकान्त्यभेदद्वयं कृतभेदचतुष्टयं भक्तपानपूतिकं मायापिण्डोऽनन्तकायव्यवहितनिक्षिप्तपिहितादीनि मिश्रानन्ताव्यवहितनिक्षिप्तादीनि चेति लघव आचाम्लादेकभक्तमिव । एतेभ्योऽप्यौघौद्देशिकमुद्दिष्टभेदचतुष्टयमुपकरणपूतिकं चिरस्थापितं प्रकटकरणं लोकोत्तरपरावर्त्तितमप्रामित्यं च परभावक्रीतं स्वग्रामाभ्याहृतं दर्दरोद्भिन्नं जघन्यमालापहृतं प्रथमाध्यवपूरकः सूक्ष्मचिकित्सा गुणसंस्तवकरणं मिश्रकर्दमेन लवणसेटिकादिना च म्रक्षितं पिष्टादिम्रक्षितं किञ्चिद्दायकदुष्टं प्रत्येकपरम्परस्थापितादीनि मिश्रानन्तरस्थापितादीनि चेति लघव एकभक्तात्पुरिमार्द्धमिव । एतेभ्योऽपि चेत्वरस्थापितं सूक्ष्मप्राभृतिका सस्निग्धसरजस्कम्रक्षितं प्रत्येकमिश्रपरम्परस्थापितादीनि चेति लघवः पुरिमार्द्धान्निर्विकृतिकमिवेति । गाथाछन्दः ॥ २१ ॥ ॥ पुनरप्याचार्यगुणानाह—

**अप्परिसावी सम्मं, समपासी चेव होइ कज्जेसु । सो रक्खइ चक्खुंपि व, सबालवुड्ढाउलं गच्छं ॥२२॥**

व्याख्या—न परिश्रवति परकथितात्मगुह्यजलमित्येवं शीलोऽपरिश्रावी आलोचनामाश्रित्य आचाराङ्गोक्ततृतीयभङ्गतुल्य इत्यर्थः । भङ्गाश्चैते—एको ह्रदः परिगलत्श्रोताः पर्यागलत्श्रोताश्च शीताशीतोदाप्रवाहह्रदवत्, यतस्तत्र जलं निर्गच्छत्यागच्छति च १ । अपरस्तु परिगलत्श्रोताः नो पर्यागलत्श्रोताः पद्मह्रदवत्, पद्मह्रदे तु जलं निर्गच्छति नत्वागच्छति २ । तथा परो नो परिलगत्श्रोताः पर्यागलत्श्रोताश्च लवणोदधिवत्, लवणे आगच्छति जलं न तु निर्गच्छति ३ । अपरस्तु नो परिगलत्श्रोताः नो पर्यागलत्श्रोताश्च मनुष्यलोकाद्बहिः समुद्रवत्तत्र नागच्छति न च निर्गच्छति ४ । तत्राचार्यः श्रुतमङ्गीकृत्य प्रथमभङ्गपतितः श्रुतस्य दानग्रहणसद्भावात् १, साम्परायिककर्म्मापेक्षया तु द्वितीयभङ्गपतितः कषायोदयाभावेन ग्रहणाभावा-

त्तपःकायोत्सर्गादिना क्षपणापत्तेश्च साम्परायिककर्म तु कषायकर्म्म २, आलोचनामङ्गीकृत्य तृतीयभङ्गपतितः आलोचनाया अप्रतिश्रावित्वात् ३, कुमार्गं प्रति चतुर्थभङ्गपतितः कुमार्गस्य हि प्रवेशनिर्गमाभावात् ४, यदि वा केवलश्रुतमाश्रित्य भङ्गा योज्यन्ते । तत्र स्थविरकल्पिकाचार्याः प्रथमभङ्गपतिताः १, द्वितीयभङ्गपतितास्तु तीर्थकृतः २, तृतीयभङ्गस्था यथालन्दिकाः तेषां च क्वचिदर्थापरिसमाप्तावाचार्यादेर्निर्णयसद्भावात् ३, प्रत्येकबुद्धास्तूभयाभावाच्चतुर्थभङ्गस्थाः ४, सम्यक्–सर्वथेत्यर्थः, ' समपासी चेव होइ कज्जेसु ' त्ति समं–अविपरीतं पश्यतीत्येवंशीलः समदर्शी 'दृशो नियच्छपेच्छ' (८–४–१८१) इत्यादिना दृशः पासादेशः एवंविध एव यो भवति क्व कार्येषु–आगमव्याख्यानादिसकलव्यापारेष्वित्यर्थः, स आचार्यः रक्षति–धत्ते कुमार्गे पतन्तमिति शेषः, कं गच्छं–गणं किम्भूतं सबालाश्च ते वृद्धाश्च सबालवृद्धाः तैराकुलः–सङ्कीर्णस्तं सबालवृद्धाकुलं किमिव चक्षुरिव यथा चक्षुर्गर्त्तादौ पतन्तं जन्तुगणं धत्ते तथाऽयमपीत्यर्थः । गाथाच्छन्दः २२ ॥ अथ गाथाद्वयेनाधमाचार्यस्वरूपमाह—

**सीयावेइ विहारं, सुहसीलगुणेहिं जो अबुद्धीओ । सो नवरि लिंगधारी, संजमजोएण णिस्सारो ॥ २३ ॥**

व्याख्या—' जो अबुद्धीओ ' त्ति य आचार्योऽबुद्धिकस्तत्त्वज्ञानरहितः ' सीयावेइ ' त्ति सीदयति–शिथिलीकरोति, कं विहारं नवकल्परूपं गीतार्थादिरूपं च कैः सुखशीलगुणैः सुखशीलस्य–शाताभिलाषिणो गुणाः पार्श्वस्थादिस्थानानि सुखशीलगुणास्तैः अत्र किञ्चिद्विहारस्वरूपं बृहत्कल्पसूत्रतो यथा–" से गामंसि वा जाव पुडभेयणंसि वा सपरिक्खेवंसि अबाहिरियंसि कप्पइ निग्गंथाणं हेमंतगिम्हासु एकं मासं वत्थए " सुगमं नवरं सपरिक्षेपे वृत्त्यादिरूपपरिक्षेपयुक्ते प्राकारबहिर्वत्तिनी गृहपद्धतिर्बाहिरिका न विद्यते बाहिरिका यत्र तदबाहिरिकं तस्मिन् " से गामंसि वा जाव रायहाणिंसि वा सपरि-

क्खेवंसि सबाहिरियंसि कप्पइ निग्गंथाणं हेमंतगिम्हासु दोमासे वत्थए, अंतो एक्कं मासं बाहिं एक्कं मासं, अंतोवसमाणाणं अंतोभिक्खायरिया बाहिंवसमाणाणं बाहिंभिक्खायरिया । से गामंसि वा जाव रायहाणिंसि वा सपरिक्खेवंसि अबाहिरियं- सि कप्पइ निग्गंथीणं हेमंतगिम्हासु दोमासे वत्थए । से गामंसि वा जाव रायहाणिंसि वा सपरिक्खेवंसि सबाहिरियंसि कप्पइ निग्गंथीणं हेमंतगिम्हासु चत्तारि मासे वत्थए, अंतो दोमासे बाहिं दो मासे, अंतो वसंतीणं अंतो भिक्खायरिया बाहिं वसंतीणं बाहिं भिक्खायरिया । कप्पइ निग्गंथाण वा २ पुरत्थिमे णं जाव अंगमगहाओ एत्तए १, दक्खिणे णं कप्पइ निग्गंथाण वा निग्गंथीण वा जाव कोसंबीओ एत्तए २, पच्चत्थिमे णं जाव थूणा विसयाओ एत्तए ३, उत्तरे णं जाव कुणाला- विसयाओ एत्तए ४, एतावता व कप्पइ एतावता व आयरियखेत्ते णो से कप्पइ एत्तो बाहिं, तेण परं जत्थ णाणदंसणचरि- त्ताइं उस्सप्पंति । ” सुगमम् । नवरं एत्तए विहर्त्तुं ‘ तेण परं ’ ति ततः परं बहिर्देशेषु यत्र ज्ञानदर्शनचारित्राणि उत्सर्प्पन्ति- स्फीतिमासादयन्ति तत्र विहर्त्तव्यमिति श्रीबृहत्कल्पप्रथमोद्देशके । किञ्चाचरणया तु दुःषमाद्यालम्बनतः श्रीहरिभद्रसूरि- कालेऽपि मासकल्पो विहार एवावसीयते । यत उक्तं श्रीहरिभद्रसूरिपादैरेव स्वोपज्ञपञ्चवस्तुकगत २७९ गाथावृत्तौ प्रतिदिनक्रियाभिधद्वितीयद्वारगतप्रत्युपेक्षणाप्रमार्जनाधिकारे यथा-“ अवलंबिऊण कज्जं, जं किंचि समायरंति गीअत्था । थोवावराहबहुगुण, सव्वेसिं तं पमाणं तु ॥१॥ व्याख्या-अवलम्ब्य-आश्रित्य कार्यं यत्किञ्चिदाचरन्ति-सेवन्ते गीतार्थाः-आग- मविदः स्तोकापराधं बहुगुणं मासकल्पविहारवत् सर्वेषां जिनमतानुसारिणां तत्प्रमाणमेव उत्सर्गापवादरूपत्वादागमस्येति । ” अथ गीतार्थादिरूपो यथा-“ गीयत्थो य विहारो, बीओ गीयत्थनिस्सिओ भणिओ । इत्तो तइयविहारो, नाणुन्नाओ

जिणवरेहिं ॥ १ ॥ " गीतः—परिज्ञातोऽर्थो यैस्ते गीतार्था जिनकल्पिकादयस्तेषां स्वातन्त्र्येण यद्विहरणं स गीतार्थो नाम प्रथमो विहारः, तथा गीतार्थस्य—आचार्योपाध्यायलक्षणस्य निश्रिताः—परतन्त्रा यद्दृच्छवासिनो विहरन्ति स गीतार्थनिश्रितो नाम द्वितीयो विहारो भणितः, इत ऊर्ध्वमगीतार्थस्य स्वच्छन्दविहाररूपस्तृतीयो नानुज्ञातो जिनवरैर्भगवद्भिस्तीर्थकरैरिति । अथैनामेव निर्युक्तिगाथां विवृणोति । " गीअं मुणितेगट्ठं, विदियत्थं खलु वयंति गीयत्थं । गीएण य अत्थेण य, गीयत्थो वा सुयं गीयं ॥ १ ॥ " गीतं मुणितमिति चैकार्थं ततश्च विदितो—मुणितः परिज्ञातार्थः छेदसूत्रस्य येन तं विदितार्थं खलु वदन्ति गीतार्थं, यद्वा गीतेन च अर्थेन च यो युक्तः स गीतार्थो भण्यते । गीतार्थावस्य विद्येते इति अभ्रादित्वादमत्ययः । अथ गीतं किमुच्यते अत आह—श्रुतं—सूत्रं गीतमित्यभिधीयते एतदेव भावयति । " गीएण होइ गीई, अत्थी अत्थेण होइ नायव्वो । गीएण य अत्थेण य, गीयत्थं तं विजाणाहि ॥ १ ॥ " इह सूत्रार्थधरत्वे चतुर्भङ्गी तद्यथा—सूत्रधरो नामैको नार्थधरः १, अर्थधरो नामैको न सूत्रधरः २, एकः सूत्रधरोऽप्यर्थधरोऽपि ३, अपरो न सूत्रधरो नार्थधरः ४, अयं चतुर्थो भङ्ग उभयशून्यत्वादवस्तुभूतः शेषं भङ्गत्रयमधिकृत्याह—गीतेन—सूत्रेण केवलेन सम्यक्पठितेन गीतमस्यास्तीति गीति भवति, अर्थेन केवलेन सम्यगधिगतेनार्थी भवति ज्ञातव्य अर्थधर इत्युक्तं भवति, यस्तु गीतेन चार्थेन चोभयतोऽपि युक्तस्तं गीतार्थं विजानीहि इति । इदमत्र तात्पर्यम्—तृतीयभङ्गवर्त्त्येव तत्त्वतो गीतार्थशब्दमविकलमुद्वोढुमर्हति न प्रथमद्वितीयभङ्गवर्त्तिनाविति । अथ येषां गीतार्थानां तन्निश्रितानां वा विहारो भवति तान् दर्शयति—" जिणकप्पिओ गीयत्थो, परिहारविसुद्धिओ वि गीयत्थो । गीयत्थे इड्ढिदुगं, सेसा गीयत्थनीसाए ॥ १ ॥ " जिनकल्पिको नियमाद् गीतार्थः, परिहार-

विशुद्धिकोऽपिशब्दात् प्रतिमाप्रतिपन्नको यथालन्दकल्पिकश्चावश्यन्तया गीतार्थः, जघन्यतोऽप्यधीतनवमपूर्वान्तर्गताचारनामक-तृतीयवस्तुकत्वादेषामिति । तथा गच्छे गीतार्थविषयमृद्धिमतोराचार्योपाध्याययोर्द्विकं द्रष्टव्यम्, सूत्रे मतुलोपः प्राकृतत्वात् । आचार्य उपाध्यायो वा नियमाद् गीतार्थ इत्यर्थः । एषां सर्वेषामपि स्वातन्त्र्येण विहारो विज्ञेयः । शेषाः साधवो गीतार्थ-निश्रया आचार्योपाध्यायलक्षणगीतार्थपारतन्त्र्येण विहरन्ति इदमेव पश्चार्द्धं भावयति–" आयरियगणी इड्ढी, सेसा गीता वि होंति तन्नीसा । गच्छगयनिग्गया वा, ठाणनिउत्ताऽनिउत्ता वा ॥ १ ॥ आचार्यः–सूरिः गणी–उपाध्यायः एतौ यत ऋद्धि-मन्तौ–सातिशयज्ञानादिऋद्धिसम्पन्नौ अतिशायनेऽत्र मत्वर्थीयः यथारूपवती कन्येत्यादौ अतः शेषाः साधवो गीतार्था अपि तन्निश्रया आचार्योपाध्यायपरतन्त्रतया विहरन्ति । अथ के ते शेषा इत्याह–गच्छगता गच्छनिर्गता वा तत्र गच्छगता-गच्छमध्यवर्त्तिनः गच्छनिर्गता ' असिवे ओमोअरिए ' इत्यादिभिः कारणैरेकाकीभूताः; अथवा स्थाननियुक्ताः स्थानानि-युक्ता वा स्थाने–पदे नियुक्ता–व्यापारिताः स्थाननियुक्ताः प्रवर्त्तकस्थविरगणावच्छेदकाख्याः पदस्थगीतार्था इत्यर्थः । तद्वि-परीताः स्थानानियुक्ताः सामान्यसाधव इत्यर्थः । एते सर्वेऽप्याचार्योपाध्यायनिश्रया विहरन्ति । कथमित्याह–" आयारपक-प्पधरा, चोद्दसपुव्वी अ जे य तं मज्झा । तन्नीसाइ विहारो, सबालवुड्ढस्स गच्छस्स ॥ १ ॥ " आचारप्रकल्पधरा–निशीथा-ध्ययनधारिणो जघन्या गीतार्थाश्चतुर्दशपूर्विणः पुनरुत्कृष्टास्तन्मध्यवर्त्तिनः कल्पव्यवहारदशाश्रुतस्कन्धधरादयो मध्यमास्तेषां जघन्यमध्यमोत्कृष्टानां गीतार्थानां निश्रया सबालवृद्धस्यापि गच्छस्य विहारो भवति न पुनरगीतार्थस्य स्वच्छन्दमेकाकि-विहारः कर्तुं युक्तः, कुत इति चेत् ? उच्यते–" एगविहारी अज्जाय–कप्पिओ जो भवे चवणकप्पे । उवसंपन्नो मंदो, होहिइ

वोसट्ठतिट्ठाणो ॥ १ ॥ ” एकः सन् विहरतीत्येवं शील एकविहारी स च अजातकल्पिकोऽगीतार्थस्तथा च्यवनं–चारित्रात् प्रतिपतनं तस्य कल्पः–प्रकारश्च्यवनकल्पः पार्श्वस्थादिविहार इत्यर्थः, तस्मिन् यो भवेत् स एकाकित्वमुपसम्पन्नः–प्रतिपन्नः सन् मन्दः–सद्बुद्धिविकलो भविष्यति व्युत्सृष्टत्रिस्थानः व्युत्सृष्टानि–परित्यक्तानि त्रीणि स्थानानि ज्ञानादिरूपाणि येन स व्युत्सृष्टत्रिस्थानः । एषा निर्युक्तिगाथा अथैनामेव विवृणोति–“ मुत्तूण गच्छनिग्गय, गीयस्स वि एक्कगस्स मासो उ । अविगीए चउगुरुगा, चवणे लहुगा य भंगट्ठा ॥ १ ॥ ” मुक्त्वा गच्छनिर्गतान्–जिनकल्पिकादीन् गीतार्थस्यापि एककस्य –एकाकिविहारं कुर्वतो मासलघु अविगीते–अगीतार्थे एकाकिविहारिणि चत्वारो गुरुकाः च्यवने–पार्श्वस्थादिविहारे यदि मनसाऽपि सङ्कल्पं कुरुते तदा चत्वारो लघुकाः, इत्यादि श्रीबृहत्कल्पवृत्तिपीठिकायां तथा व्यवहारवृत्तिद्वितीयोद्देशकेऽपि “ गीअत्थो अ विहारो, वीओ गीअत्थनिस्सिओ भणिओ । इत्तो तइअविहारो नाणुन्नाओ जिणवरेहिं ॥ १ ॥ ” विहारः प्रथमो भवति गीतार्थः गीतार्थसाध्वात्मकः, द्वितीयो गीतार्थनिश्रितः गीतार्थस्य निश्रा–संश्रयणं गीतार्थनिश्रा सा सञ्जाता, अस्य पाठान्तरं गीतार्थमिश्रित इति, तत्र गीतार्थसंयुक्त इति व्याख्येयमिति, आभ्यां गीतार्थगीतार्थनिश्रिताभ्यामन्यस्तृतीयो विहारो नानुज्ञातो जिनवरेन्द्रैरित्यादि । तथौघनिर्युक्तावपि यथा–“ गीयत्थो अ विहारो, वीओ गीअत्थनिस्सिओ भणिओ । इत्तो तइअविहारो, नाणुन्नाओ जिणवरेहिं ॥ १ ॥ संजमआयविराहण, नाणे तह दंसणे चरित्ते य । आणालोवु जिणाणं, कुवइ दीहं च संसारं ॥२॥ संजमओ छक्काया, आया कंटट्ठिजीरगेलन्ने । नाणे नाणायारं, दंसणचरगाइवुग्गाहे ॥३॥” अथ कः कृत्वा विहारं सादयतीत्याह–‘ सुहसीलगुणेहिं ’ति सुखशीलस्य–साताभिलाषिणो गुणाः–पार्श्वस्थादिस्थानानि

सुखशीलगुणास्तैः, सुखशीलगुणाः पुनः उपदेशमालाचतुर्थशतोक्ता यथा 'बायालमेसणाओ, न रक्खई धाइसिज्जपिंडं च। आहारेई अभिक्खं, विगईओ सन्निहिं खाइ ॥ १ ॥ सूरप्पमाणभोई, आहारेई अभिक्खमाहारं। न य मंडलीइ भुंजइ, न य भिक्खं हिंडई अलसो ॥ २ ॥" सूर० यावदादित्यस्तिष्ठति तावत् ।२। "कीवो न कुणइ लोयं, लज्जइ पडिमाइ जल्लमवणेइ। सोवाहणो य हिंडइ, बंधइ कडिपट्टयमकज्जे ॥ ३ ॥" प्रतिमया कायोत्सर्गेण ३ "गाम० देसं च कुलं, ममायए पीठफलगपडिबद्धो। घरसरणेसु पसज्जइ विहरइ सकिंचणो रिक्को ॥ ४ ॥" ममैतदिति मन्यते, गृहस्मरणेषु—पूर्वोपभुक्तचिन्तनेषु सकिञ्चनः—हिरण्यादियुक्तस्तथापि रिक्तो—निर्ग्रन्थोऽहमिति प्रकाशयति ४। "नहदंतकेसरोमे, जमेइ उच्छोलधोयणो अजओ। वाहेइ अ पलियंकं, अइरेगपमाणमच्छरइ ॥ ५ ॥" 'जमेइ' त्ति राढया समारचयति अयतो—गृहस्थकल्पः वाहेइ—परिभुङ्क्ते संस्तारपट्टातिरिक्तं आस्तृणाति—संस्तारयतीति ५। "सोवइ य सव्वराई, नीसट्ठमचेयणो न वा सरइ। न पमज्जंतो पविसइ, निसीहिआवस्सियं न करे ॥ ६ ॥" न वा० स्वाध्यायं न करोति ६ "पाय पहे न पमज्जइ, जुगमायाए न सोहए इरियं। पुढविदगअगणिमारुय—वणस्सइतसेसु निरविक्खो ॥ ७ ॥ सव्वं थोवं उवहिं, न पेहए न य करेइ सज्झायं। सद्दकरो झंझकरो, लहुओ गणभेयतत्तिल्लो ॥ ८ ॥" स० विकाले झं० कलहः ग० गणविघटनतत्परः ८। "खित्ताईयं भुंजइ, कालाईयं तहेव अविदिन्नं। गिण्हइ अणुइयसूरे, असणाई अहव उवकरणं ॥ ९ ॥" खि० अतिक्रान्तद्विगव्यूतं, ग्रहणकालात्पौरुषीत्रयातिवाहने ९। "ठवणकुले न ठवेई, पासत्थेहिं च संगयं कुणइ। निच्चमवज्झाणरओ, न य पेहपमज्जणासीलो ॥ १० ॥" नि० दुष्टचित्तः १०। रियई य दवदवाए, मूढो परिभवइ तह य रायणिए। परपरिवायं गिण्हइ, निठुरभासी विगहसीलो

॥ ११ ॥ विज्जं मन्तं जोगं, तेगिच्छं कुणइ भूइकम्मं च । अक्खरनिमित्तजीवी, आरंभपरिग्गहे रमइ ॥ १२ ॥ कज्जेण विणा उग्गह–मणुजाणावेइ दिवसओ सुयइ । अज्जियलाभं भुंजइ । इत्थिनिसिज्जासु अभिरमइ ॥ १३ ॥ " नि० तदुत्थानानन्तरमभिरमते । १३ । " उच्चारे पासवणे, खेले सिंघाणए अणाउत्तो । संथारगउवहीणं, पडिकमइ वा सपाउरणो ॥ १४ ॥ " उपरि स्थितः सपा० साच्छादनः १४ । " न करेइ पहे जयणं, तलियाणं तह करेइ परिभोगं । चरइ अणुबद्धवासे सपक्खपरपक्खओमाणे ॥ १५ ॥ " अणु० वर्षाकाले १५ । इत्यादि स ' नवरि ' त्ति केवलं लिङ्गधारी–वेषमात्रधारी संयमः–आश्रवनिरोधरूपस्तस्य योगः प्रतिलेखनादिव्यापारस्तेन रहितत्वात् निरसारश्चर्विततांबूलवदिति । गाथाछन्दः ॥ २३ ॥

**कुलगामनगररज्जं, पयहिय जो तेसु कुणइ हु ममत्तं । सो नवरि लिंगधारी, संजमजोएण निस्सारो ॥२४॥**

व्याख्या–कुलं–गृहं, ग्रामं–सकरं, नगरं–अष्टादशकररहितं, राज्यं–सप्ताङ्गमयं, उपलक्षणत्वात् धूलीप्राकारपरिक्षिप्तं–खेटं, कुनगरं–कर्बटं, सर्वत्रार्द्धतृतीयगव्यूतान्तर्ग्रामान्तररहितं मडम्बं, जलपथोपेतं जलपत्तनं द्वीपमिव, स्थलपथोपेतं स्थलपत्तनं, लोहादिधातुजन्मभूमिरूपमाकरं, जलस्थलपथाभ्यामुपेतं द्रोणमुखं, वणिक्समूहवासं निगममित्यादि ज्ञेयम् । ' पयहिय ' त्ति प्रहाय प्रकर्षेण त्यक्त्वा पुनर्य आचार्यस्तेषु कुलादिषु करोति विधत्ते, हुः-पुनरर्थे, ममत्वं ममैतदित्यभिप्रायमित्यर्थः, स सूरिः ' नवरि ' केवलं वेषधारी संयमयोगेन निरसार इति । गाथाछन्दः ॥ २४ ॥ अथ पुनरपि सुन्दराचार्यप्रशंसामाह–

**विहिणा जो उ चोएइ, सुत्तं अत्थं च गाहइ । सो धन्नो सो अ पुण्णो अ, स बंधू मुक्खदायगो ॥ २५ ॥**

व्याख्या–विधिना ' धम्ममइएहिं अइसुंदरेहिं कारणगुणोवणीएहिं । पल्हायंतो अमणं, सीसं चोएइ आयरिओ ॥१॥"

इत्याद्यागमोक्तप्रकारेण 'जो उ' त्ति यः पुनः आचार्यः 'चोएइ' त्ति चोदयति-प्रेरयति शिष्यगणं कृत्यकरणादौ तथा सूत्रमाचाराङ्गादिश्रुतं विधिनेत्यस्यात्रापि सम्बन्धनात्, "णो कप्पति णिग्गंथाण वा णिग्गंथीण वा खुड्डगस्स वा खुड्डियाए वा अवंजणजायस्स आयारपकप्पे णामं अज्झयणे उद्दिसित्तए १, कप्पति निग्गंथाण वा २ खुड्डगस्स वा २ वंजणजायस्स आयारपकप्पे नामं अज्झयणे उद्दिसित्तए २, कप्पति तिवासपरियागस्स समणस्स निग्गंथस्स आयारपकप्पे नामं अज्झयणे उद्दिसित्तए ३, चउवासपरियाए सूअगडे नामं अंगे उद्दिसित्तए ४, पंचवासपरियाए दसाकप्पे ववहारे ५, अट्ठवासपरि० ठाणसमवाए ६, दसवासपरि० विवाहपन्नत्तीणामं अंगे ७, एक्कारस वा० खुड्डियाविमाणपविभत्ती महल्लियाविमाणपविभत्ती अंगचूलिया वग्गचूलिया विवाहचूलिया ८, बारस वा० अरुणोववाए वरुणोववाए गरुलोववाए धरणोववाए वेसमणोववाए वेलंधरोववाए ९, तेरसवास० उट्ठाणसुए समुट्ठाणसुए देविंदोववाए नागपारियावणियाए १०, चोद्दसवास० महासुमिणभावणा ११, पन्नरसवास० चारणभावणा १२, सोलसवास० आसीविसभावणा १३, सत्तरस वा० दिट्ठिविसभावणा १४, एगूणवीसवास० दिट्ठिवाए नामं अंगे उद्दिसित्तए १५; वीसवासपरियाए समणे निग्गंथे सव्वसुआणुवादी भवतीत्यादि व्यवहारदशमोद्देशकाद्युक्तेन विधिना ग्राहयति-पाठयति । तथा सूत्रपाठनानन्तरं तस्य निर्युक्तिभाष्यचूर्णीसंग्रहणीवृत्तिटिप्पनकादिपरंपरोपलब्धमर्थं च विधिनेत्यस्यात्राप्यभिसम्बन्धनात् "सुत्तत्थो खलु पढमो, बीओ निज्जुत्तिमीसिओ भणिओ। तइओ अ निरवसेसो, एस विही होइ अणुओगे ॥ १ ॥" इति श्रीभगवतीसूत्रपञ्चविंशतितमशतकतृतीयोद्देशकश्रीनन्दिसूत्रावश्यकनिर्युक्त्याद्युक्तेन विधिनैव ग्राहयति-बोधयति, अथवा सूत्रमर्थं च विधिना गाहते-निरन्तरं स्वयमभ्यस्य-

तीत्यर्थः, स आचार्यो धन्यः–पुण्यवान्, अत एव ' सो अ पुण्णो य ' त्ति स च पुण्य एव–पवित्रात्मैव ' स बंधु ' त्ति स बन्धुरिव बन्धुः कुमत्यादिनिवारकत्वेन परमहितकर्तृत्वात्, अत एव ' मोक्खदायगो ' त्ति मोक्षप्राप्तिहेतुज्ञानादिरत्नत्रयलम्भकत्वेन मोक्षदायक इति । अनुष्टुप् छन्दः ॥ २५ ॥

**स एव भव्वसत्ताणं, चक्खूभूए विआहिए । दंसेइ जो जिणुद्दिट्ठं, अणुट्ठाणं जहट्ठिअं ॥ २६ ॥**

व्याख्या–स एव आचार्यो भव्यसत्त्वानां–मोक्षगमनयोग्यजन्तूनां चक्षुर्भूतो–नयनतुल्यो व्याहृतः–कथितो जिनादिभिः, स को यो जिनोद्दिष्टं–आप्तोक्तमनुष्ठानं–मोक्षपथप्रापकरत्नत्रयाराधनमित्यर्थः, यथास्थितं–अवितथं दर्शयति–कुमतिनिराकरणेन प्रकटीकरोतीति । अनुष्टुप् छन्दः ॥ २६ ॥ अथ पूर्वार्द्धेन सूरेर्गुणविशेषेण तीर्थकरसाम्यं, उत्तरार्द्धेनाज्ञोल्लङ्घिनस्तस्य कापुरुषत्वं दर्शयन्नाह–

**तित्थयरसमो सूरी, सम्मं जो जिणमयं पयासेइ । आणं अइक्कमंतो, सो काउरिसो न सप्पुरिसो ॥२७॥**

व्याख्या–स सूरिस्तीर्थकरसमः सर्वाचार्यगुणयुक्ततया सुधर्मादिवत् तीर्थकरकल्पो विज्ञेयः, न च वाच्यं चतुस्त्रिंशदतिशयादिगुणविराजमानस्य तीर्थकरस्योपमा सूरेस्तद्विकलस्यानुचिता, यथा तीर्थकरोऽर्थं भाषते एवमाचार्योऽप्यर्थमेव भाषते, तथा यथा तीर्थकर उत्पन्नकेवलज्ञानो भिक्षार्थं न हिण्डते एवमाचार्योऽपि भिक्षार्थं न हिण्डते, इत्याद्यनेकप्रकारैस्तीर्थकरानुकारित्वस्य सर्वयतिभ्योऽतिशायित्वस्य परमोपकारित्वादेश्च ख्यापनार्थं तस्याः न्याय्यतरत्वात् । किञ्च– श्रीमहानिशीथपञ्चमाध्ययनेऽपि भावाचार्यस्य तीर्थकरसाम्यमुक्तम् । यथा–" से भयवं ! किं तित्थयरसंतिअं आणं नाइक्कमिज्जा, उदाहु

आयरिअसंतिअं ? गोअमा ! चउव्विहा आयरिया भवंति, तं० नामायरिआ ठवणायरिया दव्वायरिया भावायरिया, तत्थ णं जे ते भावायरिआ ते तित्थयरसमा चेव दट्ठव्वा, तेसिं संतिअं आणं नाइक्कमेज्ज " त्ति स कः यः सम्यग्–यथास्थितं जिनमतं–जगत्प्रभुदर्शनं नैगमसङ्ग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूतरूपनयसप्तकात्मकं प्रकाशयति–भव्यानां दर्शयतीत्यर्थः। तथा आज्ञां–तीर्थंकरोपदेशवचनरूपां अतिक्रामन्–वितथप्ररूपणादिनोल्लङ्घयन् स सूरिः कापुरुषः पुरुषाधमः, न सत्पुरुषो–न प्रधानपुरुष इति। इह चाज्ञोल्लङ्घिनः कापुरुषत्वमात्रमैहलौकिकं फलं, पारलौकिकं तु तत्तदनेकदुस्सहदुःखसन्ततिसंवलितमनन्तसंसारित्वं श्रीमहानिशीथपञ्चमाध्ययनोक्तसावद्याचार्यस्येव ज्ञेयम्। तथाहि–अस्या ऋषभादिचतुर्विंशतिकायाः प्रागनन्तकालेन याऽतीता चतुर्विंशतिका, तस्यां मत्सदृशः सप्तहस्ततनुर्धर्मश्रीनामा चरमतीर्थंकरो बभूव। तस्मिंश्च तीर्थंकरे सप्ताश्चर्याणि अभूवन्। असंयतपूजायां प्रवृत्तायामनेके श्राद्धेभ्यो गृहीतद्रव्येण स्वस्वकारितचैत्यनिवासिनोऽभूवन्। तत्रैको मरकतच्छविः कुवलयप्रभनामाऽनगारो महातपस्वी उग्रविहारी शिष्यगणपरिवृतः समागात्। तैर्वन्दित्वोक्तं– अत्रैकं वर्षारात्रिकं चतुर्मासकं तिष्ठ, यथा त्वदीयाज्ञयाऽनेके चैत्यालया भवन्ति, कुर्वस्माकमनुग्रहं, तेनोक्तं–सावद्यमिदं नाहं वाङ्मात्रेणापि कुर्वे। तदेवमनेन भणता सता तीर्थकृन्नामकर्म्मार्जितं, एकभवावशेषीकृतश्च भवोदधिः। ततस्तैः सर्वैरेकमतं कृत्वा तस्य सावद्याचार्य इति नाम दत्तं प्रसिद्धिं नीतं च। तथाऽपि तस्य तेष्वीषदपि कोपो नाभूत्। अन्यदा तेषां लिङ्गमात्रप्रव्रजितानां मिथः आगमविचारो बभूव। यथा श्राद्धानामभावे संयता एव मठदेवकुलानि रक्षन्ति पतितानि च समारचयन्ति। अन्यदपि यत्तत्र करणीयं तस्यापि करणे न दोषः। केऽप्याहुः–संयमो मोक्षनेता, केचिदूचुः प्रासादावतंसके पूजासत्कारबलिविधाना-

दिना तीर्थोत्सर्पणेनैव मोक्षगमनम् । एवं तेषां यथेच्छं प्रलपतां विवादेऽन्य आगमकुशलो नास्ति कोऽपि यो विवादं भनक्ति। सर्वैः सावद्याचार्य एव प्रमाणीकृत आकारितो दूरदेशात्सप्तभिर्मासैर्विहरन् समागात्। एकयार्यया श्रद्धावशात् प्रदक्षिणीकृत्य झगिति मस्तकेन पादौ सङ्घट्टयन्त्या ववन्दे दृष्टस्तैर्वन्द्यमानः । अन्यदा स तेषामग्रे श्रुतार्थकथनेऽस्यैव महानिशीथस्य पञ्चमाध्ययनव्याख्याने आगतेयं गाथा, " जत्थित्थीकरफरिसं, अंतरियं कारणे वि उप्पन्ने । अरिहा वि करिज्ज सयं, तं गच्छं मूलगुणमुक्कं ॥ १ ॥ " आत्मशङ्कितेन तेन चिन्तितं साध्वीवन्दनमेतैर्दृष्टमस्ति सावद्याचार्य इति नाम पुरापि दत्तं, साम्प्रतं तु यथार्थकथनेऽन्यदपि किमपि करिष्यन्ति । अन्यथा प्ररूपणे तु महत्याशातना अनन्तसंसारिता च स्याताम्, ततः किं कुर्वे, अथवा यद् भवति तद्भवतु यथार्थमेव व्याकरोमीति ध्यात्वा व्याख्याता यथार्था गाथा । तैः पापैरुक्तं—यद्येवं तत् त्वमपि मूलगुणहीनो यतः साध्व्या वन्दमानया भवान् स्पृष्टः, ततोऽयशोभीरुः स दध्यौ किमुत्तरं ददे । आचार्यादिना किमपि पापस्थानं न सेवनीयं त्रिविधं त्रिविधेन, यः सेवते सोऽनन्तसंसारं भ्राम्यति । तैर्विलक्षं दृष्ट्वोचे किं न वक्ष्यसि । स दध्यौ किं वदामि। ततस्तेन दीर्घसंसारित्वमङ्गीकृत्योक्तम्—अयोग्यस्य श्रुतार्थो न दातव्यः " आमे घडे निहत्तं, जहा जलं तं घडं विणासेइ । इअ सिद्धंतरहस्सं, अप्पाहारं विणासेइ ॥ १ ॥ " इत्यादि तैरुचे—किमसम्बद्धं भाषसे, अपसर दृष्टिपथात् । अहो त्वमपि सङ्घेन प्रमाणीकृतोऽसि । ततस्तेन दीर्घसंसारित्वमङ्गीकृत्योक्तं, उत्सर्गापवादैरागमः स्थितो यूयं न जानीथ । " एगंतं मिच्छत्तं जिणाण आणा अणेगत्तं । " तैर्धृष्टैर्मानितं ततः स प्रशंसितः । स एकवचनदोषेणानन्तसंसारित्वमुपार्ज्याऽप्रतिक्रान्तो मृत्वा व्यन्तरो बभूव १ । ततश्च्युत्वोत्पन्नः प्रोषितपतिकायाः प्रतिवासुदेवपुरोहितदुहितुः कुक्षौ, कुलकलङ्कभीताभ्यां पितृभ्यां

निर्विषयीकृता सा क्वापि स्थानमलभमाना दुर्भिक्षे कल्पपालगृहे दासीत्वेन स्थिता मद्यमांसदोहदोऽस्याः सञ्जातः । बहूनां मद्यपायकानां भाजनेषूच्छिष्टे मद्यमांसे च भुङ्क्ते कांस्यदूष्यद्रविणानि चोरयित्वाऽन्यत्र विक्रीय मद्यमांसे भुङ्क्ते । गृहस्वामिना राज्ञो निवेदितम् । राज्ञा मारणाय प्रसूतिसमयं यावद्रक्षितुमर्पिता चण्डालानां, अप्रसूता न हन्यते इति तत्कुलधर्म्मत्वात् । प्रसूता बालकं त्यक्त्वा नष्टा । राज्ञा पञ्चसहस्रद्रविणदानेन बालः पालितः । क्रमात् सूनाधिपतौ मृते राज्ञा स एव तद्गृह-स्वामी कृतः पञ्चशतानामीशः २ । ततो मृत्वा सप्तमपृथिव्यां ३३ सागरायुः ३ । तत उद्धृत्यान्तरद्वीपे एकोरुकजातिजातः ४ । ततो मृत्वा महिषः २६ वर्षायुः ५, ततो मनुष्यः ६, ततो वासुदेवः ७, ततः सप्तमपृथिव्यां ८, ततो गजकर्णो मनुष्यो मांसाहारी ९, ततो मृत्वा सप्तमपृथिव्यामप्रतिष्ठाने गतः १०, ततो महिषः ११, ततो बालविधवाबन्धकीब्राह्मणसुता-कुक्षावुत्पन्नः, गर्भशातनपातनक्षारचूर्णयोगैरनेकव्याधिपरिगतो गलत्कुष्टी कृमिभिर्भक्ष्यमाणो गर्भान्निर्गतः लोकैर्निन्द्यमानः क्षुधादिपीडितो दुःखी सप्तवर्षशतानि द्वौ मासौ चत्वारि दिनानि जीवित्वा १२, मृतो व्यन्तरेषूत्पन्नः १३, ततः सूनाधिपो मनुष्यः १४, ततः सप्तम्यां १५, ततश्चाक्रिकगृहे वृषभो वाह्यमानः क्वथितस्कन्धो मुक्तो गृहस्वामिना काककृमिश्वानादिभि-र्विलुप्यमानः २९ वर्षायुर्मृतो १६, बहुव्याधिमानिभ्यपुत्रो वमनविरेचनादिदुःखैरेवास्य गतो मनुष्यभवः १७, एवं चतुर्दश-रज्ज्वात्मकं लोकं जन्ममरणैः परिपूर्य अनन्तकालेनाऽपरविदेहे मनुष्योऽभवत् । तत्र लोकानुवृत्त्या गतस्तीर्थकरवन्दनाय, प्रतिबुद्धः, सिद्ध अत्र त्रयोविंशतितमश्रीपार्श्वजिनस्य काले । गौतमोऽप्राक्षीत्–किं निमित्तमनेन दुःखमनुभूतं ? गौतम ! उत्सर्गापवादैरागमः इत्यादि यद्भणितं तन्निमित्तम् । यद्यपि प्रवचने उत्सर्गापवादौ अनेकान्तश्च प्रज्ञाप्यन्ते, तथापि अप्कायपरि-

भोगस्तेजःकायपरिभोगो मैथुनसेवनं चैकान्तेन निषिद्धानि, इत्थं सूत्रातिक्रमादुन्मार्गप्रकटनं ततश्चाज्ञाभङ्गः, तस्माच्चानन्तसंसारी। गौतमोऽप्राक्षीत्–किं तेन सावद्याचार्येण मैथुनमासेवितम् ? गौतम ! नो सेवितं नोऽसेवितम्, यतस्तेन वन्दमानार्यास्पर्शे पादौ नाकुञ्चितौ। भगवन् ! तेन तीर्थकरनामकर्म्मार्जितं एकभवावशेषीकृतश्चासीद्भवोदधिः, तत्कथमनन्तसंसारं सम्भ्रान्तः ? गौतम ! निजप्रमाददोषात्, यतः सिद्धान्तेऽप्युक्तमस्ति–" चोद्दसपुव्वी आहारगावि, मणनाणिवीयरागा य। हुंति पमायपरवसा, तयणंतरमेव चउगइआ ॥ १॥ " इत्यादि। तस्माद् गच्छाधिपतिना सर्वदा सर्वार्थेषु अप्रमत्तेन भाव्यम्। इति पूर्वाचार्यसंस्कृतसावद्याचार्यसम्बन्धः। तथा " जे णं मद्धुआ ! अट्ठं वा हेउं वा पसिणं वा वागरणं वा अन्नायं वा अदिट्ठं वा अस्सुयं वा अपरिन्नायं वा बहुजणमज्झे आघवेइ पण्णवेइ परूवेइ दंसेइ निदंसेइ उवदंसेइ, से णं अरिहंताणं आसायणाए वट्टइ, अरिहंतपण्णत्तस्स धम्मस्स आसायणाए वट्टइ, केवलीणं आसायणाए वट्टइ, केवलिपण्णत्तस्स धम्मस्स आसायणाए वट्टइ " इति श्रीभगवत्यां अष्टादशशतकस्याष्टमोद्देशके ॥ तथा " इच्चेइयं दुवालसंगं गणिपिडगं तीए काले अणंता जीवा आणाए विराहित्ता चाउरंतसंसारकंतारं अणुपरियट्टिंसु १। इच्चेइयं दुवालसंगं गणिपिडगं पडुप्पन्नकाले परित्ता जीवा आणाए विराहित्ता चाउरंतं संसारकंतारं अणुपरिअट्टंति २। " 'परित्त' त्ति परिमित्ता, वर्त्तमाने काले विराधकमनुष्याणां संख्येयत्वात्। " इच्चेइयं दुवालसंगं गणिपिडगं अणागए काले अणंता जीवा आणाए विराहित्ता चाउरंतं संसारकंतारं अणुपरियट्टिस्संति ३। इच्चेइयं दुवालसंगं गणिपिडगं तीए काले अणंता जीवा आणाए आराहित्ता चाउरंतं संसारकंतारं वीइवइंसु १। इच्चेइयं दुवालसंगं गणिपिडगं पडुप्पन्नकाले परित्ता जीवा आणाए आराहित्ता चाउरंतं संसारकंतारं वीइवइंति २। इच्चेइयं दुवाल-

संगं गणिपिडगं अणागए काले अणंता जीवा आणाए आराहित्ता चाउरंतं संसारकंतारं वीइवइस्सति ३।" इति नन्दिसूत्रे ॥ इत्येवं विलोक्याचार्योपाध्यायप्रवर्त्तकगणावच्छेदकादिना मोक्षार्थिना भगवदाज्ञया आगमार्थो निरूपणीयः, न स्वमत्या तथात्वेऽनन्तसंसारावाप्तेरिति । गाथाछन्दः ॥ २७ ॥ अथ के सूरय आज्ञामतिक्रामन्तीत्याह—

**भट्ठायारो सूरी १, भट्ठायाराणुविक्कओ सूरी २ । उम्मग्गठिओ सूरी ३, तिन्निवि मग्गं पणासंति ॥२८॥**

व्याख्या—भ्रष्टः–सर्वथा विनष्टः आचारो–ज्ञानाचारादिर्यस्य स भ्रष्टाचारः सूरिरधर्माचार्यः १, भ्रष्टाचाराणां–विनष्टाचाराणां साधूनां उपेक्षकः प्रमादप्रवृत्तसाधूनामनिवारयितेत्यर्थः सूरिर्मन्दधर्माचार्यः २, उन्मार्गस्थित उत्सूत्रादिप्ररूपणपरः सूरिरधर्माचार्यः ३, त्रयोऽप्येते मार्गं–ज्ञानादिरूपं मोक्षपथं प्रणाशयन्ति–जिनाज्ञामतिक्रामन्तीत्यर्थः ॥ गाथाछन्दः ॥ २८ ॥ अथैतेषां त्रयाणां सेवकस्याशुभफलमाह—

**उम्मग्गठिए सम्मग्ग–नासए जो उ सेवए सूरी । निअमेणं सो गोअम ! अप्पं पाडेइ संसारे ॥ २९ ॥**

व्याख्या—उन्मार्गस्थितान् सन्मार्गनाशकान् १ तुशब्दात् भ्रष्टाचारान् २ भ्रष्टाचारोपेक्षकांश्च ३ सूरीन् यः सेवते–पर्युपास्ते नियमेन–निश्चयेन स नरो हे गौतम ! आत्मानं पातयति, संसारे–चतुर्गत्यात्मके इति । गाथाछन्दः ॥ २९ ॥ अथ भङ्ग्यन्तरेण एनमेवार्थं दृष्टान्तेन समर्थयन्नाह—

**उम्मग्गठिओ एक्को, विनासए भवसत्तसंघाए । तं मग्गमणुसरंतं, जह कुत्तारो नरो होइ ॥ ३० ॥**

व्याख्या—उन्मार्गस्थितः—उत्सूत्रप्ररूपणानिरतः एकोऽपि अधिकारात् सूरिर्नाशयति—संसारसमुद्रे अनन्तानन्तमरणप्रदानेन विनाशयतीत्यर्थः, कान् भव्यसत्त्वसङ्घातान् किं कुर्वतस्तान् तन्मार्गं—उन्मार्गस्थितप्रदर्शितपथं अनुसरतः—आश्रयतः प्राकृतत्वाद्वचनव्यत्ययः। अत्र दृष्टान्तमाह—यथा कुतारः कुत्सिततारको नरो भवति। स बहून् पृष्टिलग्नान् जन्तुसमूहान् नद्यादौ विनाशयतीति, गाथाछन्दः॥ ३०॥ अथोन्मार्गगामिनामेवाशुभफलं दर्शयति—

**उम्मग्गमग्गसंपट्ठिआण, साहूण गोअमा! नूणं। संसारो अ अणंतो, होई संमग्गनासीणं॥ ३१॥**

व्याख्या—उन्मार्गा—गोशालकबोटिकनिन्हवादयः तेषां मार्गः—परम्परा तस्मिन् अथवा उन्मार्गरूपो यो मार्गस्तस्मिन् समिति—एकीभावेन प्रइति—प्रकर्षेण स्थितानां साधूनां—साधुलिङ्गधारकाणां हे गौतम! नूनं—निश्चितं संसारश्चतुर्गत्यात्मकः अनन्तो—अपर्यन्तो भवति। च शब्दस्तद्गतानेकदुःखसूचकः। किं भूतानां तेषां? सन्मार्गनाशिनां—शुद्धपथोच्छेदकानां महानिशीथोक्तमुनिचन्द्रसाधुवत् इति। गाथाछन्दः॥ ३१॥ अथ कथञ्चित् स्वयं प्रमादवानपि शुद्धमार्गं प्ररूपयन् कस्मिन् पक्षे आत्मानं स्थापयतीत्याह—

**सुद्धं सुसाहुमग्गं, कहमाणो ठवइ तइअपक्खम्मि। अप्पाणं इयरो पुण, गिहत्थधम्माउ चुक्क त्ति॥ ३२॥**

व्याख्या—शुद्धं—अवितथं सुसाधुमार्गं—सन्मुनिपथं कथयन्—प्ररूपयन् स्वयं प्रमादवानपीति गम्यते स्थापयति—निवेशयति आत्मानं क? साधुश्राद्धपक्षद्वयापेक्षया तृतीयपक्षे—संविग्नपाक्षिकरूपे इतरो—अशुद्धमार्गप्ररूपकः पुनः 'गिहत्थधम्माउ' त्ति गृहस्थधर्माद्यतिधर्मात्संविग्नपाक्षिकपथाच्च 'चुक्क' त्ति भ्रष्टः संसारपथत्रयान्तर्वर्त्तीत्यर्थः। इति शब्दो वाक्यपरिसमाप्त्य-

र्थः। अत्र प्रसङ्गतः पक्षत्रयमाश्रित्य किञ्चिदुच्यते "सुज्झइ जई सुचरणो १, सुज्झइ सुस्सावओ वि गुणकलिओ २। ओसन्नचरणकरणो, सुज्झइ संविग्गपक्खरुई ॥ १ ॥ संविग्गपक्खियाणं, लक्खणमेयं समासओ भणियं। ओसन्नचरणकरणा वि, जेण कम्मं विसोहंति ॥ २ ॥ सुद्धं सुसाहुधम्मं, कहेइ निंदइ य नियमायारं। सुतवस्सियाण पुरओ, होइ य सव्वोमराइणिओ ॥ ३ ॥ वंदइ न य वंदावइ, किइकम्मं कुणइ कारवे नेव। अत्तट्ठा न वि दिक्खइ, देइ सुसाहूण बोहेउं ॥ ४ ॥ ओसण्णो अत्तट्ठा, परमप्पाणं च हणइ दिक्खंतो। तं छुहइ दुग्गईए, अहिययरं बुड्डइ सयं च ॥ ५ ॥ सावज्जजोगपरिवज्जणाउ, सव्वुत्तमो जई धम्मो। बीओ सावगधम्मो, तइओ संविग्गपक्खपहो ॥६॥ सेसा मिच्छद्दिट्ठी, गिहिलिंगकुलिंगदव्वलिंगेहिं। जह तिन्नि उ मुक्खपहा, संसारपहा तहा तिन्नि ॥ ७ ॥" ननु गृहिचरकादयो भवन्तु भवानुयायिनो, भगवल्लिङ्गधारिणस्तु कथमित्यत्राह-"संसारसागरमिणं, परिब्भमंतेहि सव्वजीवेहिं। गहियाणि य मुक्काणि य, अणंतसो दव्वलिंगाइं ॥ ८ ॥ ननु त्रयः संसारपथास्त्रयश्च मोक्षपथा इति यदुक्तं तत्सुन्दरं, परं यः सुसाधुविहारेण बहुकालं विहृत्य पश्चात्कर्मपरतन्त्रतया शैथिल्यमवलम्बते, ते कुत्र पक्षे निक्षिप्यन्तामित्यत आह-"सारणचइया जे गच्छ-निग्गया य विहरंति पासत्था। जिणवयणबाहिरा वि य, ते उ पमाणं न कायव्वा ॥९॥" इत्थ दिट्ठंतो-तेणं कालेणं तेणं समएणं तुंगिया णामं णयरी होत्था। वण्णओ, तीए नयरीए एगो साहू खंतो दंतो जिइंदिओ इरियासमिओ भासासमिओ एसणासमिओ आयाणभंडमत्तनिक्खेवणासमिओ उच्चारपासवणखेलजल्लसिंघाणपारिट्ठावणियासमिओ मणगुत्तो वयगुत्तो कायगुत्तो गुत्तिंदिओ गुत्तबंभयारी अममो अकिंचणो छिण्णगंथो छिण्णसोओ निरुवलेवो कंसपाईव मुक्कतोओ संखो इव निरंजणो जाव इव अप्पडिहयगई एमाइगुणकलिओ,

मज्झण्हसमए गोयरचरियाए भमंतो एगम्मि सड्ढकुलम्मि पविट्ठो, साविया य तं दट्ठुं हट्ठतुट्ठा जाया, आहारगहणत्थं घरम्मि पविट्ठा ताव य साहू घरदारं अवलोइऊण आहारं अगहिऊण अजंपमाणो चेव पडिनियत्तो। साविआ वि आगया संती तं अपासंती अपुण्णाहं अधण्णाहं एवमाइयं जंपमाणी दारे ठिया, तक्खणे चेव बीओ मुणी आहारत्थमागओ तमाहारेण पडिलाभिऊण समणोवासिया भणइ। हे मुणीसर! एगो साहू मम घरे आगओ तेण भिक्खा न गहिया पच्छा तुम्ह आगमणं जातं, तेण केण निमित्तेण भिक्खा न गहिया? सो भणइ एयारिसा भावभंजणा पासंडचारिणो बहवे वट्टंति, समणोवासिया तव्वयणं सोऊण अच्चत्थं दुक्खमावण्णा। तओ य तइओ साहू तम्मि घरे आहारत्थमागओ। तमवि पडिलाभिऊण पढमसाहुवुत्तंतो कहिओ। सो भणइ हे भद्दे! तुम्ह घरदारं नीयं वट्टइ, तेण न गहिया भिक्खा। जओ आगमे "नीयदुवारं तमसं, कोट्ठगं परिवज्जए। अचक्खुविसओ जत्थ, पाणा दुप्पडिलेहगा॥ १॥" अहं तु वेसमित्तधारी, मए साहूणं आयारो न सक्कए पालेउं, मम निप्फलं जीवियं, सो पुण धण्णो कयकिच्चो जे णं मुणीणमायारं पालेइ। सो वि सट्ठाणं गओ। इत्थ भावणा—जो सो पढमसाहू सो सुक्कपक्खिओ हंसपक्खिसमाणो, जेण तस्स हंसस्स दो वि पक्खा सुक्का भवंति, एवं सुक्कपक्खिओवि साहू अंतो बहिनिम्मलत्तेण दुहावि सुक्को १। बीओ साहू कण्हपक्खिओ णेओ वायससारिच्छो, जेण तस्स वायसस्स दोवि पक्खा कण्हा भवंति, एवं कण्हपक्खिओ साहू वि अंतो बाहिं मलिणत्तणेण दुहा वि मलिणो २। तइओ साहू संविग्गपक्खिओ चक्कवायसारिच्छो, जेणं चक्कवायस्स बाहिरपक्खा मलिणा भवंति अब्भंतरपक्खा सुक्का भवंति, एवं संविग्गपक्खिओ साहूवि बाहिं मलिणो अंतो सुक्को ३। इति। गाथाछन्दः॥ ३२॥

अथ यद्येवं ततः किं कर्त्तव्यमित्याह–

**जइ नवि सक्कं काउं, सम्मं जिणभासिअं अणुट्ठाणं। तो सम्मं भासिज्जा, जह भणिअं खीणरागेहिं ॥३३॥**

व्याख्या–यद्यपि न शक्यं कर्त्तुं–विधातुं, कथं सम्यक्–त्रिकरणशुद्धया जिनभाषितं–केवलयुक्तमनुष्ठानं–क्रियाकलापरूपं, ततो यथा क्षीणरागैः वीतरागैर्भणितं–कथितं तथा सम्यग्–अवितथं भाषेत्–प्ररूपयेदिति । गाथाछन्दः ॥ ३३ ॥

अथ प्रमादवतोऽप्यवितथप्ररूपणे महत्फलं दर्शयन्नाह–

**ओसन्नो वि विहारे, कम्मं सोहेइ सुलभबोही य । चरणकरणं विसुद्धं, उववूहिंतो परूविंतो ॥३४॥**

व्याख्या–अवसन्नोऽपि–शिथिलोऽपि क्व? विहारे मुनिचर्यायां कर्म्म–ज्ञानावरणादि शोधयति–शिथिलीकरोतीत्यर्थः, सुलभा बोधिः–जिनधर्म्मप्राप्तिरूपा यस्यासौ सुलभबोधिः, एवंविधश्च प्रेत्यः स्यादिति शेषः, किं कुर्वन्! 'चरणकरणं विसुद्धं उववूहंतो परूविंतो'त्ति चरणं–सप्ततिभेदं मूलगुणरूपं करणं–सप्ततिभेदमेवोत्तरगुणरूपं चरणं च करणं चेति समाहारद्वन्द्वे चरणकरणं तत् विशुद्धं–निःकलङ्कमुपबृंहयन्–प्रशंसयन् प्ररूपयंश्च–यथावस्थितं प्रतिपादयन्निति । अत्र चरणकरणस्वरूपं यथा- " वय ५ समणधम्म १० संजम १७ वेयावच्चं च १० बंभगुत्तीओ ९ । णाणाइतियं ३ तव १२ कोह–निग्गहाइं ४ चरणमेयं ॥ १ ॥ पिंडविसोही ४ समिई ५, भावण १२ पडिमा १२ य इंदियनिरोहो ५ । पडिलेहण २५ गुत्तीओ ३, अभिग्गहा ४ चेव करणं तु ॥ २ ॥ " एतयोः क्रमेण व्यक्तिः, सव्वाओ पाणाइवायाओ वेरमणं १, सव्वाओ मुसावायाओ वेरमणं २, सव्वाओ अदिन्नादाणाओ वेरमणं ३, सव्वाओ मेहुणाओ वेरमणं ४, सव्वाओ परिग्ग-

हाओ वेरमणं ५, इति व्रतानि । ' दसविधे समणधम्मे पं० तं० खंती १, मुत्ती २, अज्जवे ३, मद्दवे ४, लाघवे ५, सच्चे ६, संजमे ७, तवे ८, चियाए ९, बंभचेरवासे १० । क्रोधजयः १, निर्लोभता २, मायात्यागः ३, अहंकारत्यागः ४, परिग्रह त्यागः ५, सत्यं ६, (संयमः–) प्राणातिपातविरमणरूपः ७, तपः ८, त्यागः–सुविहितेभ्यो वस्त्रादिदानरूपः ९, ब्रह्मचर्यं १०, इति श्रमणधर्म्मः । पृथिव्य १ प् २ तेजो ३ वायु ४ वनस्पति ५ द्वि ६ त्रि ७ चतुः ८ पञ्चेन्द्रियाणां पालनात्तत्र भेदाः ९ अजीवसंयमः–पुस्तकचर्म्मपञ्चकादीनां अनुपभोगो यतनया परिभोगो वा हिरण्यादित्यागो वा १०, प्रेक्षासंयमः–स्थानादि यत्र चिकीर्षेत्तत्र चक्षुषा प्रेक्ष्य कुर्यात् ११, उपेक्षासंयमो–व्यापाराव्यापारविषयतया द्वेधा तत्र सदनुष्ठाने सीदतः साधून्नोपेक्षेत–प्रेरयेदित्यर्थः । गृहिणस्तु आरम्भे सीदत उपेक्षेत न व्यापारयेत् १२, प्रमार्ज्जनासंयमः–पथि पादयोर्वसत्यादेश्च विधिना प्रमार्ज्जनं १३, परिष्ठापनासंयमः–अविशुद्धभक्तोपकरणादेर्विधिना त्यागः १४, मनोवाक्कायसंयमाः–अकुशलानां मनोवाक्कायानां निरोधाः १७, श्रीउमास्वातिवाचकपादैस्तु संयमभेदाः प्रशमरतावेवमुक्ताः " पञ्चाश्रवाद्विरमणं, पञ्चेन्द्रियनिग्रहः कषायजयः । दण्डत्रयविरतिश्चेति, संयमः सप्तदशभेदः ॥१॥ " इति संयमः । 'दसविधे वेयावच्चे पं० तं० आयरियवेयावच्चे १ उवज्झायवे० २ थेरवे० ३ तवस्सिवे० ४ गिलाणवे० ५ सेहवे० ६ कुलवे० ७ गणवे० ८ संघवे० ९ साहम्मियवेयावच्चे १०, इति वैयावृत्त्यम् । नव बंभचेरगुत्तीओ पं० तं० विवित्ताइं सयणासणाइं सेवित्ता भवति णो इत्थिसंसत्ताइं नो पसुसंसत्ताइं नो पंडगसंसत्ताइं १, नो इत्थीणं कहं कहेत्ता हवइ । नो स्त्रीणां केवलानां कथां धर्मदेशनादिलक्षणवाक्यप्रतिबन्धरूपां २, नो इत्थिठाणाइं सेवित्ता भवति । ठा० निपद्या ३, णो इत्थीणं मणोहराइं मणोरमाइं इंदियाइं आलोतित्ता निज्झाइत्ता भवइ ४, णो पणीयरसभोई ५, णो

पाणभोयणस्स अइमायमाहारए सया भवति ६, णो पुव्वरयं पुव्वकीलियं सरित्ता भवइ ७, णो सद्दाणुवाती णो रूवाणुवाई णो सिलोगाणुवाई ८, णो सायासोक्खपडिवद्धे यावि भवइ ९, इति ब्रह्मगुप्तिः। ज्ञानदर्शनचारित्रलक्षणं ३ ज्ञानादित्रिकं, तपो द्वादशधा पूर्वोक्तं १२, क्रोधमानमायालोभत्यागः ४ क्रोधादिनिग्रहः, इति चरणं ७०। वस्त्र १ पात्र २ वसति ३ आहार ४ शुद्धिलक्षणा चतुर्धा पिण्डविशुद्धिः। इरियासमिई १, भासासमिई २, एसणासमिई ३, आदाणभंडमत्तणिक्खेवणासमिई ४, उच्चारपासवणखेलजल्लसिंघाणपारिट्ठावणियासमिई ५, इति समितिः। अनित्यभावना १ अशरणभा० २ भवभा० ३ एकत्वभा० ४ अन्यत्वभा० ५ अशौचभा० ६ आश्रवभा० ७ संवरभा० ८ निर्जराभा० ९ धर्मस्वाख्याततभा० १० लोकभा० ११ बोधिभा० १२ इति भावनाः। बारसभिक्खुपडिमाओ पं० तं० मासिया भिक्खुपडिमा १ दोमासिया २ तिमासिया ३ चउमासिया ४ पंचमासिया ५ छम्मासिया ६ सत्तमासिया ७ पढमा सत्तराइंदिया भिक्खु० ८ दोच्चा सत्तराइंदिया भिक्खु० ९ तच्चा सत्तराइंदिया भिक्खुप० १० अहोराइया भिक्खुप० ११ एकराइया भिक्खुप० १२। इति प्रतिमाः। मनोज्ञामनोज्ञेषु शब्द १ रूप २ गंध ३ रस ४ स्पर्शेषु ५ श्रोत्र १ चक्षु २ घ्राण ३ जिह्वा ४ त्वगिन्द्रिय ५ विषयीभूतेषु रागद्वेषवर्जनात् पञ्चधेन्द्रियनिरोधः। ' दिट्ठिपडिलेह एगा, छउड्ढपक्खोडतिगतिगंतरिआ। अक्खोडपमज्जणया, नव नव मुहपुत्तिपणवीसा ॥१॥ ' प्रथमं दृष्टिप्रतिलेखना १, ततः पार्श्वद्वयेऽपि त्रयस्त्रयः ऊर्ध्वप्रस्फोटाः कार्याः एवं ७, ततो हस्ततले मुखवस्त्रिकामलगयद्भिरास्फोटा लगयद्भिः प्रमार्जनाश्च परस्परं त्रिकत्रिकान्तरिताः प्रत्येकं नव नव कार्याः, एवं १८, इति मुखवस्त्रिकाप्रतिलेखनाः २५ स्युः। ' पायाहिणेण तिअतिअ, वामेयरबाहुसीसमुहहिअए। अंसुड्ढाहोपिट्ठी, चउछप्पयदेहपणवीसा २ इति प्रतिलेखनाः २५।

मनोवाकायगुप्तिरूपास्तिस्रो गुप्तयः, द्रव्यक्षेत्रकालभावभेदाच्चत्वारोऽभिग्रहाः, इति करणमिति । गाथाछन्दः ॥ ३४ ॥

अथ संविग्नपाक्षिकस्यैव किञ्चित्कर्त्तव्यं दर्शयन्नाह—

**सम्मग्गमग्गसंपट्ठिआण, साहूण कुणइ वच्छल्लं । ओसहभेसज्जेहि य, सयमन्नेणं तु कारेइ ॥ ३५ ॥**

व्याख्या—सन्मार्गमार्गसंप्रस्थितानां—सन्मुनिमार्गे सम्यक्प्रवृत्तानां साधूनां—मुनीनां करोति—विधत्ते स्वयं—आत्मना वात्सल्यं—समाधिसम्पादनं अधिकारात्संविग्नपाक्षिकः, कैः ? औषधभैषज्यैस्तत्रौषधानि—केवलद्रव्यरूपाणि बहिरुपयोगीनि वा, भैषज्यानि—सांयोगिकानि अन्तर्भोग्यानि वा, चशब्दोऽनेकान्यप्रकारसूचकः । तथाऽन्ये—आत्मव्यतिरिक्तेन कारयति, तुशब्दात् कुर्वन्तमन्यमनुजानातीति । गाथाछन्दः ॥ ३५ ॥ अथाधिकारात् परवात्सल्यकारिणामतिस्तोकतामाह—

**भूए अत्थि भविस्संति, केइ तेलुक्कनमिअकमजुअला ।**

**जेसिं परहिअकरणिक्क—बद्धलक्खाण वोलिही कालो ॥ ३६ ॥**

व्याख्या—भूता—अतीतकाले 'अत्थि'त्ति सन्ति—विद्यन्ते वर्त्तमानकाले भविष्यन्ति—भविष्यत्काले केचिदतिस्तोका एव, ते पुरुषाः किंभूताः ? त्रैलोक्येन—स्वर्गमर्त्यपाताललक्षणेन तन्निवासिप्राणिगणेनेत्यर्थः, नतं क्रमयुगलं येषां ते त्रैलोक्यनतक्रमयुगलाः, ते के ? येषां परहितकरणैकबद्धलक्षाणां परेषां—अन्येषां हितं—वात्सल्यं परहितं, परहितस्य करणं परहितकरणं तस्मिन्,

एकं—अद्वितीयं बद्धं लक्षं—वेध्यं तस्य च लयहेतुत्वेन कारणे कार्योपचाराल्लयो यैस्ते परहितकरणैकबद्धलक्षास्तेषां परहितकरणैकबद्धलक्षाणां एवंविधानां सतां 'वोलिहि'त्ति प्राकृतत्वात् व्यतिचक्राम व्यतिक्रामति व्यतिक्रमिष्यति वा कालः समयादिलक्षण इति । गीतिच्छन्दः । तल्लक्षणं चेदम्—" आर्याप्रथमदलोक्तं, यदि कथमपि लक्षणं भवेदुभयोः । दलयोः कृतयतिशोभां, तां गीतिं गीतवान् भुजङ्गेशः " ॥ ३६ ॥ अथ ये नाममात्रग्रहणेनापि पराहितकारिणः सूरयस्तानाह—

**तीआणागयकाले, केई होहिंति गोयमा सूरी । जेसिं नामग्गहणे वि, होइ नियमेण पच्छित्तं ॥३७॥**

व्याख्या—अतीतकाले ते केचिदनिर्दिष्टनामानोऽभूवन्निति शेषः, अनागतकाले च होहिंति—भविष्यन्ति, 'आद्यन्तग्रहणे मध्यस्यापि ग्रहणं' इति न्यायेन वर्त्तमानकाले च सन्ति । हे गौतम ! सूरयः—आचार्या नामधारकाः, येषां परिचयकरणादिकं दूरे आस्ताम्, नामग्रहणेऽपि भवति नियमेन—निश्चयेन प्रायश्चित्तम् । तथा चोक्तं श्रीमहानिशीथपञ्चमाध्ययने " इत्थं चायरियाणं, पणपण्णं होंति कोडिलक्खाओ । कोडिसहस्से कोडी, सए य तह एत्तिए चेव ॥ १ ॥ एतेसि मज्झाओ, एगे निव्वुड्डइ गुणगणाइण्णे । सव्वुत्तमभंगेणं, तित्थयरस्साणुसारिगुरू ॥ २ ॥ " इति गाथाछन्दः ॥ ३७ ॥ अथात्र हेतुमाह—

**जओ, सयरी भवंति अणविक्खयाइ, जह भिच्चवाहणा लोए ।**
**पडिपुच्छाहिं चोयण, तम्हा उ गुरू सया भयइ ॥ ३८ ॥**

व्याख्या—' जओ 'त्ति भिन्नं पदं, यतो भणितं, 'सयरि'त्ति स्वेच्छाचारीणि भवन्ति 'अणविक्खयाइ'त्ति अनपेक्षया-

शिक्षारहितत्वेन यथा लोके 'भिच्चवाहण'त्ति भृत्याश्च–सेवका वाहनानि च–हस्त्यश्ववृषभमहिषादीनि इतिद्वन्द्वे भृत्यवाहनानि, तथा विनेया गुरूणां प्रतिपृच्छाभिः कार्ये कार्ये प्रतिपृच्छा प्रतिपृच्छा ताभिः 'चोयण'त्ति प्राकृतत्वाद्विभक्तिलोपः, चोदनाभिश्च विनेति शेषः स्वेच्छाचारिणो भवन्तीत्यर्थः। यस्मात्स्वेच्छाचारिणो भवन्ति, 'तम्हा उ' त्ति तस्मादेव कारणात्प्रतिपृच्छाभिश्चोदनाभिश्चाचार्यो विनेयान् सदा–सर्वकालं 'भयइ'त्ति भजते–सत्यापयति शिक्षयतीत्यर्थः। गाथाछन्दः ॥ ३८ ॥ "अथ नोदनाया अकर्त्तुः फलं दर्शयन्नाह—

**जो उ पमायदोसेणं, आलस्सेणं तहेव य। सीसवग्गं न चोएइ, तेण आणा विराहिया ॥ ३९ ॥**

व्याख्या—यो गणी तुशब्दादुपाध्यायादिः प्रमाददोषेण प्रमादरूपो यो दोषस्तेन आलस्येन तथैव च चकारादुक्तशेषैर्मोहादिभिश्च उक्तं च–" आलस्स १ मोह २ वन्ना ३, थंभा ४ कोहा ५ पमाय ६ किविणत्ता ७। भय ८ सोगा ९ अन्नाणा १०, वक्खेव ११ कुऊहला १२ रमणा १३ ॥ १ ॥" एतैर्हेतुभिः शिष्यवर्गं अन्तेवासिवृन्दं न प्रेरयति मोक्षानुष्ठान इति शेषः, तेनाचार्येणोपाध्यायेन वा 'आण(ण)'त्ति जिनाज्ञा विराधिता–खण्डितेत्यर्थः। अनुष्टुपछन्दः ॥ ३९ ॥ अथ गुरुलक्षणमुपसंहरन् गच्छलक्षणं च विवक्षुराह—

**संखेवेणं मए सोम, वन्नियं गुरुलक्खणं। गच्छस्स लक्खणं धीर, संखेवेणं निसामय ॥ ४० ॥**

व्याख्या—सङ्क्षेपेण–विस्तराभावेन मया हे सौम्य! हे गौतम! वर्णितं–प्ररूपितमित्यर्थः गृणाति–वदति तत्त्वमिति गुरु-

स्तस्य लक्षणं-चिन्हं, अयेति शेषः गच्छस्य-यतियतिनीसमुदायलक्षणस्य लक्षणं, धिया राजत इति धीरस्तस्य सम्बोधनं क्रियते हे धीर! सङ्क्षेपेण निशमय-आकर्णयेति । अनुष्टुप्छन्दः ॥ ४० ॥

इति श्रीमत्तपागच्छनभोमणिभट्टारकपुरन्दरश्रीआनन्दविमलसूरीश्वरचरणाम्भोजरजश्चञ्चरीकायमाणपण्डितश्रीविजयविमलगणिविरचितायां गच्छाचारप्रकीर्णकटीकायामाचार्यस्वरूपनिरूपणाधिकारः प्रथमः ॥

प्रपञ्चितमाचार्यस्वरूपम् । अथ क्रमप्राप्तं यतिस्वरूपं प्रपञ्च्यते । तत्रापि प्रथमं येन मुनिना छद्मस्थेनापि सार्कं केवली विहरेत् तत्स्वरूपं गाथाद्वयेनाह—

**गीअत्थे जे सुसंविग्गे, अणालस्सी दढव्वए । अक्खलियचरित्ते सययं, रागद्दोसविवज्जिए ॥ ४१ ॥**

**निट्ठविअअट्ठमयठाणे, सोसिअकसाए जिइंदिए । विहरिज्जा तेण सद्धिं तु, छउमत्थेणवि केवली ॥ ४२ ॥**

अनयोर्व्याख्या-गीतः-परिज्ञातोऽर्थः छेदसूत्रस्य येन स गीतार्थः, यद्वा गीतार्थोवस्य विद्यते इत्यभ्रादित्वादप्रत्यये गीतार्थः । तत्र गीतं सूत्रं अर्थस्तद्व्याख्यानम् । उक्तं च श्रीबृहत्कल्पभाष्यपीठिकायां-"गीअं मुणितेगट्ठं, विदिअत्थं खलु वयंति गीयत्थं । गीएण य अत्थेण य, गीअत्थो वा सुअं गीअं ॥ १ ॥ गीएण होइ गीई, अत्थी अत्थेण होइ नायव्वो । गीएण य अत्थेण य, गीअत्थं तं विआणाहि ॥२॥" यः 'सुसंविग्गो' त्ति अत्यर्थं संवेगवान्, आलस्यमस्यास्तीति आलस्यी न आलस्यी अनालस्यी आलस्यरहित इत्यर्थः । दृढानि-निश्चलानि व्रतानि-नियमा उत्तरगुणा इति यस्यासौ दृढव्रतः, अस्खलितं-अतीचार-

रहितं चारित्रं—मूलगुणरूपं यस्यासौ अस्खलितचारित्रः, सततं—अनवरतं रागद्वेषविवर्जितस्तत्र मायालोभात्मको रागः, क्रोधमानात्मको द्वेष इति, निष्ठापितानि—क्षयं नीतान्यष्टौ मदस्थानानि—मानभेदा जातिकुलरूपबललाभश्रुततपोविभवमदाख्या येनासौ निष्ठापिताष्टमदस्थानः, शोषिताः—कृशीकृताः कषायाः—सभेदाः क्रोधमानमायालोभाख्याः, नोकषाया वा येनासौ शोषितकषायः, जितान्यात्मवशीकृतानीन्द्रियाणि श्रोत्रदृग्नासाजिह्वात्वग्मनोरूपाणि येनासौ जितेन्द्रियः स्यादिति शेषः। एवंविधेन तेन छद्मस्थेनापि सार्द्धं केवलं—एकं ज्ञानमस्यास्तीति केवली विहरेत्—विचरेत्, तुशब्दादेकत्र वसेदपि यद्वा तेन छद्मस्थेन सार्द्धं केवल्यपि विहरेत् छद्मस्थस्तु तेन सार्द्धं सुतरां विहरेदित्यर्थः। इति विषमाक्षरेति लक्षणे गाथाछन्दसि ॥४१॥४२॥

अथ यैः सह विहारादि न विधीयते तानाह—

जे अणहीअपरमत्थे, गोअमा संजए भवे। तम्हा ते वि विवजिज्जा, दुग्गइपंथदायगे ॥ ४३ ॥

व्याख्या—हे गौतम! ये संयता अपि—संयमवन्तोऽपि 'अणहीअपरमत्थ' त्ति अनधीता—अनभ्यस्ताः परमार्थाः—आगमरहस्यानि यैस्ते अनधीतपरमार्था अगीतार्था इत्यर्थः। यत्—यस्मात् अज्ञातद्रव्यक्षेत्रकालभावौचित्या भवन्तीति शेषः, तस्मात् तान् अगीतार्थान् विवर्जयेत्—विहारे एकत्र निवासे वा दूरतस्त्यजेत्। अपि शब्दोऽत्र भिन्नक्रमः, स च यथास्थानं योजित एव। किंभूतान् तान् दुर्गतिपथदायकान्—तिर्यग्नारककुमानुषकुदेवरूपदुर्गतिमार्गप्रापकानित्यर्थः। अत्रागमरहस्यानि कानिचिद्दर्श्यन्ते। यथा—"जे आसवा ते परिस्सवा १ जे परिस्सवा ते आसवा २ जेअणासवा ते अपरिस्सवा ३ जे अपरिस्सवा ते अणासवा ४।" इदमाचाराङ्गचतुर्थाध्ययनसूत्रमस्य व्याख्या—ये आश्रवति—आगच्छति अष्टप्रकारं कर्म्म यैरारम्भैस्ते आश्रवाः-

कर्म्मबन्धस्थानानीत्यर्थः, ये परिसमन्तात् श्रवति–गलति सच्छिद्रघटवत् यैरनुष्ठानविशेषैस्ते परिश्रवाः–कर्म्मनिर्जरास्थानानीत्यर्थः, अयं भावः–यानीतरजनाचरितानि स्रगङ्गनादीनि सुखकारणतया तानि कर्मबन्धहेतुत्वात् आश्रवाः–कर्मबन्धस्थानानि, पुनस्तान्येव तत्त्वविदां–विषयसुखपराङ्मुखाणां निस्सारतया संसारसरणिदेश्यानीति कृत्वा वैराग्यजनकानि अतः परिश्रवाः–निर्ज्जरास्थानानीत्यर्थः १। य एव परिश्रवाः–निर्ज्जरास्थानानि अर्हत्साधुतपश्चरणदशविधचक्रवालसामाचार्यनुष्ठानादीनि तान्येव कर्म्मोदयादशुभाध्यवसायस्य जन्तोराश्रवा भवन्ति–पापोपादानकारणानि जायन्त इत्यर्थः २। ये आश्रवेभ्योऽन्येऽनाश्रवाः–व्रतविशेषाः, तेऽपि कर्म्मोदयादशुभाध्यवसायिनो न परिश्रवा अपरिश्रवाः–कर्म्मबन्धस्थानानीत्यर्थः। दुर्मुखव्याहृतप्रथमध्यानस्थप्रसन्नचन्द्रराजर्षिकौङ्कणसाध्वादिवत् ३। ये न परिश्रवाः–कर्म्मबन्धस्थानानि ते न आश्रवा अनाश्रवाः–कर्म्मबन्धनानि न भवन्ति। केनचिदुपाधिना प्रवचनोपकारादिना क्रियमाणा अपरिश्रवाः करवीरलताभ्रामकक्षुल्लस्येवानाश्रवाः–कर्म्मबन्धनानि न स्युरिति ४। तथा "उप्पन्ने इ वा १ विगमे इ वा २ धुवे इ वा ३" व्याख्या–उत्पत्तिश्चतुर्द्धा, जीवाज्जीवस्योत्पत्तिर्यथा मातापितृभ्यां पुत्रस्य १, जीवादजीवस्योत्पत्तिर्यथा सजीवदेहान्नखकेशादेः २, अजीवाज्जीवस्योत्पत्तिर्यथा–काष्ठात् घुणकस्य यद्वा द्राक्षादेरिलिकादीनां ३, अजीवादजीवस्योत्पत्तिर्यथा–कल्कयोगेन ताम्रात् स्वर्णस्येति ४। विगमः–विनाशः सोऽपि चतुर्द्धा, जीवाज्जीवस्य विगमो भुजङ्गान्मनुष्यस्य १, जीवादजीवस्य नकुलसञ्चारात् दुग्धस्य यद्वा चिर्भटयोगात्कणिकायाः २, अजीवाज्जीवस्य विषान्मनुष्यादेः ३, अजीवादजीवस्य तक्रात् दुग्धस्येति ४, वस्तुनो ध्रुवताऽप्यस्ति, यथा–स्वर्णकङ्कणस्य भग्नत्वात् तस्य विनाशः केयूरस्य घटितत्वात् केयूरस्योत्पत्तिः स्वर्णस्यावस्थितत्वात् ध्रुवता, यद्वा तक्रयोगेन दुग्धस्य विनाशो दध्न उत्पत्तिः स्नि-

ग्धा ये पुद्गलाः ते तु ध्रुवाः, यद्वा जीवमेरुविमानादीनां द्रव्यास्तिकनयमतेन ध्रुवता । तथा "उस्सग्गसुअं किंची, किंची अववाइअं भवे सुत्तं । किंची तदुभयसुत्तं, सुत्तस्स गमा मुणेअव्वा ॥१॥" उत्सर्गसूत्रं १ अपवादसूत्रं २ तदुभयसूत्रं द्विधा, उत्सर्गापवादिकं ३ अपवादोत्सर्गिकं ४ एते सूत्रस्य गमाः—प्रकाराश्चत्वारः, अथवा गमानाम्रद्विरुच्चारणीयानि पदानि, तेनोत्सर्गोत्सर्गिकं ५, अपवादापवादिकं ६ । नो कल्पते साधोर्गोचरं पर्यटतो गृहद्वयापान्तराले निषीदनमित्युत्सर्गसूत्रं १, त्रयाणां पुनः कल्पते इत्यपवादसूत्रं २, नो कप्पइ राओ वा विआले वा सेज्जासंथारयं पडिगाहित्तए, नन्नत्थ एगेणं पुव्वपडिलेहिएणं सिज्जासंथारएणं, इदमुत्सर्गापवादिकं ३, यत्पुनर्निग्रन्थीनां कल्पते पक्वं तालपलम्बं विधिभिन्नं नाविधिभिन्नमित्यपवादोत्सर्गिकं ४, नो कप्पइ असणं वा ४ पढमाए पोरिसीए पडिगाहित्ता पच्छिमं पोरिसिं उवाइणावित्तए से अ आहच्च उवाइणा विएसिआ जो तं भुंजइ भुंजंतं वा साइज्जइ से आवज्जइ चाउमासिअं परिहारट्ठाणमित्युत्सर्गोत्सर्गिकं ५, तथा येषु सूत्रेषु अपवादो भणितस्तेष्वेवार्थतः पुनरनुज्ञा प्रवर्त्तते तानि अपवादापवादिकानि सूत्राणि ६, इति श्रीबृहत्कल्पवृत्तौ, इयं च सूत्रषड्भङ्गी श्रीनिशीथचूर्णिषोडशोद्देशकेऽप्यस्ति । तथा "नेगम १ संगह २ ववहारु ३ ज्जुसुए ४ चेव होइ बोधव्वे । सद्दे ५ अ समभिरूढे ६, एवंभूए अ मूलनया ॥१॥" तत्थ "णेगेहिं माणेहिं, मिणइ त्ति (य) णेगमस्स य निरुत्ती । सेसाणंपि नयाणं, लक्खणमिणमो सुणह वुच्छं ॥२॥" नैकैर्मानैर्महासत्तासामान्यविशेषादिज्ञानैर्मिमीते मिनोति वा वस्तूनि परिछिनत्तीति नैगम इतीयं नैगमस्य निरुक्तिर्व्युत्पत्तिः १, "संगहियपिंडियत्थं, संगहवयणं समासओ बिंति २ । वज्जंति विणिच्छयत्थं, ववहारो सव्वदव्वेसु ॥३॥" सङ्गृह्णाति सामान्यरूपतया सर्वं वस्तु क्रोडीकरोतीति सङ्ग्रहोऽयमुच्यते २, विशेषेण निश्चयो विनिश्चयः

आवालगोपालाङ्गनाद्यवबोधः, न कतिपयचिद्विषयस्तदर्थं व्रजति व्यवहारनयः ३ ॥३॥ "पच्चुप्पन्नग्गाही, उज्जुसुओ णयविही मुणेयव्वो ४ । इच्छइ विसेसियतरं, पच्चुप्पन्नं णओ सद्दो ५ ॥४॥" साम्प्रतमुत्पन्नं प्रत्युत्पन्नमुच्यते वर्त्तमानकालभावीत्यर्थस्तद्ग्रहीतुं शीलमस्येति प्रत्युत्पन्नग्राही ऋजुसूत्रो नयः ४, शब्दनयः प्रत्युत्पन्नं वर्त्तमानं तदपि ऋजुसूत्राभ्युपगमापेक्षया विशेषिततरमिच्छति ५ ॥४॥ "वत्थूओ संकमणं, होइ अवत्थू णए समभिरूढे ६ । वंजणमत्थतदुभए, एवंभूओ विसेसेति ७ ॥ ५ ॥" वस्तुन इन्द्रादेः सङ्क्रमणमन्यत्र शक्रादाविति इत्यं भवत्यवस्त्वसदित्यर्थः ६, व्यञ्जनार्थशब्दयोर्व्यस्तनिर्देशः प्राकृतत्वात् व्यञ्जनं शब्दोऽर्थस्तु तद्गोचरस्तच्च तदुभयं-शब्दार्थलक्षणं विशेषयति नैश्चित्येन स्थापयति एवंभूतनयः ७ ॥५॥ "सव्वेसिंपि नयाणं, बहुविहवत्तव्वयं निसामेत्ता। तं सव्वनयविसुद्धं, जं चरणगुणट्ठिओ साहू ॥६॥" स० सर्वनयसम्मत्तं। च० चारित्रं क्रियागुणोऽत्र ज्ञानमिति ॥६॥ इत्यावश्यकनिर्युक्तौ-तथा "इत्थ पत्थगदिट्ठंतो जहा-से जहा नामए केइ पुरिसे परसुं गहाय अडविहुत्तो गच्छेज्जा, तं च केइ पासित्ता वएज्जा कहिं भवं गच्छइ ? अविसुद्धो णेगमो भणइ, पत्थगस्स गच्छामि। तं च केइ छिज्जमाणं पासित्ता वएज्जा किं भवं छिंदसि ? विसुद्धतरो णेगमो भणइ, पत्थगं छिंदामि। तं च केइ तच्छिज्जमाणं पासित्ता वएज्जा किं भवं तच्छसि ? विसुद्धतराओ णेगमो भणइ, पत्थगं तच्छेमि। तं च उक्किरमाणं पासित्ता वएज्जा किं भवं उक्किरसि ? विसुद्धतराओ णेगमो भणइ पत्थगं उक्किरामि। तं च केइ लिहमाणं पासित्ता वएज्जा किं भवं लिहसि ? विसुद्धतराओ णेगमो भणइ पत्थगं लिहामि, एवं विसुद्धत्तरनेगमस्स नामा उडियपत्थओ ७" एवमनेन प्रकारेण तावन्नेयम्, यावद्विशुद्धतरनैगमस्य 'नामाउडिय' त्ति आकुट्टितनामा प्रस्थको अयमित्येवं नामाङ्कितो निष्पन्नप्रस्थक इति १। "एवमेव ववहारस्सवि २ संगहस्स चिओ मिओ

मेअसमारूढो पत्थओ" सामान्यरूपतया सर्वं वस्तु सङ्गृण्हाति—क्रोडीकरोतीति सङ्ग्रहस्तस्य मतेन चितादिविशेषणविशिष्ट एव प्रस्थो भवति नान्यः, तत्र चितो—धान्येन व्याप्तः, स च देशोनोऽपि भवति, अत आह मितः—पूरितः अनेनैव प्रकारेण मेयं समारूढं यत्र स आहिताग्न्यादेराकृतिगणत्वात् मेयसमारूढः, अयमत्रभावार्थः—प्राक्तननयद्वयस्याविशुद्धत्वात् प्रस्थककारणमपि प्रस्थक उक्तो, अनिष्पन्नः प्रस्थकोऽपि स्वकार्याकरणकालेऽपि प्रस्थक इष्टः, अस्य तु ततो विशुद्धत्वाद्धान्यमानलक्षणं स्वार्थं कुर्वन्नेव प्रस्थकः ३। "उज्जुसुयस्स पत्थओ वि पत्थओ मेअं पि पत्थओ।" ऋजुसूत्रस्य निष्पन्नस्वरूपोऽर्थक्रियाहेतुः प्रस्थकोऽपि प्रस्थकः तत्परिच्छिन्नं धान्यादिकमपि प्रस्थकः, उभयत्र प्रस्थकोऽयमिति व्यवहारदर्शनात्तथा प्रतीतेः ४ "तिण्हं सद्दनयाणं पत्थगाहिगारजाणओ पत्थओ, जस्स वा वसेणं पत्थओ निप्पज्जइ ५। ६। ७।" तथा च—"से जहा नामए केइ पुरिसे कंचि वएज्जा कहिं भवं वससि ? अविसुद्धो णेगमो भणइ लोए वसामि। लोए तिविहे पं० तं० अहोलोए तिरियलोए उड्ढलोए, एएसु सव्वेसु भवं वससि ? विसुद्धतराओ णेगमो भणइ तिरियलोए वसामि। तिरियलोए जंबुद्दीवाइया सयंभूरमणपज्जवसाणा असंखेज्जा दीवसमुद्दा तेसु सव्वेसु भवं वससि ? विसुद्धतराओ णेगमो भणइ जंबुद्दीवे वसामि। जंबुद्दीवे दस खित्ता पं० तं० भरहे १ एरवए २ जाव विदेहे एएसु सव्वेसु भवं वससि ? विसुद्धतराओ णेगमो भणइ भरहे वसामि। भारहे वासे दुविहे पं० तं० दाहिणद्धभरहे उत्तरद्धभरहे य एएसु दोसु भवं वससि ? विसुद्धतराओ णेगमो भणइ दाहिणद्धभरहे वसामि। दाहिणभरहद्धे अणेगाइं गामागरनगरजावसन्निवेसा य तेसु सव्वेसु भवं वससि ? विसुद्धतराओ णेगमो भणइ पाडलिपुत्ते वसामि। पाडलिपुत्ते अणेगाइं घरसयाइं तेसु सव्वेसु भवं वससि ? विसुद्धतराओ णेगमो भणइ देवदत्तस्स घरे वसामि। देवदत्तस्स घरे अणेगाइं कोट्ठागाराइं तेसु सव्वेसु

भवं वससि ? विसुद्धतराओ णेगमो भणइ गब्भघरे वसामि। एवं विसुद्धणेगमस्स वसमाणो वसइ १। एवमेव ववहारस्स वि २। संगहस्स संथारगसमारूढो वसइ ३। उज्जुसुयस्स जेसु आगासपएसेसु ओगाढो तेसु वसइ ४। तिण्हं सद्दनयाणं आयभावे वसइ ५।६।७।" इति अनुयोगद्वारसूत्रे। एवमन्यान्यपि सप्तभङ्ग्यादीन्यागमरहस्यानि स्वयं ज्ञेयानि इति। विषमाक्षरेति गाथाछन्दः ॥ ४३ ॥ अथ गीतार्थोपदेशः—सर्वोऽपि सुखावहो भवतीत्याह—

**गीअत्थस्स वयणेणं, विसं हालाहलं पिबे। निव्विकप्पो य भक्खिज्जा, तक्खणे जं समुद्दवे ॥४४॥**

**परमत्थओ विसं नो तं, अमयरसायणं खु तं। निव्विग्घं जं न तं मारे, मओ वि अमयसमो ॥४५॥**

अनयोर्व्याख्या—गीतार्थस्य वचनेन—उपदेशेन तद्विषं—गरलं, किं भूतं ? हालाहलं—स्थावरविषभेदरूपं निर्विकल्पो—गतशङ्कः सन् सुधीः पिबेत् भक्षयेच्च, तत्र द्रवरूपं पिबेत्, अद्रवं तु भक्षयेत्, गीतार्थोपदेशेन विषमिव दृश्यमानमसुन्दरमप्यनुष्ठानं समाचरेदिति परमार्थः, यत्तत्क्षणे—भक्षणक्षण एव समुद्रावयेत्—पञ्चत्वं प्रापयेत्। विषभक्षणे हेतुमाह—परमार्थतः—तत्त्वतस्तद् गीतार्थोपदिष्टविषं विषं न स्यात्, खु—निश्चितं तद्वि षं अमृतरसायनममृतमेव रसायनं—जराव्याधिजिदौषधं, अमृतरसायनं हितकारीत्यर्थः, यद्विषं निर्विघ्नं करोति तद्विषं न मारयति। यतः स मृतोऽपि—मरणं प्राप्तोऽपि अमृतसमो—जीवन्नेव भवतीत्यर्थः। गीतार्थोपदेशेन विषभक्षणस्याप्यायतौ शाश्वतसुखहेतुत्वादिति। प्रसङ्गाद् गीतार्थसंविग्नयोरत्र चतुर्भङ्गी यथा—संविग्गा नाम एगे नो गीअत्था १, नो संविग्गा नाम एगे गीयत्था १, संविग्गा णाम एगे गीयत्थावि ३, नो संविग्गा णाम एगे नो

गीयत्थावि ४। तत्थ न ताव पढमभंगिल्ला धम्मायरिया, जओ नाम किं तेण संविग्गेणं जो गीयत्थत्तविरहिओ, जओ सुयं "पढमं नाणं तओ दया, एवं चिट्ठइ सव्वसंजए। अन्नाणी कि काही, किं वा णाही छेयपावगं ॥१॥" तहा। "जो हेउवायपक्खम्मि, हेउओ आगमे य आगमिओ। सो ससमयपन्नवओ, सिद्धंतविराहगो अन्नो ॥ १ ॥" तहा "उस्सग्गसुयं किंची, किंची अववाइयं भवे सुत्तं। तदुभयसुत्तं किंची, सुत्तस्स गमा मुणेयव्वा ॥ १ ॥" तहा "सावज्जणवज्जाणं, वयणाणं जो न जाणइ विसेसं। वुत्तुं पि तस्स न खमं, किमंग पुण देसणं काउं ॥१॥" जे आगमरहस्सविगलावि होऊण गच्छं परियट्टंति, बाहिं बहुस्सुयाणुगिइं कुव्वंता वि न ते भवंधकूवाओ जीवाण उत्तारणाय अलं, किं बहुणा छम्मासियाइ दुक्करकिरियारओ वि अगीयत्थो गुरू विसं व विसहरुव्व खलसंगुव्व कुलडासंबंधुव्व भीममसाणं व दुस्साहियपिसाउव्व डज्झमाणमहारन्नं व परिहरियव्वु त्ति। एष प्रथमभङ्गः १। तहा अन्ने गीयत्था नो संविग्गा, तत्थ वि किं नाम तेण सुएण अत्थेण वा णाएण! न जम्हा संवेगो आयारो वा पयट्टइ, केवलं गलतालुसोसणफलं। जओ—"जहा खरो चंदणभारवाही, भारस्स भागी न हु चंदणस्स। एवं खु नाणी चरणेण हीणो, नाणस्स भागी न हु सुग्गईए ॥ १ ॥" तहा "आउज्जनट्टकुसलावि, नट्टिया तं जणं न तोसेइ। जोगं अजुंजमाणी, निंदं खिंसं च सा लहइ ॥ १ ॥ इअ लिंगनाणसहिओ, काइयजोगं न जुंजई जो उ। न लहइ स मुक्खसुक्खं, लहइ य निंदं सपक्खाओ ॥ २ ॥ जाणंतो वि य तरिउं, काइयजोगं न जुंजइ नईए। सो बुज्झइ सोएणं, एवं णाणी चरणहीणो ॥ ३ ॥" जह साली महया परिस्समेण निप्फाइत्त। कुट्ठागारे छुभित्ता, जइ तेहिं सालीहि खज्जपिज्जइओ उवभोगो न कीरइ तो सालिसंगहो अफलो हवइ, अह तेहिं उवभोगो कीरइ तो सफलो भवइ, तो एवं नाणेण नाऊण हेयमुवादेयं च

वत्थुं हेयं हिच्चा उवादेए पयट्टिज्जति, अहवा इत्थ 'संविग्गपक्खवाई सुद्धपरूवगो वंदइ न य वंदावेइ' इच्चाइगुणगणसंगओ भवइ, तओ आगामियत्ताए सुलभबोहियत्तेण आराहगो भवइ। एष द्वितीयो भङ्गः २। जे ते संविग्गा गीयत्था ते नाणसंपया संपउत्तयाए चरणगुणप्पहाणयाए आराहगत्तेण धम्मायरिया भवंति। नणु ते एवंविहा गणहरा चउद्दसपुव्विणो वा, संपइ काले न तहाविहं सुयं, न तहा अप्पमायप्पहाणा किरिया, कहं धम्मायरियत्तं? गुरू भणइ सोम! सुणसु—वट्टमाणे काले जं नाणं वट्टइ तस्स सुत्तत्थेहिं सुत्तत्थाओ गहियट्ठा पत्तट्ठा विणिच्छियट्ठा गीयत्था दूसमछेवट्ठाईणमणुभावओ वीरियमगोविंता संविग्गा जओ सुयं—"को वा तहा समत्थो, जह तेहि कयं तु धीरपुरिसेहिं। जहसत्ती पुण कीरइ, दढप्पइन्ना हवइ एवं ॥ १ ॥ कालोचियजयणाए, मच्छररहियाण उज्जमंताण। जणजत्तारहियाणं, होइ जइत्तं जईण सया ॥ २ ॥" जं पुण जयंताण वि पमायबहुलत्तयाए कहवि खलियं न तेण चारित्तविराहणा। जओ—"कंटयपहिव्व खलणा—तुल्ला हुज्जा पमायछलणाओ। जयणावओ वि मुणिणो, चारित्तं न उण सा हणइ ॥१॥" तहा अववायपयालंबणे वि सुद्धचरणो चेव जहा—"काउस्सग्गो उद्धट्ठाणेण कायव्वो, अववाएण अतरंतो उ निसन्नो करिज्जा। तह वि हु असहू निवन्नो उ संवाहुवस्सए वा कारणे सहू वि य निसन्नो।" इत्यादि श्राद्धप्रतिक्रमणचूर्णिगतमिति। एष तृतीयभङ्गः ३। ये तु न संविग्ना न गीतार्था ज्ञानक्रियोभयविकलाः, केवलं लिंगमात्रोपजीविनो धर्मस्यानाराधकत्वेन न ते धर्माचार्या इत्येष चतुर्थभङ्गः ४, अत्र तु तृतीयेनाधिकार इति। अनुष्टुब्विषमाक्षरेति गाथाछन्दसी ॥ ४४। ४५ ॥ अथ गीतार्थोपदेशः सर्वोऽपि दुःखावहो भवतीत्याह—

**अगीयत्थस्स वयणेणं, अमियंपि न घुंटए। जेण नो तं भवे अमयं, जं अगीयत्थदेसियं ॥ ४६ ॥**

**परमत्थओ न तं अमयं, विसं हालाहलं खु तं। न तेण अजरामरो हुज्जा, तक्खणा निहणं वए ॥ ४७ ॥**

अनयोर्व्याख्या—अगीतार्थस्य पूर्वोक्तप्रथमचतुर्थभङ्गतुल्यस्य वचनेन अमृतमपि 'न घुंटए' त्ति न पिबेत् अगीतार्थोपदेशेनामृतवद् दृश्यमानं सुन्दरमप्यनुष्ठानं न कुर्यादिति परमार्थः, येन कारणेन न तदमृतं भवेत्। यदगीतार्थदेशितं—अगीतार्थोपदिष्टं एतदेव विशेषेणाह परमार्थतः—तत्त्वतो न तदमृतं न गुणकारीत्यर्थः। तद्विषं हालाहलं, खु—निश्चितं न तेन अजरामरो—मोक्षसुखभाग् भवेत्, तत्क्षणादेव निधनं—विनाशं अनन्तजन्ममरणलक्षणं व्रजेत्—प्राप्नुयात्। अगीतार्थोपदेशेनामृतपानस्यापि अनन्तसंसारहेतुत्वात्। उक्तं च—" जं जयइ अगीयत्थो, जं च अगीयत्थनिस्सिओ होइ। वट्टावेइ य गच्छं, अणंतसंसारिओ होइ॥ १॥ कह उ जयंतो साहू, वट्टावेइ य जो उ गच्छं तु। संजमजुत्तो होउं, अणंतसंसारिओ भणिओ॥ २॥ दव्वं खित्तं कालं, भावं पुरिसपडिसेवणाओ य। न वि जाणइ अगीओ, उस्सग्गववाइयं चेव॥ ३॥ जहठियदव्वं न याणइ, सच्चित्ताचित्तमीसियं चेव। कप्पाकप्पं च तहा, जोगं वा जस्स जं होइ॥ ४" इत्यादि उपदेशमालायामिति। विषमाक्षरेति गाथाछन्दसी॥ ४६॥ ४७॥ अथ गाथाद्वयेनागीतार्थसङ्गं सर्वथा त्याजयन्नाह—

**अगीयत्थकुसीलेहिं, संगं तिविहेण वोसिरे। मुक्खमग्गस्सिमे विग्घे, पहंमी तेणगे जहा॥ ४८॥**

व्याख्या—अगीतार्थाश्च कुशीलाश्च तैरगीतार्थकुशीलैरत्र कुशीलग्रहणात् तुलामध्यन्यायेन सभेदपार्श्वस्थावसन्नसंसक्तयथाछन्दैश्च सह सङ्गं—मिलनं त्रिविधेन—मनोवाक्कायलक्षणेन योगेन करणकारणानुमतिलक्षणेन करणेन वा व्युत्सृजेत् त्यजे-

द्रित्यर्थः । तथा चोक्तं महानिशीथषष्ठाध्ययने-" वासलक्खंपि सूलीए, संभिन्नो अच्छियामुहो । अगीयत्थेण समं, एक्कं खणर्द्धं पि न संवसे ॥ १ ॥ " ननु स्वगुरोः पार्श्वस्थादित्वप्राप्तस्य किं क्रियते उच्यते आगमोक्तविधिना त्यागो विधीयते यदुक्त-मुपदेशमालायां ३७६ गाथाहेयोपादेयवृत्तौ-" गीयत्थं संविग्गं, आयरियं मुयइ वलइ गच्छस्स । गुरुणो य अणापुच्छा, जं किंञ्चि वि देइ गिण्हइ वा ॥ १ ॥ " गीतार्थं-अधितागमं संविग्नं मोक्षाभिलाषिणमाचार्यं-निजगुरुं मुञ्चति-निष्प्रयोजनं परि-त्यज्य गच्छतीत्यर्थः । इह च गीतार्थसंविग्नग्रहणमगीतार्थासंविग्नं पुनरागमप्रतिपादितक्रमेणात्मानं मोचयित्वा मुञ्चतोऽपि न दोष इति ज्ञापनार्थमिति । तथा स्थानाङ्गतृतीयस्थानकेऽप्युक्तं, यथा-" एवं विजहणा "-अस्य वृत्तिः एवमिति आचार्यत्वादिभे-देन त्रिधैव विहानं-परित्यागस्तच्चाचार्यादेः स्वकीयस्य प्रमाददोषमाश्रित्य वैयावृत्त्यक्षपणार्थमाचार्यान्तरोपसम्पत्त्या भवतीत्या-दि, यतो मोक्षमार्गस्य-निर्वाणपथस्येमे पूर्वोक्ता 'विग्घ' त्ति विघ्नाः कारणे कार्योपचारात् विघ्नकरा इत्यर्थः । दृष्टान्तमाह-यथा पथि-मार्गे 'तेणगे' त्ति चौरा विघ्नकरा भवन्तीति । विषमाक्षरेति गाथाछन्दः ॥ ४८ ॥

**पज्जलियं हुयवहं दट्ठुं, निस्संको तत्थ पविसिउं । अत्ताणं निद्दहिज्जाहि, नो कुसीलस्स अल्लिए ॥ ४९ ॥**

व्याख्या—प्रज्वलितं हुतवहं- वैश्वानरं दट्ठुमिति दृष्ट्वा-विलोक्य निःशङ्कः-त्यक्तशङ्कस्तत्र हुतवहे प्रविश्य-प्रवेशं कृत्वा आत्मानं निर्दहेत्-ज्वालयेदित्यर्थः । परं नो-नैव 'कुसीलस्स' त्ति 'क्वचिद् द्वितीयादेः' (८-३-१३४) इति प्राकृतसूत्रेण द्वितीयास्थाने षष्ठीविधानात् कुशीलं 'अल्लिए' ति आश्रयेदनन्तसंसारहेतुत्वात् । उक्तं च श्रीमहानिशीथद्वितीयाध्ययन-प्रान्ते-" जीवे संमग्गमाइण्णे, घोरं वीरं तवं चरे । अचयंतो इमे पंच, कुज्जा सव्वं निरत्थयं ॥ १ ॥ पासत्थोसन्नहाछंदे, कुसीले

सबले तहा । दिट्ठीए वि इमे पंच, गोयमा न निरिक्खए ॥ २ ॥ ” अत्र चतुर्थाध्ययनोक्तसुमतिदृष्टान्तो यथा–“ से भयवं ! कहं तेण सुमइणा कुसीलसंसग्गी कया आसीओ जीए उ एरिसे अइदारुणे अवसाणे समक्खाए जेण भवकायठिईए अणोरपारं भवसायरं भमिही, से वराए दुक्ख संतत्ते अलभंते सवन्नुवएसियअ हिंसालक्खणखमाइदसविहे धम्मे बोहिंति ? गोयमा ! णं इमे तं जहा–अत्थि इहेव भारहे वासे मगहा नाम जणवओ, तत्थ कुसत्थलं नाम पुरं, तम्मि य उवलद्धपुन्नपावे सुमुणियजीवाइपयत्थे नाइलसुमइनामधिज्जे दुवे सहोयरे महिड्ढिए सड्ढगे अहेसि । अह अन्नया अंतरायकम्मोदएण विअलियं विहवं तेसिं, न उण सत्तपरक्कमे । एवं तु अचलियसत्तपरक्कमाणं तेसिं अच्चंतपरलोगभीरूणं विरयकूडकवडालियाणं पडिवन्नजहोवइट्ठदाणाइचउक्खंधउवासगधम्माणं अपिसुणा णं अमच्छरीणं अमायावीणं किं बहुणा ? गोयमा ! ते उवासगे णं आवसहे गुणरयणाणं पभावखंतीए निवासे सुयणमित्तीणं, एवं तेसिं बहुवरिसवन्नणिज्जगुणरयणाणं जाहे असुहकम्मोदएणं न पहुप्पए संपया ताहे न पहुप्पंति अट्ठाहिया महिमादयो इट्ठदेवयाणं जहट्ठिए पूयासक्कारे साहम्मियसम्माणे बंधुजणसंववहारे अ । अहन्नया अचलंतेसुं अतिहिसक्कारेसुं अपूरिज्जमाणेसुं पणयजणमणोरहेसु विहडंतेसु य सुहियं सयणमित्तबंधवकलत्तपुत्तणत्तुयगणेसुं विसायमुवगएहिं गोयमा ! चिंतियं तेहिं सड्ढगेहिं तं जहा–‘ जा विहवो ता पुरिसस्स, होइ आणापडिच्छओ लोगो । गलिओदयं घणं विज्जुला वि दूरं परिच्चयइ ॥ १ ॥ ’ एवं च चिंतिऊण अवरुप्परं भणिउमारद्धे, तत्थ पढमो–‘ पुरिसेण माणधणवज्जिएण, परिहीणभागधिज्जेण । ते देसा गंतव्वा, जत्थ सवासी न दीसंति ॥१॥ ’ तह बीओ–‘ जस्स धणं तस्स जणो, जस्सत्थो तस्स बंधवा बहवे । धणरहिओ अ मणूसो, होइ समो दासपेसेहिं ॥१॥ ’ अह एवं अवरुप्परं संजोजेऊण गोअमा ! कयं

देसपरिचायनिच्छयं तेहिं जहा वच्चामो देसंतरं ति, तत्थ णं कयाइ पुज्जंति चिरचिंतिए मणोरहे हवइ य पवज्जाए सह संजोगो जइ दिव्वो बहुमन्निज्जा, जाव णं उज्झिऊण तं कमागयं कुसत्थलं पडिवन्नं विदेसगमणं। अह अन्नया अणुपहेण गच्छमाणेहिं दिट्ठा तेहिं पंच साहुणो छट्ठं समणोवासगं ति। तओ भणियं—नाइलेणं जहा—भो भो सुमई भद्दमुह! पिच्छ केरिसो साहुसत्थो ता एएण चेव साहुसत्थेणं गच्छामो, जइ पुणो वि नूणं गंतव्वं। तेण भणियं—एवं होउ त्ति, तओ संमिलिया तत्थ सत्थे, जाव णं पयाणगमेगं वहंति, ताव णं भणिओ सुमई नाइलेणं—जहा णं भद्दमुह! मए हरिवंसतिलयमरगयच्छविणो सुगहियनामधिज्जबावीसइमतित्थगरस्स णं अरिट्ठनेमिनामस्स पायमूले सुहनिसन्नेणं एवं अवधारियं आसी, जहा—जे एवंविहे अणगाररूवे भवंति, ते अ कुसीले, जे कुसीले ते दिट्ठीए वि निरिक्खिउं न कप्पंति, ता एते साहुणो तारिसे, मणागं न कप्पइ एएसिं समम्म्हाण गमणसंसग्गं, ता वच्चंतु एते, अम्हे अप्पसत्थेणं चेव वइस्सामो, न कीरइ तित्थयरवयणस्सातिक्कमो, जओ णं ससुरासुरस्सावि जगस्स अलंघणिज्जा तित्थयरवाणी, अन्नं च जाव एतेहिं समं गम्मइ ताव णं चिट्ठउ ताव दरिसणं आलावादीणि निअमा भवंति, ता किं अम्हेहिं तित्थयरवाणी उल्लंघइत्ता णं गंतव्वं? एवं निअमणे भाविऊण तं सुमतिं हत्थे गहाय निवडिओ नाइलो साहुसत्थाओ निविट्ठो अ चक्खुविसोहीए फासुगभूपएसे। तओ सुमइणा भणियं जहा—'गुरुणो मायावित्त (पिअर)स्स, जिट्ठभाया (उणा) तहेव भयणीणं। जत्थुत्तरं न दिज्जइ, हे देव! भणासि किं तत्थ ॥१॥ आएसमवामाणं, पमाणपुव्वं तह त्ति नायव्वं। मंगलममंगलं वा, तत्थ वियारो न कायव्वो ॥२॥ नवरं इत्थ य मे वी, दायव्वं अज्जमुत्तरमिमस्स। खरफरुसकक्कसानिट्ठ—दुट्ठनिट्ठुरसरेहिं तु ॥३॥ अहवा कह उच्छलउ, जीहा मे जिट्ठभाउणो पुरओ। जस्सुच्छंगे विणिअं, सिणेहरमिओऽसुइविलित्तो ॥ ४ ॥ अहवा

कीस न लज्जइ, एस सयं चेवमेव पभणंतो । जं नु कुसीले एते, दिट्ठीए वी न दट्ठवे ॥ ५ ॥' साहुणो त्ति जाव न एव इयं वागरेइ, ताव इंगियागारकुसलेण मुणियं नाइलेणं, जहा णं अलियकसाइओ एस मणागं सुमती ता किमहं पडिभणामि त्ति चिंतिउं समाढत्तो । जहा—'कज्जेण विणा अकंडे, एस पकुविओ हु ताव संचिट्ठे । संपइ अणुणिज्जंतो, न याणिमो किं व बहु मण्णे ॥ १ ॥ ता किं अणुणेमि मिणं, उदाहु बोलउ खणद्धतालं वा । जेणुवसमियकसाओ, पडिवज्जइ तं तहा सवं ॥ २ ॥ अहवा पत्थावमिणं, एयस्स वि संसयं अवहरेमि । एस न याणइ भद्दं, पात्तविसेसं न परिकहियं ॥ ३ ॥' त्ति चिंतेऊण भणिउमाढत्तो—'नो देमि तुज्झ दोसं, न यावि कालस्स देमि दोसमहं । जं हियबुद्धीइ सहोयरा वि भणिया पकुवंति ॥ १ ॥ जीवाणं चिय इत्थं, दोसं कम्मट्ठजालकिसियाणं । चउगइनिप्फिडियाणं, हिओवएसं न बुज्झंति ॥ २ ॥ घणरागदोसकुग्गह—मोहमिच्छत्तखवलिअमणाणं । भाइ विसं तालउडं, हिओवएसाइ मन्नंति ॥ ३ ॥' एवमायन्निऊण तओ भणियं सुमइणा जहा—तुमं चेव सच्चवाई भणसु एयाई, नवरि न जुत्तमेयं जं साहूणं अवण्णवायं भासिज्जइ, अन्नं च किं न पिच्छसि एएसिं महाणुभागाणं चेट्ठियं—छट्ठट्ठमदसमदुवालसममासखवणाइहिं आहारगहणं गिम्हायावणट्ठाणवीरासणउक्कुडुयासणादिनाणाभिग्गहधारणेण उक्किट्ठतवाणुचरणेणं च सुक्कं चम्ममंससोणियं ति? महाउवासगो सि तुमं! महाभासासमिइविदिया तए! जेणेरिसगुणोवउत्ताणंपि महाणुभागाणं साहूणं कुसील त्ति नामं संकप्पियं ति । तओ भणियं नाइलेणं जहा—मा वच्छ! तुमं एतेण परितोसमुवयासि, जहा अहियं अलीयाचारेणं परिमुसिओ अकामनिज्जराए वि किंचि कम्मक्खयं भवइ, किं पुण जं बालतवेण, ता एते बालतवस्सिणो दट्ठवा, जओ णं किं किंची उस्सुत्तं मग्गयातिरित्तमेतेसिं पदी-

सइ। अन्नं च सुमई! नत्थि मम इमाणुवरि कोवि सुहुमोवि मणसावि पओसो जेणाहं एएसिं दोसग्गहणं करेमि, किंतु मए भगवओ तित्थगरस्स सगासे एरिसं अवधारियं जहा कुसीले अदट्ठवे, ताहे भणियं सुमइणा जहा-जारिसओ तुमं निबुद्धिओ तारिसो सो वि तित्थयरो जेण य तुज्झमेयं वागरियं ति, तओ एवं भणमाणस्स सहत्थेणं झंपियं मुहकुहरं सुमइस्स, नाइलेणं भणिओ अ जहा-भद्दमुह! मा जगिक्कगुरुणो तित्थयरस्सासायणं कुणसु, मए पुणो भणसु जहिच्छियं, नाहं ते किंपि पडिभणामि। तओ भणियं सुमइणा-जइ एते वि साहुणो कुसीले, ता इत्थ जगे न कोइ सुसीलो अत्थि। तओ भणियं नाइलेणं-भद्दमुह सुमई! इत्थं जइऽलंघणिज्जवक्कस्स भगवओ वयणमायरेयव्वं, जं चेत्थ कयाइ न विसंवएज्जा, नो णं बालतवस्सीणं चेट्ठिअं, जओ णं जिणिंदवयणेणं नियमओ ताव कुसीले इमे दीसंति, पवज्जाए पुण गंधंपि नो दीसइ एएसिं, जेण पिच्छ पिच्छ तावेयस्स साहुणो विइज्जियं मुहणंतयं दीसइ, ता एस ताव अहिगपरिग्गहदोसेण कुसीले, न एयं साहूणं भगवया आइट्ठं, जमहिगपरिग्गहधारणं कीरइ, तावेत्थ हीणसत्तो हुंतो एसेवं मणसाऽज्झवसे, जहा-जइ ममेयं मुहणंतगं विप्पणिरिसहिता बीयं कत्थ पाविज्जा? नो एवं चिंतेइ मूढो, जहा अहिगाणु वओगोवहीधारणेण मज्झ परिग्गहवयस्स भंगं होही। अहवा किं संजमेऽभिरओ एस मुहणंतगादि संजमोवओग्गधम्मोवगरणेण वि सीएज्जा? निञ्मओ णं विसीएण य सत्ताण य हीणसत्तो हमिइ पायडेइ उम्मग्गायरणं च पयंसेइ पवयणं च मइलेइ त्ति। एस पुण पिच्छसि सामन्नवन्नो? एएण कल्लं तीए वि निअंसणाए इत्थीए अंगं दिट्ठं, निज्झाइऊण जन्नालोइयपडिक्कंतं, तं किं तए न विण्णायं? एस उण पिच्छसि परूढविप्फोडगविम्हियाणणो? एएण संपयं चेव लोयट्ठाए सहत्थेणं अदिन्नच्छारगहणं कयं तए वि दिट्ठमेयं ति। एसो उण पिच्छसि संघडियकन्नो? एएण अणुग्गए सूरिए उट्ठेह

वच्चामो उग्गयं सूरियं ति तया वि हसियमिणं। एसो उ पेच्छसि ? इमेसिं जेट्ठसहो एसो अज्जरयणीए अणुवउत्तो पसुत्तो विज्जुकाए फुसिओ न एतेणं कप्पग्गहणं कयं, तहा पभाए हरियतणं वासाकप्पंचलेण संघट्टियं, तहा बाहिरोदगस्स परिभोगं कयं, बीअ-कायस्सोपरेणं परिसक्किओ, अविहीए एस खारथंडिलाओ महुरं थंडिलं संकमिओ, तहा पहं पडिवण्णेणं साहुणा कमसयाइ-क्कमे इरियं पडिक्कमियव्वं। तहा चरेयव्वं, तहा चिट्ठेयव्वं, तहा सएयव्वं, तहा भासेयव्वं, जहा छक्कायमइगयाणं जीवाणं सुहुमबा-यरपज्जत्तापज्जत्त [गमागम] सव्वजीवपाणभूयसत्ताणं संघट्टणं परियावणा किलामणोद्दवणं वा न भवेज्जा। ता एतेसिं पव्वइयाणं एयस्स एक्कमवि न इत्थ दीसइ। जं पुण मुहणंतयं पडिलेहमाणो अज्जमए एसो चोइओ जहा—एरिसं पडिलेहणं करेसि जेण वाउकायं फडफडस्स संघट्टेज्जा सरियं च पडिलेहणाए संतिअं कारणं ति। ता भद्दमुह ! एएण सम्मं संजमट्ठाणंतराणं एगमवि नो परिरक्खियं ता किमेस साहू भन्नेज्जा ? जस्सेरिसं पमत्तत्तणं, न एस साहू जस्सेरिसं निद्धम्मसंपलत्तणं। भद्दमुह ! पिच्छ पिच्छ सूणो इव निद्धंसो छक्कायविमद्दणो कहाभिरमे एसो। अहवा वरं सूणो जस्स णं सुहुममवि नियमवयभंगं नो भविज्जा एसो उ नियमभंगं करेमाणो केण उवमिज्जा। ता वच्छ सुमइ भद्दमुह ! न एरिसकत्तवायरणाओ भवंति साहू। एतेहिं च कत्तवेहिं तित्थअरवयणं सरेमाणो को एतेसिं वंदणगमवि करिज्जा। अन्नं च एएसिं संसग्गेणं कयाइ अम्हाणंपि चरणकरणेसु सिढिलत्तं भवेज्जा, जेणं पुणो पुणो आहिंडेमो घोरं भवपरंपरं। तओ भणियं सुमइणा—जइ एए कुसीले तहावि मए एएहिं समं पवज्जा कायव्वा। जं पुण तुमं करेसि तमेव धम्मं नवरं को अज्ज तं समायरिउं सक्को। ता मुअसु करं मए एएहिं समं गंतव्वं जाव णं नो दूरं वयंतिमे साहुणो त्ति। तओ भणियं नाइलेणं—भद्दमुह सुमइ ! नो कल्लाणं एतेहिं समं गच्छमाणस्स तुज्झं

ति, अहं च तुज्झ हियवयणं भणामि । एवं ठिए जं चेव वहुगुणं तमेव अणुसेवय, नाहं तव दुक्खेण धरेमि । अह अन्नया अणेगोवाएहिं निवारिज्जंतो न ठिओ, गओ सो मंदभग्गो सुमई गोयमा ! पव्वइओ य । अह अन्नया वच्चंतेणं मासपंचगेणं आगओ महारोरवो दुवालससंवच्छरिओ दुब्भिक्खो, तओ ते साहुणो तक्कालदोसेण अणालोइयपडिक्कंता मरिऊणोववन्ना भूयजक्खरक्खसपिसायाणं वाणमंतरदेवाणं वाहणत्ताए, तओ चविऊणं मेच्छजाईए कुणिमाहारकूरज्झवसायदोसाओ सत्तमाए पुढवीए, तओ उवट्टिऊण तईयाए चउवीसगाए सम्मत्तं पाविहंति, तओ सम्मत्तलंभभवाओ तइयभवे चउरो सिज्झिहिंति एगो न सिज्झिही जो सो पंचमगो सव्वजेट्ठो, जओ णं सो एगंतमिच्छदिट्ठी अभवो अ । से भयवं ! जे[1] से सुमई से भवे उयाहु अभवे ? गोयमा ! भवे, से भयवं ! जइ णं भवे ता णं मए समाणे कहिं समुप्पण्णे ? गोयमा ! परमाहम्मियासुरेसु । से भयवं ! किं भवे परमाहम्मियासुरेसुं समुप्पज्जइ ? गोयमा ! जे केइ घणरागदोसमोहमिच्छत्तोदएणं सुकहियं पि परमहिओवएसं अवमन्नेत्ता णं दुवालसंगं च सुयनाणमप्पमाणीकरिय अयाणित्ता य समयसब्भावं अणायारं पसंसित्ता णं तमेव च उच्छप्पिज्जा, जहा— सुमइणा उच्छप्पियं—न भवंति एए कुसीले, अहा णं एए वि कुसीले तो इत्थ जगे न कोवि सुसीलो अत्थि, निच्छियं मए एएहिं समं पवज्जा कायवा, तहा जारिसो तुमं निव्वुद्धिओ सो वि तित्थयरो त्ति, एवमुच्चारेमाणेणं से णं गोयमा ! महंतंपि तवमणुट्ठेमाणे परमाहम्मियासुरेसु उववज्जिज्जा । से भयवं ! परमाहम्मियासुरदेवाणं उवट्टे समाणे सुमई कहिं उववज्जिज्जा ? गोयमा ! तेणं मंदभग्गेणं अणायारपसंसुच्छप्पणं करेमाणेणं सम्मग्गपणासणं अभिनंदियं तक्कम्मदोसेण अणंतसंसारियत्तणं अज्जियंतो कित्तिए अवाए तस्स साहेज्जा ? जस्स णं अणंतपुग्गलपरियट्टेसु वि नत्थि चउगइसंसाराओ अवसाणं ति, तहा वि संखेवओ

१ अणेग प्र०

सुणसु—गोयमा ! इणमेव जंबुद्दीवं परिक्खिविऊणं ठिए जे एस लवणजलही, एयस्स णं जं यामं सिंधुमहानईपविट्ठा तप्पएसाओ दाहिणेणं दिसाभागेणं पणपण्णाए जोयणेसु वेइयाए मज्झंतरं अत्थि पडिसंतावदायगं नाम अद्धतेरसजोयणपमाणं हत्थिकुंभागारं थलं। तस्स य लवणजलोवरेणं अद्धट्ठजोयणाणि उस्सेहो। तहिं च णं अच्चंतघोरतिमिसंधयाराओ घडियालगसंठाणाओ सीयालीसं गुहाओ, तासुं च णं जुगं जुगं निरन्तरे जलयारिणो मणुया परिवसंति। ते य वज्जरिसहनारायसंघयणे महाबलपरक्कमे अद्धत्तेरसरयणी पमाणेणं संखिज्जवासाऊ महुमज्जमंसप्पिए सहावओ इत्थिलोले परमदुवण्णसुउमालअणिद्धखरफरुसियतणू मायंगवइकयमुहे सीहघोरदिट्ठी कयंतभीसणे अदावियपिट्ठी असणिव्वनिट्ठुरपहारी दप्पुद्धरे य भवंति। तेसिं जाओ अंतरंडगोलियाओ ताओ गहाय चमरीणं संतिएहिं सेअपुच्छवालेहिं गुंथिऊणं जे केइ उभयकन्नेसु निबंधिऊणं महग्घुत्तमजच्चरयणत्थी सागरमणुपविसिज्जा। से णं जलहत्थिमहिसगाहगमगरमहामच्छतंतुसुंसुमारपभिईएहिं दुट्ठसावएहिं अभेसिए चेव सव्वंपि सागरजलं आहिंडिऊण जहिच्छाए जच्चरयणसंगहं करिय अहयसरीरे आगच्छिज्जा। ताणं च अंतरंडगोलियाणं संबंधेणं ते वरागा गोयमा ! अणोवमंसुघोरदारुणं दुक्खं पुव्वज्जियरुद्दकम्मवसगा अणुहवंति। से भयवं ! केणं अट्ठेणं ? गोयमा ! तेसिं जीवमाणाणं को समत्थो ताओ गोलियाओ गहेउं, जे जया उण ते घिप्पंति, तया बहुविहाहिं नियंतणाहिं महया साहसेणं संनद्धबद्धकरवालकुंतचक्काइपहरणाडोवेहिं बहुसूरधीरपुरिसेहिं बुद्धिपओगेणं सजीवियडोलाए घिप्पंति। तेसिं च घिप्पमाणाणं जाइं सारीरमाणसाइं दुक्खाइं भवंति, ताइं सव्वेसु नारयदुक्खेसु जइ परं उवमेज्जा। से भयवं! को उण ताओ अंतरंडगोलियाओ गिण्हिज्जा ? गोयमा ! तत्थेव लवणसमुद्दे अत्थि रयणदीवं नाम अंतरदीवं, तस्सेव पडिसंतावदायगाओ थलाओ

एगतीसाए जोयणसएहिं, तन्निवासिणो मणुया संति । भयवं ! कयरेण पओगेण ? खित्तसब्भावसिद्धपुव्वपुरिससिट्ठेणं च विहाणेणं । से भयवं ! कयरे उण से पुव्वपुरिससिट्ठविही तेसिं ति ? गोयमा ! तहियं रयणदीवे अत्थि वीसं एगूणवीसं अट्ठारस दस अट्ठ सत्त धणुपमाणाइं घरट्टसंठाणाइं वरवइरसिलासंपुडाइं, ताइं च विहाडेऊणं, ते रयणदीवनिवासिणो मणुया पुव्वसिद्धखित्तसहावसिद्धेणं चेव जोगेणं पभूयमच्छियामहूए अब्भंतरओ अच्चंतलेवडाइं काऊण, तओ तेसिं पक्कमंसखंडाणि बहूणि जच्चमहुमज्जभंडगाणि पक्खिवंति । तओ एयाइं करियसुरुंददीहमहदुमकट्ठेहिं आरुहित्ताणं सुस्सायपोराणमज्जमच्छिगा महुमंसपडिपुन्ने बहुए लाउगे गहाय पडिसंतावदायगथलमागच्छंति । जाव णं तत्थागए समाणे ते गुहावासिणो मणुआ पिच्छंति, ताव णं तेसिं रयणदीवगनिवासिमणुयाणं वहाय पडिधावंति । तओ ते तेसिं महुपडिपुन्नं लाउगं पइच्छिऊणं अब्भत्थपओगेणं ते कट्ठजाणं जयणयरवेगं दुतं खेविऊण रयणदीवाभिमुहं वच्चंति । इयरे य तं महुमज्जमंसमासाइय पुणो सुट्ठुयरं तेसिं पिट्ठीए धावंति । ताहे गोयमा ! जाव णं अच्चासन्ने भवंति, ताव णं सुस्साउबहुगंधदव्वसंसकारियपोराणमज्जलाउगं पमुत्तूण पुणो वि जयणयरवेगेण रयणदीवहुत्तो वच्चंति, इयरे य तं सुसाउबहुगंधदव्वसंसकारियपोराणमज्जमंसमासाइय पुणो सुट्ठुयरं तेसिं पिट्ठीए धावंति, पुणो वि तेसिं महुपडिपुन्नं लाउगमेगं मुंचंति, एवं ते गोयमा ! महुमज्जलोलए संपलग्गे ताव णयंति जाव णं ते घरट्टसंठाणे वइरसिलासंपुडतो जाव णं तावइयं भूभागं संफुसंति, ताव णं जमेवासन्नं वइरसिलासंपुडं जंभायमाणपुरिसमुहागारं विहाडियं चिट्ठइ, तत्थेव जाइं महुमज्जमंसपडिपुन्नाइं समुद्धरियाइं सेसाइं लाउगाइं ताइं तेसिं पिच्छमाणाणं तत्थ मुत्तूणं निअनिलएसु वच्चंति । इयरे अ मज्जमहुलोलए जाव णं तत्थ पविसंति, ताव णं गोयमा ! जे ते

पुवमुक्के पक्कमंसखंडे जे अ ते महुमज्जपडिपुन्ने भंडगे, जं च महुए चेव आलित्तं सवं तं सिलासंपुडं पिक्खंति, ताव णं तेसिं महंतं परिओसं महंतं तुट्ठिं महंतं पमोयं भवइ, एवं तेसिं महुमज्जपक्कमंसं परिभुंजेमाणाणं जाव णं गच्छंति सत्तट्ठदस-पंच वा दिणाणि, ताव णं ते रयणदीवनिवासी मणुया एगे सन्नद्धबद्धसाउहकरग्गा तं वइरसिलं वेढिऊण सत्तट्ठपंतीहिं अ-च्छंति । अन्ने तं घरट्टसिलासंपुडं मज्झट्ठियाणं ताणं जलमाणुसाणं एगट्ठं मिलंति । तंमि य मेलिज्जमाणे गोयमा ! जइ णं कहवि तुडिविभागाओ तेसिं एक्कस्स दुण्हंपि वा निप्फेडं भविज्जा । तओ तेसिं रयणदीवनिवासिमणुयाणं सविडविपासाय-मंदिरे स चउप्पयाणं तक्खणा चेव तेसिं हत्थाणं संहारकालं भवेज्जा । एवं तु गोयमा ! तेसिं तेण वज्जसिलाघरट्टसंपुडेणं मिलियाणंपि तहियं चेव जाव णं सवट्ठिए दलिऊणं न संपीसिए सुकुमालिया य ताव णं तेसिं नो पाणाइक्कमं भविज्जा । तेउ अट्ठीवइरमिव दुद्दले तेसिं तु तत्थ य वइरसिलासंपुडं कण्हगगोणगेहिं आउत्तमादरेणं अरहट्टघरट्टखरसन्निगचक्कमिव परिमंडलं भमाडिय ताव णं खेडंति जाव णं संवच्छरं, ताहे तं तारिसं अच्चंतघोरदारुणं सारीरमाणसं महादुक्खसन्नि-वायं समणुभवेमाणाणं पाणाइक्कमं भवइ तहावि ते तेसिं अट्ठिओ नो फुडंति नो दोफले भवंति नो संदलिज्जति, नो पहिरिसंति, नवरं जाइं काइं वि संधिसंधाणबंधणाइं ताइं सवाइं विच्छुडेत्ता विजज्जरीभवंति, तओ णं इय उवलघरट्टस्सेव परि-स्सडियं चुन्नमिव किंचि अंगुलाइयं अट्ठिखंडं दट्ठुणं ते रयणदीवगे परिओसमुवहंति । सिलासंवुडाइं उविहाडिऊण ताओ अंतरंडगोलियाओ गहाय जे तत्थ तुच्छविहवे ते पभूयदव्वसंघाएणं विक्किणंति । एएणं विहाणेणं गोयमा ते रयणदीवनि-वासिणो मणुया ताओ अंतरंडगोलियाओ गिण्हंति । से भयवं ! कहं ते वराए तं तारिसं अच्चंतं घोरदारुणं सुदुस्सहं दु-

क्खनियरं विसहमाणे निराहारपाणगे संवच्छरं जाव पाणेवि धारयंति ? गोयमा ! सकयकम्माणुभावाओ, शेषं तु प्रश्नव्याकरणवृद्धविवरणादवसेयम् । से भयवं! तओ मए समाणे से सुमई जीवे कहं उववायं लभेज्जा ? गोयमा ! तत्थेव पडिसंतावदायगथले तेणेव कमेणं सत्तभवंतरे तओ वि दुट्ठसाणे १ तओ वि कण्हे २ तओ वि वाणमंतरे ३ तओ वि लिंबत्ताए वणस्सइए ४ तओ वि मणुएसु इत्थिताए ५ तओ वि छट्ठीए ६ तओ वि मणुयत्ताए कुट्ठी ७ तओ वि महकाए जूहाहिवई गए ८ तओ वि मरिऊण मेहुणासत्ते अणंतवणप्फईए ९ तओ वि अणंतकालाओ मणुएसु संजाए महानेमिची १० तओ वि सत्तमाए ११ तओ वि महामच्छे चरमोयहिम्मि १२ तओ सत्तमाए १३ तओ वि गोणे १४ तओ मणुए १५ तओ विडविकोइलियं १६ तओ वि जलोयं १७ तओ वि महामच्छे १८ तओ वि तंदुलमच्छे १९ तओ वि सत्तमीए २० तओ रासहे २१ तओ वि साणे २२ तओ वि किमी २३ तओ दद्दुरे २४ तओ तेउकाए २५ तओ वि कुंथू २६ तओ वि महुयरे २७ तओ वि चिडए २८ तओ वि उद्देहिगं २९ तओ वि वणप्फई ३० तओ अणंतकालाओ मणुएसु इत्थीरयणं ३१ तओ वि छट्ठीए ३२ तओ वि करेणू ३३ तओ वेसामंडियनामपट्टणं तत्थोवज्झायगेहासन्ने लिंबत्तेण वणस्सई ३४ तओ वि मणुएसु खुज्जित्थी ३५ तओ वि मणुयत्ताए पंडगे ३६ तओ वि मणूयत्तेण दुग्गए ३७ तओवि दमए ३८ तओ वि पुढवादीसु भवकायठिइए पत्तेयं ३९ तओ वि मणुए ४० तओ बालतवस्सी ४१ तओ वाणमंतरे ४२ तओवि पुरोहिए ४३ तओ वि सत्तमाए ४४ तओ वि मच्छे ४५ तओ वि सत्तमाए ४६ तओ वि गोणे ४७ तओ वि मणुए महासम्मद्दिट्ठी अविरए चक्कहरे ४८ तओ पढमाए ४९ तओ वि इब्भे ५० तओ वि समणे अणगारे ५१ तओ वि अणुत्तरसुरे ५२ तओ वि चक्कहरे महासंघयणी भवित्ताणं निव्विन्न-

कामभोगे जहोवइठं संपुन्नं संजमं काऊण गोयमा ! से णं सुमइ जीवो परिनिव्वुडिज्जा । तहा य—जे भिक्खू वा भिक्खुणी वा सड्ढो वा सड्ढी वा परपासंडीणं पसंसं करिज्जा, जे आ वि णं निन्हगाणं पसंसं करिज्जा, जे णं निन्हगाणं अणुकूलं भासिज्जा, जे णं निन्हगाणं आययणं पवेसिज्जा, जे णं निन्हगाणं गंथसत्थपयक्खरं वा परूविज्जा, जे णं निन्हगाणं संतीए कायकिलेसाइए तवे वा संजमे वा नाणे वा विन्नाणे वा सूए वा पंडिच्चे वा अभिमुहमुद्धपरिसामज्झगए सिलाहेज्जा, से वि य णं परमाहम्मिएसुं उववज्जेज्जा जहा सुमई, इत्यादिभावना श्रीमहानिशीथचतुर्थाध्ययनादेवावसेया । से भयवं ! सो उण नाइलसड्ढो कहिं समुप्पन्नो ? गोयमा ! सिद्धीए । से भयवं ! कहं ? गो० ! तेण महाभागेण तेसिं कुसीलाणं नियट्टिऊण तीए चेव बहुसावयनरुसंडसंकुलाए घोरकंताराए अडवीए सव्वपावकलिमलकलंकविप्पमुक्कं तित्थयरवयणं परमहियं सुदुल्लहं भवसएसु वि इति कलिऊण अच्चंतविसुद्धासएण फासुदेसंमि निप्पडिकम्मं निरायारं पडिवन्नं पायवोवगममणसणं ति, अन्नया तेणेव पएसे णं विहरमाणो समागओ तित्थयरो अरिट्ठनेमी (ग्रं० २०००) तस्स य अणुग्गहट्ठाए, तेण य अचलिअसत्तो भद्दसत्तो त्ति काऊण, उत्तमट्ठसाहणी कया साइसया देसणा तमायन्नमाणो सजलजलहरनिनायदेवदुंदुहीनिग्घोसं तित्थयरभारइं सुहज्झवसायपरो आरूढो खवगसेणीए अपुव्वकरणेणं अंतगडकेवली जाओ, एएण अट्ठेणं एवं वुच्चइ जहा णं गोयमा ! सिद्धए । तेणं गोयमा कुसीलसंसग्गीए विप्पहियाए एवइयं अंतरं भवति इति सुमतिसम्बन्ध इति । विषमाक्षरेति गाथाछन्दः ॥ ४९ ॥ अथ गच्छस्यागच्छत्वं स्यात् तयाह—

पजलंति जत्थ धगधग—धगस्स गुरुणा वि चोइए सीसा ।

रागदोसेण विअणु-सएण तं गोयम ! न गच्छं ॥ ५० ॥

व्याख्या-प्रज्वलन्ति अग्निवत् यत्र गच्छे 'धगधगधगस्स' त्ति अनुकरणशब्दोऽयं धगद्धगिति-धगधगायमानं यथा स्यात्तथेत्यर्थः, प्राकृतत्वाच्चैवं प्रयोगः, गुरुणा-आचार्येणापिशब्दादुपाध्यायादिनाऽपि 'चोइए' त्ति भवादृशामयुक्तमेतदित्यादिना प्रकारेण नोदिते सति के शिष्याः-अन्तेवासिनः केन प्रज्वलन्ति रागद्वेषेण अत्र समाहारद्वन्द्वादेकवचनं, तथाऽनुशयेनापि-हा कथं निरन्तरातिदुःसहदुःखसन्तापव्यापव्याकुलीकृतान्तःकरणाः प्रव्रज्योररीकृता मयेत्यादि पश्चात्तापकरणेन चेत्यर्थः, अपिशब्दः चशब्दार्थे, यद्वा रागद्वेषेण किम्भूतेन ? 'विअणुसएण' त्ति विगतोऽनुशयः-पश्चात्तापो यत्र तद् व्यनुशयं तेन पश्चात्तापरहितेनेत्यर्थः, हे गौतम ! स गच्छो न भवतीति । गाथाछन्दः ॥ ५० ॥ अथ गच्छे वसतां बह्वी निर्ज्जरा स्यादित्याह-

गच्छो महाणुभावो, तत्थ वसंताण निज्जरा विउला। सारणवारणचोअण-माईहि न दोसपडिवत्ती ५१

व्याख्या-गच्छः-सुविहितमुनिवृन्दरूपः महानुभावः-प्रभावो यस्यासौ महानुभावः, 'तत्थ' त्ति तत्र गच्छे वसतां-वासं कुर्वतां निर्ज्जरा-कर्म्मक्षयरूपा भवतीति शेषः; किम्भूता विपुला-महती कुत इत्याह-यतस्तत्र वसतां स्मारणावारणाचोदनादिभिः मोऽलाक्षणिकः न दोषप्रतिपत्तिः-न दोषावाप्तिर्भवति । तत्र विस्मृते क्वचित्कर्त्तव्ये भवतेदं न कृतमिति स्मारणा, अकर्त्तव्यानां निषेधो-वारणा, संयमयोगेषु स्खलितस्यायुक्तमेतद्भवादृशां विधातुमित्यादिस्वरमधुरवचनैः प्रेरणं चोदना, आदिशब्दात्तथैव पुनः पुनः प्रेरणरूपा प्रतिचोदनेति । गाथाछन्दः ॥ ५१ ॥ पूर्वं गच्छे वसतां बह्वी निर्ज्जरा दोषाप्रतिपत्तिश्चोक्ता । अथ सा किंविधानां स्यादिति गाथाचतुष्टयेनाह-

गुरुणो छंदणुवत्ती, सुविणीए जिअपरीसहे धीरे । नवि थद्धे नवि लुद्धे, नवि गारविए विगहसीले ॥५२॥ खंते दंते गुत्ते, मुत्ते वेरग्गमग्गमल्लीणे । दसविहसामायारी, आवस्सगसंजमुज्जुत्ते ॥ ५३ ॥ खरफरुसकक्कसाए, अणिट्ठदुट्ठाइ निट्ठुरगिराए । निब्भच्छणनिद्धाडण—माईहि न जे पउस्संति ॥ ५४ ॥ जे अ न अकित्तिजणए, नाजसजणए नकज्जकारी अ । न पवयणुड्डाहकरे, कंठग्गयपाणसेसे वि ॥ ५५ ॥

आसां व्याख्या—गुरोश्छन्दानुवर्त्तिनः—गुरोरभिप्रायानुयायिनः सुविनीताः—शोभनविनययुक्ताः जिताः—पराजिताः परीषहाः शीतोष्णरूपाः यैस्ते जितपरीषहाः । यदुक्तमाचाराङ्गनिर्युक्तौ—" इत्थीसक्कारपरीसहा य दो भावसीयला एए । सेसा वीसं उण्हा, परीसहा होंति णायव्वा ॥ १ ॥ जे तिव्वपरीणामा, परीसहा ते भवंति उण्हाओ । जे मंदपरीणामा, परीसहा ते भवे सीया ॥ २ ॥ " धिया राजन्त इति धीराः, नापि स्तब्धा—नैवाहंकारपराः, नापि लुब्धा—नैवाहारोपधिपात्रादिषु लोलुपाः, नापि गौरविला—नैव ऋद्धि १ रस २ सात ३ गौरव—त्रिकान्विताः, नापि विकथाशीला—नैव विरुद्धकथाकथनस्वभावाः । क्षान्ताः—क्षमायुक्ताः स्कन्दकाचार्यशिष्यवत्, दान्ताः—दमितेन्द्रिया धन्यानगारवत्, गुप्ता—गुप्तेन्द्रियाः ज्ञाताधर्मकथाङ्गोक्तकूर्म्मवत्, मुक्ताः—निर्लोभितायुक्ता जम्बूस्वामिवज्रस्वाम्यादिवत्, वैराग्यमार्गमालीना—वैराग्यपथमाश्रिता गजसुकुमालातिमुक्तककुमारादिवत्, दशविधसामाचार्युद्यतास्तत्र श्रीउत्तराध्ययनोक्ता दशविधसामाचारी चेयम् " आवस्सिया नामं पढमा १, बिइया होइ निसीहिया २ । आपुच्छणा य तइया ३, चउत्थी पडिपुच्छणा ४ ॥ १ ॥ छंदणा पंचमा होइ ५, इच्छाकारो य

छट्ठमो ६ । सत्तमो मिच्छकारो य ७, तहक्कारो य अट्ठमो ८ ॥ २ ॥ अब्भुट्ठाणं च नवमा ९, दसमा उवसंपया १० । एसा दसंगा साहूणं, सामाचारी पवेदिया ॥ ३ ॥ गमणे आवस्सियं कुज्जा १, ठाणे कुज्जा निसीहियं २ । आपुच्छणा सयंकरणे ३, परकरणे पडिपुच्छणा ४ ॥ ४ ॥ छंदणा दव्वजाएणं ५, इच्छाकारो य सारणे ६ । मिच्छाकारो य णिंदाए ७, तहक्कारो पडिस्सुए ८ ॥ ५ ॥ अब्भुट्ठाणं गुरुपूया ९, अच्छणे उवसंपया १० । एवं दुपंचसंजुत्ता, सामायारी पवेदिया ॥ ६ ॥ " ग० आवश्यकेषु—अप्रमत्ततया अवश्यकर्त्तव्यव्यापारेषु सत्सु भवा आवश्यकी तां गमने कुर्यात् १, स्थाने—उपाश्रये प्रविशन् इति शेषः, नैषेधिकीं कुर्यात्, तत्र निषेधः—प्रमादेभ्य आत्मनो व्यावर्त्तनं तत्र भवा नैषेधिकी २, आप्रच्छना—इदमहं कुर्यां न वा इत्येवंरूपा स्वयमिति—आत्मनः करणं कस्यचित्कार्यस्य स्वयंकरणं तस्मिन् ३, अन्यस्य कार्यविधाने प्रतिप्रच्छना—गुरुनियोगेऽपि पुनः प्रवृत्तिकाले गुरोः प्रच्छना प्रतिप्रच्छना स हि कार्यान्तरमप्यादिशेत् सिद्धं वा तदन्यतः स्यादिति ४ ॥४॥ छं० द्रव्यजातेन—द्रव्यविशेषेण पूर्वगृहीतेन छन्दना—निमन्त्रणा ५, इच्छा—स्वाभिप्रायः तया करणं—तत्कार्यनिर्वर्त्तनं इच्छाकारः सारणे इति—औचित्येनात्मनः परस्य वा कृत्यं प्रति प्रवर्त्तने, तत्रात्मसारणे यथेच्छाकारेण युष्मच्चिकीर्षितं कार्यमिदमहं करोमीति, अन्यसारणे च मम पात्रलेपनादि इच्छाकारेण कुरुतेति ६, मिथ्याकारः—आत्मनो निन्दायाम् वितथाचरणे धिगिदं मिथ्या मया कृतमिति ७, तथाकार—इदमित्थमेवेत्यभ्युपगमः प्रतिश्रुते—प्रतिश्रवणे वाचनादीनां गुरोः पार्श्वात् ८ ॥ ५ ॥ अ० आभिमुख्येनोत्थानं—उद्यमनमभ्युत्थानं तच्च गुरुपूजायां सा च गौरवार्हाणां आचार्यग्लानबालादीनां यथोचिताहारादिसम्पादनम् ९ 'अच्छणे' त्ति आसने प्रक्रमादाचार्यान्तरादिपार्श्वावस्थाने उप—सामीप्येन सम्पादनं—गमनं उपसम्पत्

इयन्तं कालं भवदन्तिके आसितव्यमित्येवंरूपा एवं द्विपञ्चकसंयुक्ता–दश संख्या युक्ता सामाचारी प्रवेदिता–कथिता । १० ॥ ६ ॥ तथा अन्या पंचवस्तुकप्रवचनसारोद्धाराद्युक्ता दशविधसामाचारी यथा–" पडिलेहणा १ पमज्जण २–भिक्खि ३ रिया ४ लोय ५ भुंजणा ६ चेव । पत्तगधुवण ७ वियारा ८, थंडिल ९ आवस्सयाईया १०॥१॥" तत्र प्रत्युपेक्षणा उपधेः १, प्रमार्जना वसतेः २, भिक्षा–विधिना पिंडानयनं ३, इर्या–तत्सूत्रोच्चारणपुरस्सरं कायोत्सर्गः ४, आलोचनं–पिंडादिनिवेदनं ५, भोजनं चैवेति–प्रतीतं ६, पात्रकधावनं–अलाब्वादिप्रक्षालनं ७, विचारो–वहिर्भूमिगमनं ८, स्थंडिलं–परानुपरोधिप्रासुको भूभागः ९, आवश्यकं–प्रतिक्रमणं १०, आदिशब्दात् कालग्रहणादिपरिग्रह इति सङ्क्षेपार्थः विस्तरार्थस्त्वस्याः सामाचार्याः पञ्चवस्तुकगतप्रतिदिनक्रियाभिधद्वितीयद्वारादवसेयः, तथा अवश्यं कर्त्तव्यमावश्यकम्, अथवा गुणानां आ–समन्ताद्वश्यमात्मानं करोतीत्यावश्यकम्, अथवा गुणशून्यमात्मानं आ समन्तात् वासयति गुणैरित्यावासकम्, तत्र उद्युक्ता–उद्यताः, अत्रावश्यकस्वरूपं किञ्चित् श्रीअनुयोगद्वारसूत्रोक्तं यथा–" से किं तं आवस्सयं ? आवस्सयं चउव्विहं पं० तं० नामावस्सयं १ ठवणावस्सयं २ दव्वावस्सयं ३ भावावस्सयं ४ । से किं तं नामावस्सयं ? नामावस्सयं जस्स णं जीवस्स वा अजीवस्स वा जीवाणं वा अजीवाणं वा तदुभयस्स वा तदुभयाणं वा–आवस्सए त्ति नामं कज्जइ से तं नामावस्सयं १ । से किं तं ठवणावस्सयं ? ठवणावस्सयं जण्णं कट्ठकम्मे वा १ चित्तकम्मे वा २ पोत्थकम्मे वा ३ लेप्पकम्मे वा ४ गंथिमे वा ५ वेढिमे वा ६ पूरिमे वा ७ संघाइमे वा ८ अक्खे वा ९ वराडए वा १० एगो वा अणेगो वा सब्भावठवणा वा असब्भावठवणा वा आवस्सए त्ति ठवणा ठविज्जइ से तं ठवणावस्सयं । " काष्ठकर्मादिष्वावश्यकक्रियां कुर्वन्तो यत्स्थापनारूपाः साध्वादयः स्थाप्यन्ते तत्स्थाप-

नावश्यकमिति । 'कट्ठकम्मे' त्ति तत्र क्रियते इति कर्म्म काष्ठे कर्म्म काष्ठकर्म्म काष्ठनिष्कुट्टितरूपकमित्यर्थः १, चित्रकर्म–चित्रलिखितरूपकं २, पोत्तं–वस्त्रमित्यर्थः, तत्र कर्म तत्पल्लवनिष्पन्नं ढीउल्लियारूपमित्यर्थः, अथवा पोत्थं–पुस्तकं ३, लेप्यरूपकं ४, ग्रन्थिमं कौशलातिशयाद् ग्रन्थिसमुदायनिष्पादितरूपकं ५, वे० पुष्पवेष्टनक्रमेण निष्पन्नरूपकं एकं द्व्यादीनि वा वस्त्राणि वेष्टयन् कश्चिद्रूपकमुत्थापयति तद्वेष्टिमं ६, पूरिमं–भरिमं पित्तलादिमयप्रतिमावत् ७, सङ्घातिमं–वस्त्रादिखण्डसङ्घातनिष्पन्नं कञ्चुकवत् ८, अक्षः–चन्दनकः ९, वराटकः–कपर्दकः १०, अत्र वाचनान्तरे अन्यान्यपि दन्तकर्मादिपदानि दृश्यन्ते, एतेषु काष्ठकर्म्मादिष्वावश्यकक्रियां कुर्वन्त एकादिसाध्वादयः सद्भावस्थापनया असद्भावस्थापनया वा स्थाप्यमानाः स्थापनावश्यकं, तत्र काष्ठकर्मादिष्वाकारवती सद्भावस्थापना साध्वाद्याकारस्य तत्र सद्भावात् । अक्षादिषु त्वनाकारवती असद्भावस्थापना साध्वाद्याकारस्य तत्रासद्भावात् । "नाम ठवणाणं को पइविसेसो ? नामं आवकहियं ठवणा इत्तरिया वा होज्जा आवकहिया वा हवेज्जा से तं ठवणावस्सयं २ । से किं तं दव्वावस्सयं? दव्वावस्सयं दुविहं पं० तं० आगमओ य १ नोआगमओ य २ ।" आगमत आगममाश्रित्य १ । "से किं तं आगमओ दव्वावस्सयं ? २ जस्स णं आवस्सए त्ति पयं सिक्खियं ठियं जियं मियं परिजियं नामसमं घोससमं अहीणक्खरं अणच्चक्खरं अव्वाइद्धक्खरं अक्खलियं अमिलियं अवच्चामेलियं पडिपुण्णं पडिपुण्णघोसं कंठोट्ठविप्पमुक्कं गुरुवायणोवगयं, से णं तत्थ वायणाए पुच्छणाए परियट्टणाए धम्मकहाए नो अणुप्पेहाए, कम्हा ? अणुवओगो दव्वमितिकट्टु । णेगमस्स णं एगो अणुवउत्तो आगमओ एगं दव्वावस्सयं, दोन्नि अणुवउत्ता आगमओ दोन्नि दव्वावस्सयाइं, तिन्नि अणुवउत्ता आगमओ तिन्नि दव्वावस्सयाइं, एवं जावइया अणुवउत्ता आगमओ तावइयाइं दव्वावस्सयाइं १ । एव-

मेव आगमओ ववहारस्स वि २। संगहस्स णं एगो वा अणेगो वा अणुवउत्तो वा अणुवउत्ता वा आगमओ दव्वावस्सयं वा दव्वावस्सयाणि वा से एगे दव्वावस्सए ३। उज्जुसुयस्स एगो अणुवउत्तो आगमओ एगं दव्वावस्सयं पुहत्तं नेच्छइ ४। तिण्हं सद्दनयाणं जाणए अणुवउत्ते अवत्थु, कम्हा ? जइ जाणए अणुवउत्ते ण भवइ जइ अणुवउत्ते जाणए ण भवइ, तम्हा नत्थि आगमओ दव्वावस्सयं, से तं आगमओ दव्वावस्सयं ७।" सूत्रादित आरभ्य पठनक्रियया यदन्तं नीतं तत् शिक्षितं, तदेवाविस्मरणतश्चेतसि स्थितत्वात् स्थितं, परावर्त्तनं कुर्वतः परेण वा क्वचित्पृष्टस्य यच्छीघ्रमागच्छति तज्जितं, विज्ञातश्लोकपदवर्णादिसङ्ख्यं मितं, परिसमन्तात् सर्वप्रकारैर्जितं परिजितं–परावर्त्तनं कुर्वतो यत् क्रमेणोत्क्रमेण वा समागच्छति, नाम–अभिधानं तेन समं नामसमं यथा स्वनाम कस्यचिच्छिक्षितं स्थितं जितं मितं परिजितं भवति तथैतदपीत्यर्थः, यथा गुरुणा अभिहिता घोषास्तथा शिष्योऽपि यत्र शिक्षते तद् घोषसमं एकद्व्यादिभिरक्षरैर्हीनं हीनाक्षरं न तथा अहीनाक्षरं, एकादिभिरक्षरैरधिकमत्यक्षरं न तथा अनत्यक्षरं, विपर्यस्तरत्नमालागतरत्नानीव व्याविद्धानि–विपर्यस्तानि अक्षराणि यत्र तद्व्याविद्धाक्षरं न तथाऽव्याविद्धाक्षरं, उपलशकलाद्याकुलभूभागे लाङ्गलमिव स्खलति यत् तत्स्खलितं न तथा अस्खलितं, परावर्त्तमानस्य यत्र पदादिविच्छेदो न प्रतीयते तन्मिलितं न तथा अमिलितं, अस्थानविरतिकं व्यत्याम्रेडितं न तथाऽव्यत्याम्रेडितं, सूत्रतो विन्दुमात्रादिभिरन्यूनमर्थतस्त्वध्याहाराकाङ्क्षादिरहितं प्रतिपूर्णं, उदात्तादिघोषैरविकलं प्रतिपूर्णघोषं, कण्ठौष्ठविप्रमुक्तं बालमूकभाषितवद्यदव्यक्तं न भवति, गुरुप्रदत्तया वाचनया उपगतं प्राप्तं गुरुवाचनोपगतं न तु कर्णाघाटकेन शिक्षितं न वा पुस्तकात्स्वयमेवाधीतमिति। 'से णं' ति यस्यावश्यकशास्त्रं शिक्षितादिगुणोपेतं भवति स जन्तुस्तत्रावश्यक-



शास्त्रे वाचनया प्रच्छनया परावर्त्तनया धर्मकथया वर्त्तमानोऽपि अनुपयुक्तत्वादागमतो द्रव्यावश्यकं 'नो अणु' अनुप्रेक्षया–ग्रन्थार्थानुचिन्तनरूपया तत्र वर्त्तमानो न द्रव्यावश्यकं अनुप्रेक्षाया उपयोगमन्तरेणाभावात्, 'अवत्थु' त्ति न सम्भवति। "से किं तं नोआगमओ दव्वावस्सयं? नोआगमओ दव्वावस्सयं तिविहं पं० तं० जाणगसरीरदव्वावस्सयं १ भवियसरीरदव्वावस्सयं २ जाणगसरीरभवियसरीरवइरित्तं दव्वावस्सयं ३। से किं तं जाणगसरीरदव्वावस्सयं? जाणगशरीरदव्वावस्सयं आवस्सए त्ति पयत्थाहिगारजाणगस्स जं सरीरयं ववगयचुयचावियचत्तदेहं जीवविप्पजढं सिज्जागयं वा संथारगयं वा निसीहियागयं वा सिद्धिसिलायलगयं वा पासित्ता णं कोइ वएज्जा–अहो णं इमेणं सरीरसमुस्सएणं जिणोवइट्ठेणं भावेणं आवस्सए त्ति पयं आघवियं पन्नवियं परूवियं दंसियं निदंसियं उवदंसियं, जहा को दिट्ठंतो? अयं महुकुंभे आसि अयं घयकुंभे आसि, से तं जाणगसरीरदव्वावस्सयं" आवश्यकशास्त्रार्थाधिकारज्ञशरीरं द्रव्यावश्यकं भवति, व्यपगतच्युतच्यावितत्यक्तदेहं, व्यपगतं–अचैतन्यलक्षणं पर्यायान्तरं प्राप्तं, च्युतं–उच्छ्वासनिःश्वासपरिभ्रष्टं, च्यावितं–बलीयसा आयुःक्षयेण परिभ्रंशितं, त्यक्तो देहः–आहारपरिणतिजनितोपचयो येन तत् त्यक्तदेहं, 'जीववि०' जीवरहितं, शय्या–महती सर्वाङ्गप्रमाणा तां गतं शय्यागतं, संस्तारो–लघुकोऽर्द्धतृतीयहस्तमानस्तं गतं, नैषेधिकी–शवपरिस्थापनभूमिस्तत्र गतं, यत्र साधवस्तपःपरिकर्म्मितशरीराः स्वयमेव गत्वा भक्तपरिज्ञाद्यनशनं प्रतिपन्नपूर्वाः प्रतिपद्यन्ते प्रतिपत्स्यन्ते च तत्सिद्धिशिलातलमुच्यते तत्र गतं, अहोशब्दो दैन्यविस्मयामन्त्रणेषु वर्त्तते स चेह त्रिष्वपि घटते, तथा हि–अनित्यं शरीरमिति दैन्ये, आवश्यकं ज्ञातमिति विस्मये, अन्यं पार्श्वस्थितमामन्त्रयमाणस्यामन्त्रणे, अनेन शरीरमेव पुद्गलसङ्घातत्वात् समुच्छ्रयस्तेन जिनोपदिष्टेन–तीर्थकराभिमतेन भावेन–कर्मनि-

ज्जंरणाभिप्रायेण आवश्यकपदाभिधेयं शास्त्रं, आघ० गुरोः सकाशादागृहीतम्, पन्न० सामान्यतो विनेयेभ्यः कथितम्, परू० तेभ्य एव सूत्रार्थकथनतः, 'दंसिअं' प्रत्युपेक्षणादिक्रियादर्शनतः, इयं क्रिया एभिरक्षरैरत्रोपात्ता इत्थं च क्रियते इत्येवं विनेयेभ्यः प्रकटितमिति भावः, निदं० कथञ्चिदगृह्णतः परयाऽनुकम्पया निश्चयेन पुनः पुनः दर्शितं, उवदं० सकलनययुक्तिभिः, अत्रातीतपर्यायानुवृत्त्यभ्युपगमपरनयाऽनुवृत्त्याऽतीतमावश्यककारणत्वपर्यायमपेक्ष्य द्रव्यावश्यकम् शय्यादिगतं तच्छरीरं स्यात्। यद्यत्रार्थे कश्चिद् दृष्टान्तः स्यादिति विकल्प्य पृच्छति–यथा कोऽत्र दृष्टान्तः? इति पृष्टे सत्याह–यथा अयं मधुकुम्भ आसीदित्यादि, एतदुक्तं भवति–यथा मधुनि घृते वा प्रक्षिप्यापनीते तदाधारपर्यायेऽतिक्रान्तेऽप्ययं मधुकुम्भोऽयं च घृतकुम्भ इति व्यपदेशो लोके प्रवर्त्तते, तथाऽऽवश्यककारणत्वपर्यायेऽतिक्रान्तेऽप्यतीतपर्यायानुवृत्त्या द्रव्यावश्यकमिदमुच्यते इति भावः १। "से किं तं भवियसरीरदव्वावस्सयं? २ जे जीवे जोणीजम्मणनिक्खंते इमेणं चेव आत्तएणं सरीरसमुस्सएणं जिणोवइट्ठेणं भावेणं आवस्सए त्ति पयं सेय काले सिक्खिस्सइ न ताव सिक्खइ, जहा को दिट्ठंतो? अयं घयकुंभे भविस्सइ अयं महुकुंभे भविस्सइ, से तं भवियसरीरदव्वावस्सयं २। से किं तं जाणगसरीरभवियसरीरवइरित्तं दव्वावस्सयं? २ तिविहं पं० तं० लोइयं १ कुप्पावयणियं २ लोउत्तरियं ३। से किं तं लोइयं दव्वावस्सयं? २ जे इमे राईसरतलवरमाडंबियकोडंबियइब्भसेट्ठिसेणावइसत्थवाहप्पभिइओ कल्लं पाउप्पभायाए रयणीए सुविमलाए फुल्लुप्पलकमलकोमलुम्मिलियंमि अहपंडुरे पहाए रत्तासोगप्पगासकिंसुयसुयमुहगुंजद्धरागसरिसे कमलागरनलिणिसंडबोहए उट्ठियंमि सूरे सहस्सरस्सिंमि दिणयरे तेयसा जलंते मुहधोयणदंतपक्खालणफणिहसिद्धत्थयहरियालियाअद्दागधूवपुप्फमल्लगंधतंबोलवत्थमाइयाइं दव्वावस्सयाइं करेन्ति, २ तओ पच्छा रायकुलं वा देवकुलं

वा सभं वा पवं वा आरामं वा उज्जाणं वा गच्छंति, से तं लोइयं दव्वावस्सयं (अनुयोगद्वारे)।" फणिहः—कंकतकस्तं मस्तकादौ व्यापारयन्ति, सिद्धार्थाः—सर्षपाः, हरितालिका—दूर्वा एतद् द्वयं मङ्गलार्थं शिरसि प्रक्षिपन्ति, 'अद्दाग' त्ति आदर्शं मुखादि निरीक्षन्ते, शेषं सुगमम् ॥ १ ॥ "से किं तं कुप्पावयणियं दव्वावस्सयं? २ जे इमे चरगचीरियचम्मखंडियभिक्खोण्डपंडुरंगगोयमगोव्वइयगिहिधम्मधम्मचिंतगअविरुद्धविरुद्धवुड्ढसावयपभिइओ पासंडत्था कल्लं पाउप्पभायाए रयणीए जाव तेअसा जलंते इंदस्स वा खंदस्स वा रुद्दस्स वा सिवस्स वा वेसमणस्स वा देवस्स वा नागस्स वा जक्खस्स वा भूतस्स वा मुगुंदस्स वा अज्जाए वा दुग्गाए वा कोट्टकिरियाए वा उवलेवणसम्मज्जणावरिसणधूवपुप्फगंधमल्लाइयाइं दव्वावस्सयाइं करेन्ति, से तं कुप्पावयणियं दव्वावस्सयं (अनुयोगद्वारे)।" धाटिवाहकाः सन्तो ये भिक्षां चरन्ति ते चरकाः अथवा ये भुञ्जानाश्चरन्ति ते चरकाः, रथ्यापतितचीवरपरिधानाः चोरकाः, चर्मपरिधानाश्चर्मखण्डिकाः, ये भिक्षामेव भुञ्जते न तु स्वपरिगृहीतगोदुग्धादिकं ते भिक्षोण्डाः, भस्मोद्धूलितगात्राः पाण्डुराङ्गाः, गौतमो—ह्रस्वो बलीवर्दस्तेन गृहीतपादपतनादिविचित्रशिक्षणेन जनचित्ताक्षेपदक्षेण भिक्षामटन्ति ये ते गौतमाः, गोचर्यानुकारिणो गोव्रतिकास्ते हि वयमपि तिर्यक्षु वसाम इति भावनां भावयन्तो गोभिर्निर्गच्छन्तीभिर्निर्गच्छन्ति स्थिताभिस्तिष्ठन्ति आसीनाभिरुपविशन्ति भुञ्जानाभिस्तदेव तृणपत्रपुष्पफलादि भुञ्जते, गृहस्थधर्म एव श्रेयानित्यभिप्राय तद्यथोक्तचारिणो गृहिधर्माः, याज्ञवल्क्यप्रभृतिऋषिप्रणीतधर्मसंहिताश्चिन्तयन्ति ताभिश्च व्यवहरन्ति ते धर्मचिन्तकाः, देवताक्षितीशमातापितृतिर्यगादीनामविरोधेन विनयकारित्वादविरुद्धाः—वैनयिकाः, पुण्यपापपरलोकाद्यनभ्युपगमपरा अक्रियावादिनो विरुद्धाः, सर्वपाखण्डिभिः सह विरुद्धचारित्वात् वृद्धाः—तापसाः, श्रावकाः—ब्राह्मणाः प्रथमं भरतादिकाले श्रावकाणामेव सतां

पश्चाद्ब्राह्मणत्वभावात्, सिवः–व्यन्तरविशेषः, आर्या–प्रशान्तरूपा, दुर्गा–सैव महिषारूढा, तत्कुट्टनपरा कोट्टक्रिया, अत्रोपचारादिन्द्रादिशब्देन तदायतनमप्युच्यते, उ० छगणादिना सं० दण्डपुञ्छनादिना आवर्षणं गन्धोदकादिना शेषं स्पष्टम् २। "से किं तं लोगुत्तरियं दव्वावस्सयं ? २ जे इमे समणगुणमुक्कजोगी छक्कायणिरणुकंपा हया इव उद्दामा गया इव निरंकुसा घट्ठा मट्ठा तुप्पोट्ठा पंडुरपडपाउरणा जिणाणं अणाणाए सच्छंदं विहरिऊण उभओ कालमावस्सगस्स उवट्ठंति, से तं लोगुत्तरियं दव्वावस्सयं। से तं जाणगसरीरभवियसरीरवइरित्तं दव्वावस्सयं। से तं नोआगमओ दव्वावस्सयं। से तं दव्वावस्सयं।" गजा इव–दुष्टद्विरदा इव निरंकुशा–गुर्वाज्ञाव्यतिक्रमचारिण इत्यर्थः, 'घट्ठ' त्ति येषां जङ्घे श्लक्ष्णीकरणार्थं फेनादिना घृष्टे भवतस्तेऽवयवावयविनोरभेदोपचारात् घृष्टाः, तथा 'मट्ठ' त्ति तैलोदकादिना येषां केशाः शरीरं वा मृष्टं ते तथैव मृष्टाः, 'तुप्पोट्ठ' त्ति तुप्राः–म्रक्षिता मदनेन वा वेष्टिताः शीतरक्षादिनिमित्तमोष्ठा येषां ते तुप्रोष्ठाः, तथा मलपरोपहसहिष्णुतादूरीकृतत्वात् पाण्डुरो–धौतः पटः–प्रावरणं येषां ते तथा, उभयकालं प्रतिक्रमणायोपतिष्ठन्ते ३। "से किं तं भावावस्सयं ? २ दुविहं पं० तं० आगमतो य नोआगमओ य। से किं तं आगमओ भावावस्सयं ? २ जाणए उवउत्ते, से तं आगमओ भावावस्सयं।" 'जाणए उवउत्ते' त्ति ज्ञायक उपयुक्तः आगमतो भावावश्यकं इदमुक्तं भवति–आवश्यकपदार्थज्ञस्तज्जनितसंवेगविशुद्ध्यमानपरिणामस्तत्रैवोपयुक्तः साध्वादिरागमतो भावावश्यकम्। "से किं तं नोआगमओ भावावस्सयं ? २ तिविहं पं० तं० लोइयं १ कुप्पावयणियं २ लोउत्तरियं ३। से किं तं लोइयं भावावस्सयं ? २ पुव्वण्हे भारहं अवरण्हे रामायणं, से तं लोइयं भावावस्सयं १। से किं तं कुप्पावयणियं भावावस्सयं ? २

जे इमे चरगचीरियजावपासंडत्था इज्जंजलिहोमजपोन्दुरुक्कणमोक्कारमाइयाइं भावावस्सयाइं करेन्ति, से तं कुप्पावयणियं भावावस्सयं।" यजनमिज्या-पूजा गायत्र्यादिपाठपूर्वकं विप्राणां सन्ध्यार्चनमित्यर्थः, 'उंदुरुक्कं' देवतादिपुरतो वृषभगर्जितादिकरणमित्यर्थः, नमस्कारो-नमो भगवते दिवसनाथायेत्यादिकः २। "से किं तं लोउत्तरियं भावावस्सयं? २ जण्णं समणो वा समणी वा सावओ वा साविया वा तच्चित्ते तम्मणे तल्लेसे तदज्झवसिए तत्तिव्वज्झवसाणे तदट्ठोवउत्ते तदप्पियकरणे तब्भावणाभाविए अण्णत्थ कत्थइ मणं अकुव्वमाणे उवउत्ते एगमणे अविमणे जिणवयणधम्मरागरत्तमणे उभओ कालं आवस्सयं करेन्ति, से तं लोगुत्तरियं भावावस्सयं। से तं नोआगमओ भावावस्सयं। से तं भावावस्सयं।" 'समणो' त्ति श्राम्यतीति श्रमणः-साधुः १, श्रमणी-साध्वी २, शृणोति साधुसमीपे जिनप्रणीतां सामाचारीमिति श्रावकः-श्रमणोपासकः ३, श्राविका-श्रमणोपासिका, वा शब्दाः समुच्चयार्थाः, तस्मिन्नेवावश्यके चित्तं सामान्योपयोगरूपं यस्येति स तच्चित्तः, तस्मिन्नेव मनोविशेषोपयोगरूपं यस्य स तन्मनाः, तत्रैव लेश्या शुभपरिणामरूपा यस्येति स तल्लेश्यः, तस्मिन्नेवावश्यके अध्यवसितं क्रियासम्पादनविषयमस्येति तदध्यवसितः, तत्तीव्राध्यवसानस्तस्मिन्नेवावश्यके तीव्रं प्रारम्भकालादारभ्य प्रतिक्षणं प्रकर्षयायिप्रयत्नविशेषलक्षणं अध्यवसानं यस्य स तथा, तदर्थोपयुक्तस्तस्यावश्यकस्यार्थस्तदर्थस्तस्मिन्नुपयुक्तस्तदर्थोपयुक्तः, तथा तदर्पितकरणः करणानि-तत्साधकतमानि देहरजोहरणमुखवस्त्रिकादीनि तस्मिन्नावश्यके यथोचितव्यापारनियोगेनार्पितानि-नियुक्तानि येन स तथा सम्यग् यथास्थानन्यस्तोपकरण इत्यर्थः, तद्भावनाभावितस्तस्यावश्यकस्य भावना तदनुष्ठानरूपा तया भावितः, तदेवं यथोक्तप्रकारेण प्रस्तुतव्यतिरेकतोऽन्यत्र कुत्रचिन्मनोऽकुर्वन्नुपलक्षणत्वा-

द्वाचं कायं चान्यत्राकुर्वन्नेकार्थिकानि वा विशेषणान्येतानि प्रस्तुतोपयोगप्रकर्षप्रतिपादनपराणि, अमूनि च लिङ्गपरिणामतः श्रमणी श्राविकयोरपि योज्यानि, तस्मात्तच्चित्तादिविशेषणविशिष्टाः श्रमणादय उभयकालं—उभयसन्ध्यं यदावश्यकं कुर्वन्ति तल्लोकोत्तरिकं भावमाश्रित्यावश्यकं, भावश्चासावावश्यकं चेति वा भावावश्यकं, अत्राऽवश्यकरणादावश्यकत्वं, तदुपयोगपरिणामस्य सद्भावाद् भावत्वं, मुखवस्त्रिकाप्रत्युपेक्षणरजोहरणव्यापारादिक्रियालक्षणदेशस्यानागमत्वान्नोआगमत्वं भावनीयं, 'से तं' इत्यादि निगमनं, तदेवं स्वरूपत उक्तं भावावश्यकमित्यलं प्रसङ्गेन ! । अथ प्रकृतं तत्र संयमः सप्तदशभेदो यथा—" पंचासववेरमणं, पंचिंदियनिग्गहो कसायजओ । नियदंडविरमणाओ, सतरसहा संजमो होइ ॥ १ ॥ " तस्मिन्नुद्युक्ताः—उद्यतास्तथा खरपरुषकर्कशया अनिष्टदुष्टया निष्ठुरगिरा निर्भत्सननिर्द्धाटनादिभिश्च मोऽलाक्षणिकः, ये मुनयो न प्रद्विषन्ति—न प्रद्वेषं यान्ति तत्र खरा—शूचीतुल्या, परुषा—बाणतुल्या, कर्कशा—कुन्ततुल्या, अनिष्टा—काकशब्दवत्, दुष्टा—सकोपव्याघ्रशब्दवत्, निष्ठुरा—प्रस्तरागमनवत्, एकार्थिकान्येव वा प्रायो गिर्विशेषणान्येतानि प्रस्तुतनिष्ठुरत्वार्थप्रकर्षप्रतिपादनपराणि, अथवाऽन्योप्यर्थो यथा सम्प्रदायमवगन्तव्यः। निर्भर्त्सनं—अङ्गुल्यादिना तर्जनं, निर्द्धाटनं—वसतिगणादिभ्यो निष्काशनं, आदिशब्दादन्येऽपीदृशाः प्रकारा ग्राह्याः, तथा ये च मुनयो नाकीर्त्तिजनकाः चशब्दान्नावर्णजनकाः नाशब्दजनकाः नाश्लाघाजनकाः, तत्र सर्वदिग्व्याप्यसाधुवादोऽकीर्त्तिः, एकदिग्व्याप्यसाधुवादोऽवर्णः, अर्द्धदिग्व्याप्यसाधुवादोऽशब्दः, तत्स्थान एवासाधुवादोऽश्लाघेति, तथा नायशोजनकास्तत्रायशो—निन्दनीयतादि, तथा नाकार्यकारिणः—नैवासदनुष्ठानकर्त्तारः, तथा न प्रवचनोड्डाहकराः—नैव प्रवचनमालिन्यकरा आवश्यकोक्तकाष्ठसाधुवत्, कण्ठगतप्राणशेषेऽपि कण्ठे गतः कण्ठगतः कण्ठग-

तश्चासौ प्राणशेषश्च कण्ठगतप्राणशेषः, तस्मिन्नपि मरणान्तकष्टेऽपीत्यर्थः, ते बहुतरनिर्जराभाजो दोषाभाववन्तश्च भवन्तीति शेषः। चत्वार्यपि गाथाछन्दांसि ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ अथ शिष्यस्वरूपप्रतिपादनद्वारेण गच्छस्वरूपमेव प्रतिपादयन्नाह—

**गुरुणा कज्जमकज्जे खरकक्कसदुट्ठनिट्ठुरगिराए । भणिए तहत्ति सीसा भणंति तं गोयमा गच्छं ॥ ५६ ॥**

व्याख्या—गुरुणा—आचार्येण कार्ये च अकार्ये च कार्याकार्ये तस्मिन्, मकारोऽलाक्षणिकः, खरकर्कशदुष्टनिष्ठुरगिरा-अत्यर्थनिष्ठुरतरवाण्या भणिते—प्रवृत्तिनिवृत्त्यर्थं कथिते सति 'तह त्ति' तथेति—यद्यथा यूयं वदथ तत्तथैवेति यत्र गच्छे शिष्याः-विनेयाः भणन्ति—प्रतिपद्यन्ते इत्यर्थः, तं गच्छं हे गौतम! घण्टालालान्यायेन भणन्तीति क्रियाया अत्रापि संबन्धाद् भणन्ति-प्रतिपादयन्ति तीर्थंकरगणधरादय इति शेषः। गाथाछन्दः ॥ ५६ ॥ अथ गच्छस्वरूपाधिकारादेवेदमाह—

**दूरुज्झियपत्ताइसुममत्तए निप्पिहे सरीरे वि । जायमजायाहारे बायालीसेसणाकुसले ॥ ५७ ॥**

व्याख्या—'दूरुज्झियपत्ताइसुममत्तए' त्ति दूरत उज्झितं—त्यक्तं पात्रादिषु ममत्वं येन स दूरोज्झितपात्रादिममत्वः सूत्रे त्वार्षत्वाद्विभक्तेरलोपः अथवा दूरत उज्झितं पात्रादिषु सु—अतिशयेन ममत्वं येन स दूरोज्झितपात्रादिसुममत्वः तथा निःस्पृहः—ईहारहितः मेघकुमारादिवत्, क्व शरीरेऽपि—स्ववपुष्यपि किं पुनरन्यत्र तथा 'जायमजायाहारो' त्ति मकारस्यालाक्षणिकत्वात्, जातः—संपन्नोऽजातश्च—असम्पन्न आहारो यस्यासौ जाताजाताहारः कदाचित्कृताहारः कदाचिदकृताहार इत्यर्थः। तत्र शुद्धलब्धे जाताहारः, अलब्धेऽशुद्धे वा लब्धेऽजाताहारः, उक्तञ्च—" अलब्धे तपसो वृद्धिर्लब्धे देहस्य धारणे " ति

अथवा ‘ जायमजायाहारे ’ त्ति यात्रामात्राहारः यात्रायै मात्रयाहारो यस्यासौ यात्रामात्राहारः आर्षत्वाचेत्थं सिद्धिः, तत्र यात्रा–संयमस्वाध्यायादिरूपा मात्रा तु–तदर्थमेव पुरुषस्त्रीषण्ढानां क्रमेण द्वात्रिंशदष्टाविंशतिचतुर्विंशतिकवलप्रमाणाहारमध्यादेक-द्वित्र्यादिकवलेनाहारग्रहणमिति । कवलप्रमाणं कुक्कुटचण्डकमानेन तथाहि–इह कुक्कुटी द्विधा, द्रव्यभावभेदेन, द्रव्यकुक्कुटी द्विधा, उदरकुक्कुटी १ गलकुक्कुटी (च) २, तत्र साधोरुदरं यावन्मात्रेणाहारेण न न्यूनं नाप्यधिकं स आहारः उदरकुक्कुटी, उदरपूरक आहारः कुक्कुटीव उदरकुक्कुटीति मध्यमपदलोपिसमासाश्रयणात् तस्य द्वात्रिंशत्तमो भागोऽण्डकं तत्प्रमाणं कवलस्य १, गले कुक्कुटीव गलकुक्कुटी तस्या अन्तरालमण्डकं अयं भावः अविकृताऽऽस्यस्य पुंसो गलान्तराले यः कवलोऽविलग्नः प्रविशति, तत्प्रमाणं कवलस्य २ अथवा शरीरमेव कुक्कुटी तन्मुखमण्डकं तत्राक्षिकपोलभ्रुवां विकृतिमनापाद्य यः कवलो मुखे प्रविशति, तत्प्रमाणं कवलस्य अथवा कुक्कुटी पक्षिणी तस्या अण्डकं तत्प्रमाणं कवलस्य १। भावकुक्कुटी तु येनाहारेण भुक्तेन न न्यूनं नाप्यत्याघ्रातं स्यादुदर धृतिं च समुद्वहति ज्ञानदर्शनचारित्राणां च वृद्धिरुपजायते, तावत्प्रमाण आहारो भावकुक्कुटी, अत्र भावस्य प्राधान्यविवक्षणादेप प्राग्द्रव्यकुक्कुटयप्युक्तः इह भावकुक्कुटी उक्तः, तस्य द्वात्रिंशत्तमो भागोऽण्डकं तत्प्रमाणं कवलस्येति २ पिण्डनिर्युक्तिवृत्तिप्रान्ते तथा भगवती सप्तमशतप्रथमोद्देशकवृत्तावपि यथा ‘कुक्कुडिअंडगपमाणमेत्ताणं’ ति कुक्कुटयण्डकस्य यत्प्रमाणं मानं तन्मात्रापरिमाणं मानं येषां ते तथा अथवा कुटीव–कुटीरकमिव जीवस्याश्रयत्वात् कुटी–शरीरं कुत्सिता अशुचिप्रायत्वात् कुटी कुक्कुटी तस्या अण्डकमिवाण्डकमुदरपूरकत्वादाहारः कुक्कुटयण्डकं तस्य प्रमाणतो मात्रा द्वात्रिंशद्रूपा येषां ते कुक्कुटयण्डकप्रमाणमात्राः अतस्तेषां अयमभिप्रायो–यावान् यस्य पुरुषस्याहारस्तस्य द्वात्रिंशत्तमो भागस्तत्पुरुषा-

पेक्षया कवल इदमेव कवलमानमाश्रित्य प्रसिद्धकवलचतुःषष्ठ्यादिमानाहारस्यापि पुरुषस्य द्वात्रिंशता कवलैः प्रमाणप्राप्ततोपपन्ना स्यात् नहि स्वभोजनस्यार्द्धं भुक्तवतः प्रमाणप्राप्तत्वमुपपद्यते, प्रथमव्याख्यानं तु प्रायिकपक्षापेक्षयाऽवगन्तव्यमिति । अथवा 'जायमजायाहारे' त्ति मकारस्यालाक्षणिकत्वात् जाताजाताधारः आवश्यकपारिष्ठापनिकानिर्युक्त्युक्तजाताजाताख्यपारिष्ठापनिकाविधिज्ञ इत्यर्थः । तत्र जाताजातस्वरूपं यथा "आहारम्मि उ जा सा, सा दुविहा होइ आणुपुव्वीए । जाया चेव सुविहिआ, नायव्वा तह अजाया य ॥ १ ॥ आहाकम्मे अ तहा, लोहविसे आभिओगिए गहिए । एएण होइ जाया, वोच्छं से विहीइ वोसिरणं ॥ २ ॥" आधाकर्मणि च तथा लोभाद् गृहीते विषकृते गृहीते मक्षिकादिविपत्त्या ज्ञाते आभियोगिके वशीकरणादिमन्त्राभिसंस्कृते चेतोऽन्यथात्वादिलिङ्गतो ज्ञाते सति एतेनाधाकर्मादिदोषेण जाता स्यात् 'से' तस्या विधिना व्युत्सर्जनं वक्ष्ये २ । 'एगंतमणावाए, अचित्ते थंडिले गुरुवइट्ठे । छारेण अक्कमित्ता, तिट्ठाणं सावणं कुज्जा ॥३॥' त्रीन् वारान् श्रावणं कुर्यात् अमुकदोषादिदं त्यज्यते इति त्रिरुच्चरेत् ३ । 'आयरिए अ गिलाणे, पाहुणए दुल्लहे सहसलाभे । एसा उ खलु अज्जाया, वोच्छं से विहीइ वोसिरणं ॥४॥' आचार्याद्यर्थे तथा दुर्लभे विशिष्टे द्रव्ये सति सहसा च तल्लाभे जाते सति इत्यादिहेतोरधिकग्रहणं स्यात्, एषाऽजातापारिष्ठापनिका ४ । 'एगंतमणावाए, अचित्ते थंडिले गुरुवइट्ठे । आलोए तिण्णि पुंजा, तिट्ठाणं सावणं कुज्जा ॥५॥' आलोके-प्रकाशे शुद्धाहारस्य त्रीन् पुञ्जान् कुर्यात्, आधाकर्मादिमूलगुणदुष्टे एकं उत्तरगुणदुष्टे तु द्वौ इति विशेषः, पूर्ववत्त्रिः श्रावणं च कुर्यात्, एवमुपकरणविषयेऽपि जाताजाते पारिष्ठापनिके ज्ञेये इति । तथा द्विचत्वारिंशदेषणाकुशलः—द्विचत्वारिंशदेषणादोषवर्ज्जनचतुर उपलक्षणत्वात् पञ्चग्रासैषणादोषवर्ज्जनचतुरश्चेत्यर्थः । एवंविधो गच्छवासी मुनिः स्यादिति शेषः, तत्र एषणा

चतुर्द्धा, कस्यापि एषणेति नामेति नामैषणा १, एषणावतः साध्वादेरयमेषणेति स्थापनेति स्थापनैषणा २, द्रव्यैषणा सचित्ताचित्तमिश्रभेदात् त्रिधा ३, भावैषणाऽपि गवेषणैषणाग्रहणैषणाग्रासैषणाभेदात् त्रिधा, तत्र गवेषणैषणायां प्रथमे द्वात्रिंशद्दोषाः ग्रहणैषणायां शङ्कितादिदशदोषा ज्ञेयाः, तत्र दायकदोषस्य किञ्चिदुच्यते, तत्रोत्सर्गेण बालादिचत्वारिंशद्दायकानां हस्ताद् ग्रहणं न कल्पते, अपवादे तु बालादिपञ्चविंशतिसंख्यानां हस्ताद् ग्रहणं भजनीयम्, अन्येषां पञ्चदशानां हस्तादग्रहणमिति। भजना यथा—यदि बालो दक्षः स्यात् तदा तेन मातुः परोक्षे भिक्षामात्रे दीयमाने यदि वा पार्श्ववर्त्तिना मात्रादिना सन्दिष्टे सति तेन दीयमानेऽविचारितमेव ग्राह्यम्, अतिप्रभूते तु बालेन दीयमाने किमद्य त्वं प्रभूतं ददासीति विचारणे सति यदि पार्श्ववर्त्तिमात्रादि सानुकूलता स्यात् तदा ग्राह्यं नान्यथा १, स्थविरो यदि प्रभुर्भवति यदि वा कम्पमानोऽन्येन धृतः स्यात् स्वरूपेण वा दृढशरीरस्तदा ततः कल्पते २, यो मनाग् मत्तः स च यदि श्राद्धोऽविह्वलश्च ततः तस्मात् कल्पते यदि सागारिको न विद्यते नान्यथेति ३, उन्मत्तो दृप्तादिर्यदि शुचिर्भद्रकश्च तदा तद्धस्तात्कल्पते नान्यथा ४, वेपितोऽपि यदि दृढहस्तस्तदा तस्मात्कल्पते ५, ज्वरितादपि ग्राह्यं ज्वरे शिवे सति ६, अन्धोऽपि यदि देयमन्येन धृतं ददाति स्वयं श्राद्धश्च यदि वा स एवान्धोऽन्येन विधृतः सन् ददाति तर्हि ततो ग्राह्यम् ७, मण्डलप्रसूतिकुष्ठी सागारिकाभावे चेद्ददाति तर्हि ततः कल्पते न शेषकुष्ठिनः ८, पादुकारूढोऽपि यदि भवत्यचलस्तदा कारणे सति कल्पते ९, पादयोर्बद्धो यदि इतश्चेतश्च पीडामन्तरेण गन्तुं शक्तस्ततो बद्धादपि तस्मात् कल्पते, यस्तु इतश्चेतश्च गन्तुमशक्तः स चेदुपविष्टः सन् ददाति न च कोऽपि तत्र सागारिको विद्यते तदा ततोऽपि कल्पते, हस्तबद्धस्तु भिक्षां दातुमपि न शक्नोति, तत्र प्रतिषेध एव न भजना १०, छिन्नकरोऽपि

यदि सागारिकाभावे ददाति तर्हि कल्पते ११, छिन्नपादो यद्युपविष्टः सन् सागारिकासम्पाते प्रयच्छति ततस्ततोऽपि कल्पते १२, नपुंसको यदि लिङ्गाद्यनासेवकस्तर्हि ततः कल्पते १३, आपन्नसत्त्वापि यदि नवममासगर्भा तदा स्थविरकल्पिकैः परिहार्या, तद्विपरीतायाः कराद् ग्राह्यम् १४, या बालवत्सा स्तन्यमात्रोपजीविशिशुका सा त्याज्या, यस्यास्तु बाल आहारेऽपि लगति तस्या हस्तात्कल्पते जिनकल्पिकास्तु मूलत एवापन्नसत्त्वां बालवत्सां च सर्वथा परिहरन्ति १५, भुञ्जाना अनुच्छिष्टा सती यावद्यापि न केवलं मुखे प्रक्षिपति तावत्तद्धस्तात् कल्पते १६, भृज्यमानाऽपि यत्सचित्तं गोधूमादिकडिल्लके क्षिप्तं तत् भृष्ट्वोत्तारितं अन्यच्चाद्यापि हस्ते न गृण्हाति अत्रान्तरे यदि साधुरायातः सा चेत् ददाति तर्हि कल्पते १७, दलयन्ती सचित्तमुद्गादिना दल्यमानेन सह घरट्टं मुक्तवती अत्रान्तरे साध्वावागते सा यद्युत्तिष्ठति अचेतनं वा भृष्टमुद्गादिकं दलयति तर्हि तद्धस्तात्कल्पते १८, कण्डयन्त्याः कण्डनायोत्पाटितं मुशलं न च तस्मिन् मुशलके क्वापि काञ्च्यां बीजं लग्नं स्यादत्रान्तरे साधावागते यदि साऽनपाये प्रदेशे मुशलं स्थापयित्वा भिक्षां ददाति तर्हि कल्पते १९, पिंषती यदि पेषणपरिसमाप्तौ प्रासुकं वा पिंषती ददाति तदा कल्पते २०, असंसक्तं दध्यादिमन्थत्याः कल्पते २१, कर्त्तयन्त्यपि यदि सूत्रं तन्तुश्वेतताविधायिता शंखचूर्णेन हस्तौ न धवलयति धवलितौ वा शौचनाग्रहशीलतया न प्रक्षालयति तदा कल्पते २२, लोढयन्ती २३, विकीर्णयन्ती २४, पिंजयन्ती च कर्प्पासं २५, यदि तदस्थिकान् न संघट्टयति देयद्रव्यखरंण्टितकरधावने जलं च न विराधयति तदा कल्पत इति, शेषेषु १५ षड्कायव्यग्रहस्तादिष्वपवादाभावादग्रहणमिति २। ग्रासैषणायां संयोजनादिपञ्च दोषाः तत्र संयोजनाप्रमाणयोः किञ्चिदुच्यते विशिष्टस्वादनिमित्तं दुग्धदध्योदनादीनां विशिष्टद्रव्याणां मीलनं संयोजना। सा च द्विधा

वसतेरन्तर्बहिर्भेदात्, अन्तः संयोजनापात्रकवलवदनभेदात् त्रिधा, तत्र पात्रे मण्डकगुडघृतादिरसगृद्धया संयोज्य भक्षयति एषा पात्रसंयोजना, एतान्येव कवले हस्तस्थिते संयोजयति एषा कवलसंयोजना, वदने कवलं प्रक्षिप्य ततः शालनकं प्रक्षिपति, यद्वा मण्डकादिकं पूर्वं प्रक्षिप्य पश्चाद् गुडादिकं प्रक्षिपति एषा वदनसंयोजना, किञ्च उपकरणं गवेषयत एव साधोश्चोलपट्टकाद्यासौ विभूषाप्रत्ययमन्तरकल्पं याचित्वा परिभुञ्जानस्य बहिरुपकरणसंयोजना वसतौ चागत्य तथैव परिभुञ्जानस्य अन्तरुपकरणसंयोजनेत्याद्यपि द्रष्टव्यमिति । कारणे तु संयोजनापि भवति । यदाह—"रसहेउं संजोगो, पडिसिद्धो कप्पए गिलाणट्ठा । जस्स व अभत्तछंदो, सुहोचिओऽभाविओ जो य ॥ १ ॥" रसहेतोः प्रतिषिद्धसंयोगो ग्लानार्थं तु कल्पते यद्वा यस्य अभक्तछन्दो—भक्तारुचिर्यश्च सुखोचितो राजपुत्रादिर्यश्चाद्याप्यभावितो—ऽपरिणतचारित्रः शैक्षस्तन्निमित्तं संयोगोऽपि कल्पते इति, प्रमाणद्वारे सामान्येन सर्वमुदरं षड्भिर्भागैर्विभज्यते तत्र भागत्रयमशनतक्रशाकादिना पूर्यते द्वौ भागौ पानीयेन षष्ठं तु भागं वायुप्रविचारणार्थमूनं कुर्यात्, विशेषेण तु कालापेक्षया अतिशीतकाले द्रवस्यैको भागः १ चत्वारो भक्तस्य ४ एकोऽनिलाय १, मध्यमे तु शीतकाले द्वौ भागौ पानीयस्य २ त्रयस्तु भागा भक्तस्य ३ एकोऽनिलाय १, अत्युष्णकाले त्रयो भागा द्रवस्य द्वौ भक्तस्य एकोऽनिलाय, मध्यमोष्णकाले द्वौ भागौ पानीयस्य त्रयो भक्तस्य एकोऽनिलायेति । गाथाछन्दः ॥ ५७ ॥ पूर्वगाथायां 'बायालीसेसणाकुसले'त्ति अनेन मुनिर्निर्दोषमाहारं भुञ्जीतेति परमार्थत उक्तम्, अथ तमपि न रूपाद्यर्थमश्नीयादिति दर्शयन्नाह—

तं पि न रूवरसत्थं, न य वण्णत्थं न चेव दप्पत्थं । संजमभरवहणत्थं, अक्खोवंगं व वहणत्थं ॥५८॥

व्याख्या—तमपि निर्दोषाहारमपि न रूपरसार्थं रूपं च—लावण्यं रसश्च—भोजनास्वादस्तदर्थं, न च—नैव वर्णार्थं—शरीरश्लाघार्थं गौरताद्यर्थं वा, न चैव दर्पार्थं—अनङ्गवृद्ध्यर्थं, किन्तु संयमभरवहनार्थं—चारित्रभारनिर्वहणार्थं शरीरस्याधारमात्रभूतं साधुर्दद्यादिति शेषः। अत्र दृष्टान्तमाह—'अक्खोवंगं व वहणत्थं' ति अक्षोपाङ्गमिव वहनार्थं अयमभिप्रायः—यथा अक्षस्य—धुर उपाङ्गो—ऽभ्यञ्जनं नवनीतादि तच्च तावन्मात्रमेव दीयते यावता शकटमनायासेन भारमुद्वहति, न चास्तीति कृत्वा प्रकामं नवनीतादेरभ्यञ्जनस्य दानं निष्फलत्वात्, एवं साधुनापि यावता दशविधचक्रवालसामाचारीस्वाध्यायभिक्षाचङ्क्रमणादिक्रियासमर्थं शरीरादि भवति तावन्मात्रमेवाभ्यवहार्यं, नातिरिक्तं रूपाद्यर्थमिति। गाथाछन्दः॥ ५८॥ अथेह षड्भिः कारणैः साधोराहारमाहारयति—षड्भिरेव च कारणैराहारं परित्यजति तत्र यैः षड्भिः कारणैराहारमाहारयति तानि दर्शयति—

**वेअण १ वेयावच्चे २, इरिअट्ठाए य ३ संजमट्ठाए ४। तह पाणवत्तिआए ५, छट्ठं पुण धम्मचिंताए ॥५९॥**

व्याख्या—पदैकदेशे पदसमुदायोपचारात् 'वेअण'त्ति क्षुद्वेदनोपशमनाय भुञ्जीत, यतो नास्ति क्षुत्सदृशी वेदना। उक्तं च—" पंथसमा नत्थि जरा, दारिद्दसमो अ परिभवो नत्थि। मरणसमं नत्थि भयं, छुहासमा वेदणा नत्थि ॥ १ ॥ तं नत्थि जं न वाहइ, तिलतुसमित्तंपि एत्थ कायस्स। सन्निज्झं सव्वदुहाइ, दिंति आहाररहिअस्स ॥ २ ॥ " १, तथा बुभुक्षितः सन् वैयावृत्त्यं कर्तुं न शक्नोति अत आचार्यादीनां वैयावृत्त्यकरणाय २, तथा ईर्यार्थं—ईर्यासमित्यर्थं ३, तथा संयमः—प्रत्युपेक्षणाप्रमार्जनादिलक्षणः साधुव्यापारः तत्पालनार्थं, बुभुक्षित एनं कर्तुं न शक्नोतीति ४, तथा प्राणा—जीवितं प्राणो वा—स्थानं तत्प्रत्ययार्थं—तत्सन्धारणार्थं यतो बुभुक्षितस्य तद् द्वयमपि परिहीयते ५, तथा षष्ठं पुनः कारणं धर्मचि-

न्तार्थं–सूत्रार्थानुचिन्तनादिलक्षणशुभचित्तप्रणिधानार्थं एतदपि बुभुक्षितः कर्तुं न शक्नोतीति ६, अत्र–भुञ्जीतेति क्रियाशेषः सर्वत्र सम्बन्धनीयः। अत्र प्रसङ्गतोऽभोजनकारणान्यपि पद्युच्यन्ते–"आयंके १ उवसग्गे, तितिक्खया २ बंभचेरगुत्तीसु ३। पाणिदया ४ तवहेउं ५, सरीरवोच्छेअणट्ठाए ६ ॥ १ ॥" आतङ्के–ज्वरादावुत्पन्ने सति न भुञ्जीत १, तथा उपसर्गे–राजस्वजनादिकृते देवमनुष्यतिर्यक्कृते वा सञ्जाते सति तितिक्षार्थं–उपसर्गसहनार्थं २, तथा ब्रह्मचर्यगुप्तिष्विति अत्र षष्ठ्यर्थे सप्तमी ततोऽयमर्थः–ब्रह्मचर्यगुप्तीनां परिपालनाय ३, तथा प्राणिदयार्थं–वृष्टिमहिकासूक्ष्ममण्डूकादिरक्षार्थं ४, तथा तपोहेतोः–तपःकरणनिमित्तं ५, तथा चरमकाले शरीरव्यवच्छेदार्थं ६, सर्वत्र न भुञ्जीतेति क्रियासम्बन्ध इति। गाथाछन्दः ॥ ५९ ॥ अथ पुनरपि गच्छस्वरूपमेवाह–

जत्थ य जिट्ठकणिट्ठो, जाणिज्जइ जिट्ठवयणबहुमाणो,
दिवसेण वि जो जिट्ठो, न य हीलिज्जइ स गोअमा गच्छो ॥ ६० ॥

व्याख्या–यत्र च गणे ज्येष्ठः कनिष्ठश्च ज्ञायते, तत्र ज्येष्ठः–पर्यायेण वृद्धः कनिष्ठः पर्यायेण लघुः, तथा यत्र ज्येष्ठस्य वचनं–आदेशो ज्येष्ठवचनं तस्य बहुमानः–सन्मानः ज्ञायते, 'जिट्ठविणयबहुमाणो'त्ति पाठे तु ज्येष्ठस्य विनयबहुमानौ ज्ञायेते, तथा यत्र च दिवसेनापि यो ज्येष्ठः स न हील्यते, चकाराद्यत्र पर्यायेण लघुरपि गुणवृद्धो न हील्यते सिंहगिरिशिष्यैर्वज्रशिशुरिव, हे गौतम! स गच्छो ज्ञेय इति। गीतिच्छन्दः ॥ ६० ॥ अथार्याव्यतिकरेण गच्छस्वरूपमेव गाथादशकेनाह–

जत्थ य अज्जाकप्पो, पाणच्चाएवि रोरदुब्भिक्खे। न य परिभुज्जइ सहसा, गोयम गच्छं तयं भणियं ॥६१॥

व्याख्या—यत्र च गणे आर्याणामेव–साध्वीनामेव कल्पते इत्यार्याकल्पः–साध्व्यानीताहार इत्यर्थः, प्राणत्यागेऽपि–मरणागमनेऽपि रोरदुर्भिक्षे–दारुणदुष्काले न च–नैव परिभुज्यते साधुभिरिति शेषः, कथं सहसा–ऽविमृश्य संयमस्य विराधनाऽविराधने यतः–सर्वत्र संयममेव रक्षेत्, संयमे च तिष्ठति आत्मानमेव रक्षेत्, आत्मानं च रक्षन् हिंसादिदोषाद् मुच्यते, मुक्तस्य च प्रायश्चित्तप्रतिपत्त्या विशुद्धिः स्यात्, न च हिंसादिदोषप्रतिसेवनकालेऽप्यविरतिः तस्याऽऽशयविशुद्धतया विशुद्धपरिणामत्वात्। उक्तं चौघनिर्युक्तौ ८१ गाथायां–"सव्वत्थ संजमं संजमा उ अप्पाणमेव रक्खेज्जा। मुच्चइ अइवायाओ, पुणो वि सोही न याविरई ॥ १ ॥" ततो विमृश्य परिभुज्यतेऽपि अर्णिकापुत्राचार्यैरिव, यदाह–"अन्नियपुत्तायरिओ, भत्तं पाणं च पुप्फचूलाए। उवणीयं भुंजंतो, तेणेव भवेण अंतगडो ॥ १॥" हे गौतम ! स गच्छो भणितः, सूत्रे नपुंसकत्वं प्राकृतत्वादिति। अर्णिकापुत्राचार्यसम्बन्धश्चायम्–अत्थि इह भरहवासे, बहुभद्दा पुप्फभद्दिया नयरी। जसु परिसरंमि तरुणिव, वहइ सुपयोहरा गंगा ॥ १ ॥ तत्थासि सकुलकेऊ, रिउकुलकेऊ अ पुप्फकेउनिवो। जस्स करेऽसी रेहइ, विजयसिरीवेणिदंडु व ॥ २ ॥ सुद्धमई हंसगई, विणयवई नयवई सुसीलवई। देवगुरुविहिअपणई, तस्स पिआ आसि पुप्फवई ॥ ३ ॥ विसयसुहमणुहवंताण, ताण मिहुणं मणोहरं जायं। तणओ अ पुप्फचूलो, तणया पुण पुप्फचूला य ॥ ४ ॥ समगं रममाणाणं, समरूवाणं पवट्टमाणाणं। निरुवमपिम्मपराणं, ताणं वच्चंति दिअहाइं ॥५॥ कइया वि कामलीला-वणम्मि तारुण्णयंमि वट्टंता। ते नियवि निवो निअमाणसंमि इअ चिंतिउं लग्गो ॥ ६ ॥ जइ एयाण परुप्पर, पिम्मपराणं समाणरूवाणं। कहवि हु कीरइ विरहो, ता णूणमंगलं हुज्जा ॥ ७ ॥ तो एयाणं करगह–मंगलकरणम्मि निम्मिए संते।

विहिणो अपुव्वविन्नाण, पयडणं सहलयं होइ ॥ ८ ॥ अहमवि विरहं एयाण-मक्खमो पिक्खिउं मणागंवि । तणयतणयाण पाणि-ग्गहणमओ कारवेमि लहुं ॥ ९ ॥ तो मंतिपमुहनायर-लोए सद्दाविउं निवो भणइ । अंतेउरंमि रयणं, उप्पज्जइ तस्स को सामी ॥ १० ॥ ते वि हु भणंति सामिय ! सयलम्मि वि मंडलम्मि जं रयणं । उप्पज्जइ तस्स पहू, निवो किमंतेउरगयस्स ॥ ११ ॥ नियदेसे जं रयणं, जायइ जणउ व्व तं जहिच्छाए । विणिवेसंतो सययं, वारिज्जइ केण धरणिधरो ॥ १२ ॥ इय तव्वयणछलेणं, छलप्पहाणो नरेसरो हिट्ठो । लोयसमक्खं नियदारगाण कारेइ करगहणं ॥ १३ ॥ पुप्फवई तब्भज्जा, सावयधम्मुज्जुया अकज्जाओ । वारंती वि न गणिया, भूवइणा कुग्गहग्गहिणा ॥ १४ ॥ सिरिपुप्फचूलकुमरो, विसयसुहं तीइ पुप्फचूलाए । सद्धिं अणुहवमाणो, गमेइ कालं निमेसु व्व ॥ १५ ॥ कमसो अकित्तिकद्दम-मलिणे निवपुप्फ-केउयम्मि मए । सिरिपुप्फचूलराया, पालइ नीईइ महिवलयं ॥ १६ ॥ तइया अकज्जकरणा-वसरे पइणाऽवमाणिया संती । पुप्फवई निव्वेया, पडिवन्ना जिणवरचरित्तं ॥ १७ ॥ निरवज्जं पव्वज्जं, पालिय खालियपमायमलपडला । सा मरिऊणं सुहझाण-संगया दिवि सुरो जाओ ॥ १८ ॥ ओहिं जाव पउंजइ, सो तियसो ताव सोयरेण समं । पिक्खे वि पुप्फचूलं, भोगपरं चिंतिउं लग्गो ॥ १९ ॥ मम आसी पुव्वभवे, पाणाउ वि वल्लहा सुया एसा । ता तह करेमि अहुणा, जेण न नरए फुडं पडइ ॥ २० ॥ इय चिंतिय पडिबोहण-विहियमई पुप्फवइवरो अमरो । निसिसुत्ताए तीए, नरयदुहे दंसए एवं ॥ २१ ॥ साहाविय तिसु उन्हा, मीस चउत्थी इसीय उवरि तिगे । परमाहम्मिय अन्नु-न्नुदीरणा वेयणा तत्थ ॥ २२ ॥ अइसंकडमुहघडियालयाउ असुरेहिं कडुरडंतसरा । कड्ढिज्जंति हु केई, जंताओ लोहतंतु व्व

॥ २३ ॥ ताडिज्जंति य केई, सिलायले वज्जकंटयाइन्ने । असुरेहिं गहियचलणे, खालणपारद्धवसणं व ॥ २४ ॥ आलिंगा-
पीडिज्जंति य केई, उच्छुंपि व लोहजंतमज्झंमि । करवत्तेहिं केई, दारुव्व वियारियज्जंति ॥ २५ ॥ आलिंगा-
विज्जंती, केई लोहित्थिमग्गितवियतणुं । खाविज्जंति समंसं, छिंदेउं के वि छुरियाहिं ॥ २६ ॥ तिण्हातरला केई,
पाइज्जंतो य उण्हतउयाइं । के वि हु जलिरंगारे, खाविज्जंता छुहकिलंता ॥२७॥ राइयपमाणखंडे, काऊणं के वि कडुरडंता
वि । कुंभीपाए पावा, पच्चंति य सागपत्तं व ॥ २८ ॥ अच्चुण्हतावियासुं, केवि तलिज्जंति पप्पडु व फुडं । चूरिज्जंति य
केई, घडु व मुग्गरपहारेहिं ॥ २९ ॥ केवि तवियदविहुयतंब–तउयसमनीरपूरभरियाए । वेयरणीएदद्ध त्ति, पुक्करंता खिवि-
ज्जंति ॥ ३० ॥ केई ताए पुलिणे, वसहु व महाभरं वहिज्जंता । पलयाणलपज्जलिए, भट्ठे चणय व फुट्टंति ॥ ३१ ॥ छाया-
त्थिणो य केई, असिवणपत्ता समीरखित्तेहिं । सव्वंगं छिज्जंती, पहरणरूवेहि पत्तेहिं ॥ ३२ ॥ अंबे १ अंबरिसी चेव २,
सामे अ ३ सबले त्ति य ४ । रुद्दो ५ वरुद्द ६ काले य ७, महाकाले त्ति यावरे ८ ॥ ३३॥ असि ९ पत्तधणू १० कुंभे ११,
वालू १२ वेयरणीइ य १३ । खरस्सरे १४ महाघोसे १५, एए पंनरसाहिया ॥ ३४ ॥ धाडंति पहाडंति य, हणंति विंधंति
तह निसुंभंति । मुंचंति अंबरतले, अंबा खलु तत्थ नेरइए १ ॥३५॥ ओहयए य तहियं, निस्सन्ने कप्पणीहि कप्पंति । विद-
लगचडुलगच्छिन्ने अंबरिसी तत्थ नेरइए ॥२॥३६॥ साडणपाडणतोडण–विंधणरज्जूतलप्पहारेहिं । सामा नेरइयाणं, पवत्त-
यंती अपुण्णाणं ३ ॥ ३७ ॥ अंतजरफिप्फिसाणि य, हिययं कालिज्जपुप्फसेवक्के । सबला नेरइयाणं, पवत्तयंती अपुन्नाणं ४
॥ ३८ ॥ असिसत्तिकुंततोमर–सूलतिसूलेसु सूइअग्गेसु । पोयंति रुद्दकम्माउ, नरगपाला तहिं रुद्दा ५ ॥ ३९ ॥ भंजंति

अंगमंगाणि, ऊरु बाहू सिराणि करचरणे । कप्पंति कप्पणीहिं, उवरुद्दा पावकम्मरए ६ ॥ ४० ॥ मीरासु सुंठएसुं कंडूसु य पयणगेसु य पयंति। कुंभीसु य लोहीसु य, पयंति काला उ नेरइए ७॥४१॥कप्पंति कागिणी मंसगाणि छिंदंति सीहपुच्छाणि । खाविंती नेरइए, महकाला पावकम्मरया ८ ॥४२॥ हत्थे पाए ऊरू, बाहुसिरा तह य अंगमंगाणि । छिंदिं पगामं तू, असिनेरइया उ नेरइए ९ ॥ ४३ ॥ कन्नोट्ठनासकरचरण–दसण तह थणपुतोरुबाहूणं । छेयणभेयणसाडण, असिपत्तधणूहि पाडिंति १० ॥४४॥ कुंभीसु य पयणेसु य, लोहीसु य कंदुलोहकुंभीसु । कुंभी उ नरगपाला, हणंति पाचंति नरएसु ११ ॥ ४५ ॥ तडतडतडस्स भज्जंति, भज्जणिकलंबवालुयापिट्ठे । वालुअगा नेरइए, लोलंती अंबरतलम्मि १२ ॥ ४६ ॥ वसपूयरुहिरकेसट्ठि–वाहिणीकलकलंतजतुसोया । वेयरणिनरयवाला, नेरइए ऊ पवाहिंति १३ ॥४७॥ कप्पंति करकएहिं, कप्पंति परुप्परं परसुगेहिं । संबलियमारुहंती, खररसरा तत्थ नेरइए १४ ॥ ४८ ॥ भीए य पलायंते, समंतओ तत्थ ते निरुंभंति । पसुणो जहा पसुवहे, महघोसा तत्थ नेरइए १५ ॥ ४९ ॥ इय नेरइयसरूवं, सुदारुणं पासिऊण पडिबुद्धा । सुरहि व वग्घतट्ठा, सइ व परपुरिसकरभट्ठा ॥ ५० ॥ हंसि व सेणनट्ठा, मूसि व विडालदंसणपलाणा । सा पुप्फचूलजाया, जाया भयवेविरसरीरा ॥ ५१ ॥ अप्पाणं नयरगयं व, पिक्खमाणा मणंमि संबुद्धा । सव्वं सुविणसरूवं, सा साहइ निअयदइयस्स ॥ ५२ ॥ सो वि हु तीए दुसुविण–उवसमणत्थं पभूयविहवेहिं । संतियनिउणजणेहिं, कारावइ संतियं कम्मं ॥ ५३ ॥ पुव्वं व पुप्फचूला, सुयापबोहाय पुप्फवइतियसो । वारं वारं नरए, दंसइ सा वि हु भणइ पइणो ॥ ५४ ॥ ता सो गोसे नियपिय–यमाइसहिओ सहंगओ सव्वे । दंसणिणो आणाविय, नरयसरूवाइं पुच्छेइ ॥ ५५ ॥ ते वि हु भणंति नरवर,

दारिद्दं रोगसोगसंतावा । परवसभावो गुत्तीइ, ठाणमिय नरयचिण्हाइं ॥ ५६ ॥ सुमिणविसंवायाओ, तव्वयणमसच्चयं वियाणित्ता । मोडेऊणं वयणं, ते लहु देवी विसज्जेइ ॥ ५७ ॥ रन्ना अन्नियपुत्ता-यरिओ हक्कारिऊण अहपुट्ठो । जहठिय-नरयसरूवं, तेसिं पुरओ परूवेइ ॥ ५८ ॥ देवी भणेइ भयवं, ममं व तुम्हेहि सुविणमज्झंमि । किं नरयाण सरूवं, सयलं-पि पलोइयं एयं ॥ ५९ ॥ सूरीवि भणइ भद्दे ! सुविणेण विणावि जिणवरागमओ । जाणिज्जइ अम्हेहिं, लोयसरूवं असेसं-पि ॥ ६० ॥ तो निवजाया पुच्छइ, भयवं विहिएण केण कम्मेण । जीवा पावंति इमाणि, नरयदुक्खाणि तिक्खाणि॥६१॥ अन्नियपुत्तो साहइ, कुणिमाहारे सया पवत्ताणं । महरंभमहपरिग्गह-पसत्तचित्ताण सत्ताणं ॥ ६२ ॥ पंचिंदियघाईणं, गुरुप-डिणीयाण रुद्दज्झाणीणं । नरए हवेइ पडणं, उल्लालियदंडनाएण ॥ ६३ ॥ इय कहिऊणं अन्निय-पुत्तायरिया गया नियं ठाणं । जणणी देवो वि तओ, तीसे दंसेइ सग्गाइं ॥ ६४ ॥ तत्थ य तियसा मणिमय-विमाणमालानिवाससुहसहिया । अमरतरुनियरपूरिय-समीहियत्था अइपसत्था ॥ ६५ ॥ कुंडलतिरीडहार-प्पमुहाहरणेहिँ भूसियसरीरा । नियकंतकंति-पूरेहि, पूरियासेसदिसिविदिसा ॥ ६६ ॥ अरयंवरवत्थधरा, अणमिसनलिणोवमाणनयणजुया । अमिलाणपुप्फमाला-घोलिरगलकंदला सययं ॥ ६७ ॥ देवंगणागणेहिं, सह विसयसुहं सया समाणंता । बहुविहजलाइकीला-पसत्तचित्ता दुहचत्ता ॥ ६८ ॥ गामसरताणमुच्छण-मुच्छियवरगीयसवणनिहुअमणा । ताललयमाणरम्मं, नट्टारंभं पलोयंता ॥ ६९ ॥ सयलजणलोललोला-कोडीहिं पि हु न वन्निउं सक्कं । ईसरियमणुहवंता, चिट्ठंति पगिट्ठतुट्ठिमया ॥ ७० ॥ छहिं कुलयं ॥ इय पिक्खिऊण सुमिणे, देवसरूवं सकोउगा देवी । पडिबुज्झिऊण पइणो, जहट्ठिअं कहइ वुत्तंतं ॥ ७१ ॥ गोसे तोसेण निवो,

दंसणिणो आहवित्तु पुच्छेइ । किं सग्गस्स सरूवं, तेसिं एगो कहइ एवं ॥ ७२ ॥ पियसंगमाउ अवरो, सग्गो नो अत्थि इत्थ भुवणम्मि । अवरो भणेइ जं जं, सुहजणयं स स हवे सग्गो ॥ ७३ ॥ एवं सग्गसरूवं, तक्कहियं पुप्फचूलनिवदइया । नो मन्नेइ जओ सा, तद्दिट्ठठिई सयं सुविणे ॥ ७४॥ अह हक्कारिय रन्ना, अन्नियउत्तो नमित्तु परिपुट्ठो । तियसालयस्सरूवं, जहट्ठियं साहए सव्वं ॥ ७५ ॥ तं सुणिय पुप्फचूला, विणयावणया भणेइ गुरुपुरओ । भयवं ! ममं व सुविणे, किं तुम्ह वि पिक्खिया सग्गा ॥ ७६ ॥ वागरइ गुरू भद्दे ! जिणवयणपईवभासियमणाणं । सग्गसरूवं अन्नं पि, सव्वमम्हाण पुण पयडं ॥ ७७ ॥ निवदइया वि पमाणं, जिणवयणंमि जाणित्ता । पुच्छेइ गुरुं सग्गो, पाविज्जइ केण कम्मेण ॥ ७८ ॥ तो वागरइ गुरू वि हु, भद्दे ! जिणदेसियाइ दिक्खाए । सव्वसुहाणं ठाणं, लब्भइ सग्गो पवग्गो वि ॥ ७९ ॥ इय सुणिय भग्गदुग्गइ-मग्गा रंगंतरंगसंवेगा । सिरिपुप्फचूलनरवर-पाणपिआ विन्नवेइ गुरुं ॥८०॥ भयवं दइयं पुच्छिय, पव्वज्जं तुम्ह पायमूलम्मि । गहिउं नरजम्मदुमं, सुहफलफलियं करिस्सामि ॥ ८१ ॥ इय भणिरी निवभज्जा, नमिऊण गुरुं विसज्जए हरिसा । तत्तो नियदइयं पइ, जंपइ महुराइ वाणीए ॥ ८२ ॥ तुम्ह पसायं सामिय ! भोगुवभोगा मए सया भुत्ता । इन्हिं कुणह पसायं, पव्वज्जं जेण गिण्हेमि ॥ ८३ ॥ तमयंडवज्जपायं, पिव सुणिय वयं निवो पयंपेइ । सुयणु मह पिम्मपउमं, मा उम्मूलेसु करि-णि व ॥ ८४ ॥ सत्तंगसंगयं पि हु, रज्जं अंतेउरं तहा नयरं । मह तुह विरहे ससिमुहि ! सुन्नं रन्नं व पडिहाइ ॥८५॥ अह चिट्ठसि न कहं पि हु, ता तं अंगीकयव्वया संती । गिण्हसु मह गिहि भिक्खं, जेणणुजाणामि दिक्खट्ठं ॥ ८६ ॥ रन्नो तहत्ति पडिव-ज्जिऊण तं वयणममयपाणं व दीणाइयाण दाणं, दाऊणं कप्पवल्लि व ॥ ८७ ॥ सव्वत्थाभयदाणं, उग्घोसिय चेइएसु

तह पूयं । काऊण दइयकारिय-निक्खमणमहुस्सवुक्करिसा ॥ ८८ ॥ गंतूण अन्नियासुय-गणहरपासम्मि पुप्फचूला सा । पडिवज्जइ पव्वज्जं, त्रीयं पिव मुक्खरुक्खस्स ॥ ८९॥ गहणासेवणसिक्खं, सम्मं सा सिक्खिउं महादक्खा । संजाया गुरुयाणं, संगो हि गुणावहो होइ ॥ ९० ॥ अह नाणेणं नाउं, बारससंवच्छराइ दुब्भिक्खं । अन्नियउत्तायरिओ, गच्छं पइ जंपए एवं ॥ ९१ ॥ वच्छ ! गच्छह तुब्भे, दुब्भिक्खाओ सुभिक्खदेसेसु । जंघावलपरिखीणा, चिट्ठिस्सामो इहेवम्हे ॥ ९२ ॥ पुहवितलल्लुलियसीसा, सीसावि भणंति नेरिसं जुत्तं । तुम्ह पयपउममूलं, मुत्तुं अम्हाण पुण गमणं ॥ ९३ ॥ तो नमिय पुप्फचूला, विन्नवइ गुरुं मुणिंद ! तुम्हाणं । पुन्नोदएण लद्धं, सुरसुसमहं करिस्सामि ॥ ९४ ॥ उस्सग्गववायविऊ, अणुचियमवि तीइ साहुणिइ गिरं । पडिवज्जिऊण गच्छं, सुभिक्खदेसंमि पट्ठवइ ॥ ९५ ॥ अह पुप्फचूलअंते-उराउ गहिऊण सुद्धमाहारं । वियरेइ पुप्फचूला, गुरूण परमाइ भत्तीए ॥ ९६ ॥ एवं सया गुरूणं, एगग्गमणेण सा परमभत्तिं । कुणमाणा सुहझाणा, पावइ वरकेवलं नाणं ॥ ९७ ॥ सा जायकेवला वि हु, वेयावच्चं विसेसओ गुरुणो । आगमभणियं अत्थं, सच्चवयंती विणिम्मेइ ॥ ९८ ॥ जो जस्स य जारिसयं, पुव्विं भत्तिं कुणंतओ होइ । सो तस्स तारिसं चिय, कुणेइ जा नज्जइ न नाणी ॥ ९९ नाणेण सा गुरूणं, सवाइँ मणिच्छियाइँ पूरंती । तेहिं वुत्ता वच्छे ! कहं तुहं इय वियाणेसि ? ॥ १०० ॥ पभणेइ पुप्फचूला, भयवं ! पगिइं तुमाण जाणेमि । जो जं खु सया सेवइ, सो जाणइ तस्स सब्भावं ॥ १०१ ॥ कइया सा वरिसंते, घणेऽसणं आणिऊण वियरंती । गुरुणा वुत्ता जाणं-तियावि किं वच्छि भुल्लेसि ॥ १०२ ॥ सा वि पयंपइ भयवं ! आउकाएण वज्जिए मग्गे । पिंडं आणंतीए, तुब्भं दोसो न को वि हवे ॥१०३॥ अच्चित्तं पुण मग्गं, जाणेसि तुमं कहं ति

गुरुपुट्ठा। सा भणइ केवलेणं, सव्वं पच्चक्खयं मज्झ ॥१०४॥ सूरी वि चिंतए जं, मए दुरप्पेण केवलन्नाणी। आसाइओ तओ पुच्छइ किं, अब्भवो दूरभवो वा ॥ १०५ ॥ तो जाणिऊण गुरुणो, ऽभिप्पायं सा भणेइ सुरसरियं। तुम्हनरंताण फुडं, भविस्सई केवलं नाणं॥१०६॥अह सूरी गंतूणं, गंगाए बहु जणेण परियरिओ। आरूहइ नावाए, लो(ला)हत्थे को न उज्जमइ ॥१०७॥ जत्थ पएसे सूरी, उववसिई तत्थ बुड्डए नावा। तो लोओ नियजोविय-लुद्धो तं खिवइ जलमज्झे ॥१०८॥ नत्थ पडंतं पवयण-पडिणीया खुद्दवंतरी सूरि। पोएइ तिसूलेणं, जओ खलाणं कओ करुणा ॥१०९॥ सूरी वि नियं पीडं, अवगन्निय चिंतए कहं देहो। आउकायाईणं, जोवाण खयंकरो मज्झ ॥ ११० ॥ इय जीवदयासारं, भावंतओ मणे सूरी। आरुहिय खवगसेणिं, अंतगडो केवली जाओ ॥ १११ ॥ सियझाणंमि चउत्थे, ठिओ तओ निव्वुई गओ सूरी। तत्थ य निवाणमहं, देवा देवीउ अकरिंसु ॥ ११२ ॥ तप्पभिइ तत्थ ठाणे, लोइयतित्थं पयाग इय नामं। सुपसिद्धं संजायं, कामियदाणाउ लोयम्मि ॥ ११३ ॥ इत्तो अ पुप्फचूला, सियझाणेणं खवित्तु कम्माइं। निवाणमणंतसुहाण-भायणं झत्ति संपत्ता ॥११४॥

इति अन्निकापुत्राचार्यचरित्रमिति। गाथाछन्दः ॥ ६१ ॥

**जत्थ य अज्जाहि समं थेरा वि न उल्लवंति गयदसणा। न य झायंति त्थीणं, अंगोवंगाइ तं गच्छं ॥६२॥**

व्याख्या—यत्र च गच्छे आर्याभिः—साध्वीभिः समं—सार्धं स्थविरा अपि साधवः किं पुनस्तरुणाः नोल्लपन्ति—नालापसंलापादि कुर्वन्ति, किंभूताः गताः—नष्टाः दशनाः—दन्ताः येषां ते गतदशनाः न च ध्यायन्ति—चिन्तयन्ति स्त्रीणां—नारीणां अङ्गोपाङ्गानि, तत्राङ्गान्यष्टौ बाहुद्वयं ऊरुद्वयं पृष्ठिः शिरः हृदयं उदरं च, उपाङ्गानि—कर्णनेत्रनासिकादीनि तं गच्छं वदन्तीति

शेषः इति । गाथाछन्दः ॥ ६२ ॥

वज्जेह अप्पमत्ता, अज्जासंसग्गि अग्गिविससरिसी । अज्जाणुचरो साहू, लहइ अकित्तिं खु अचिरेण ॥६३॥

व्याख्या—वर्जयत-मुञ्चत अप्रमत्ताः-प्रमादवर्जिताः सन्तो भो साधवो यूयं का आर्यासंसर्गीः-साध्वीपरिचयान् अत्र शसो लोपः प्राकृतत्वात् कथंभूताः आर्यासंसर्गीः अग्निविषसदृशीरुपलक्षणत्वात् व्याघ्रविषधरादिसदृशीश्च यत उक्तं स्त्रियोऽधिकृत्य तंदुलवैचारिकप्रकीर्णके-" जाओ चिय इमाओ इत्थियाओ अणेगेहिं कइवरसहस्सेहिं विविहपासपडिबद्धेहिं कामरागमोहेहिं वन्नियाओ वि एरिसाओ तं जहा-पगइ विसमाओ, पियरूसणाओ, पियवयणवल्लरीओ, कइअवपेमगिरित्तडीओ, अवराहसहस्सघरणीओ, पभवो रोगस्स, विणासो वलस्स, सूणा पुरिसाणं, नासो लज्जाए, संकरो अविणयस्स, निलओ नियडीणं, खाणी वइरस्स, सरीरं सोगस्स, भेओ मज्जायाणं, आसओ रागस्स, निलओ दुचरियाणं, माईए सम्मोहो, खलणा नाणस्स, चलणं सीलस्स, विग्घो धम्मस्स, अरी साहूणं, दूसणं आयारपत्ताणं, आरामो कम्मरयस्स, फलिहो मुक्खमग्गस्स, भवणं दरिद्दस्स, अवि य इमाओ आसीविसो विव कुवियाओ, मत्तगओ विव मयणपरवसाओ, वग्घी विव दुट्ठहिययाओ, तणच्छन्नकूवो विव अप्पगासहिययाओ, मायाकारओ विव उवयारसयबंधणपउत्ताओ। आदरिसचिंधं पिव दुग्गिज्झसब्भावाओ, फुंफुमा विव अंतोदहणसीलाओ, नगमग्गो विव अणवट्ठियचित्ताओ, अंतोदुट्ठवणो विव कुहियहिययाओ, किण्हसप्पो विव अविस्ससणिज्जाओ, संझब्भरागो विव मुहुत्तरागाओ, समुद्दवीची विव चवलसभावाओ, मच्छो विव दुप्परिवत्तणसीलाओ, वानरो विव चवलचित्ताओ, मच्चू विव निव्विसेसाओ, कालो विव निरणुकंपाओ, वरुणो

विव पासहत्थाओ, सलिलाओ विव निन्नगामिणीओ, किवणो विव उत्ताणहत्थाओ, नरओ विव उत्तासणिज्जाओ, खरो इव दुस्सीलाओ, दुट्ठस्सो विव दुद्दमाओ, बालो इव मुहुत्तहिययाओ, अंधयारमिव दुप्पवेसाओ, विसवल्ली विव अणल्लियणिज्जाओ, दुट्ठगाहा वावी इव अणवगाहाओ, ठाणभट्ठो विव इस्सरो अप्पसंसणिज्जाओ, किंपागफलमिव मुहमहुराओ, रित्तमुंडी विव बाललोभणिज्जाओ, मंसपेसीगहणमिव सोवद्दवाओ, जलियचुडिली विव अमुच्चमाणडहणसीलाओ, अरिट्ठमिव दुल्लंघणिज्जाओ, कूडकरिसावणो विव कालविसंवायणसीलाओ, चंडसीलो विव दुक्खरक्खियाओ, अइविसाओ, दुगुंछियाओ, दुरुवचाराओ, अगंभीराओ, अविस्ससणिज्जाओ, अणवत्थियाओ, दुक्खरक्खियाओ, दुक्खपालियाओ, अरइकराओ, कक्कसाओ, दढवेराओ, रूवसोहग्गमउम्मत्ताओ, भुयगगइकुडिलहिययाओ, कंतारगइठाणभूयाओ, कुलसयणमित्तभयकारियाओ, परदोसपगासियाओ, कयग्घाओ, बलसोहियाओ, एगंतहरणकालाओ, चंचलाओ, जाइभंडोवगारो विव मुहरागविरागाओ, अवियाइंताओ, अरज्जुउपासो अ(इ)दारुयाअडवी, अणालस्स निलओ, अइतिक्खवेयरणी, अणिमिओ वाही, अविउगोविप्पलावो, अरूवउवसग्गो, रइमंतो चित्तविब्भमो, सव्वंगिओ दाहो, अणब्भपसूया वज्जासणी, असलिलप्पलावो समुद्दरओ, अवियाइं तासिं इत्थियाणं अणेगाणि नामनिरुत्ताणि, पुरिसे कामरागपडिबद्धे नाणाविहेहिं उवायसयसहस्सेहिं वहबंधणमाणयंति। पुरिसाणं नो अन्नो एरिसो अरी अत्थि त्ति नारीओ, तं जहा—नारीसमा न नराणं अरीओ नारीओ १, नाणाविहेहिं कम्मेहिं सिप्पयाइहिं पुरिसे मोहंति त्ति महिलाओ २, पुरिसे (प)मत्ते करेंति त्ति पमयाओ ३, महंतं कलिं जणयंति त्ति महिलियाओ ४, पुरिसे हावभावमाईहिं रमंति त्ति रामाओ ५, पुरिसे अंगाणु-

राए करंति त्ति अंगणाओ ६, नाणाविहेसु जुद्धभंडणसंगामाडवीसु मुहाण गिन्हणसीउन्हदुक्खकिलेसमाईसु पुरिसे लालंति त्ति ललणाओ ७, पुरिसे जोगनिउणेहिं वसे ठावंति त्ति जोसियाओ ८, पुरिसे नाणाविहेहिं भावेहिं वण्णंति त्ति वणियाओ । ९ " इत्यादि तथा दशवैकालिकेऽप्युक्तं " विभूसा इत्थिसंसग्गी, पणीअं रसभोअणं । नरस्सत्तगवेसिस्स, विसं तालउडं जहा ॥ १ ॥ " तथाऽन्यैरप्युक्तं– " आवर्त्तः संशयानामविनयभवनं पत्तनं साहसानां, दोषाणां सन्निधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम् । स्वर्गद्वारस्य विघ्नो नरकपुरमुखं सर्वमायाकरण्डः, स्त्रीयन्त्रं केन सृष्टं विषमविषमयं सर्वलोकस्य पाशः ॥ १ ॥ नो सत्येन मृगाङ्क एव वदनीभूतो न चेन्दीवरद्वन्द्वं लोचनतां गतं न कनकैरप्यङ्गयष्टिः कृता । किं त्वेवं कविभिः प्रतारितमनास्तत्त्वं विजानन्नपि, त्वङ्मांसास्थिमयं वपुर्मृगदृशां मत्वा जनः सेवते ॥ २ ॥ यदेतत्पूर्णेन्दुद्युतिहरमुदाराकृतिधरं, मुखाब्जं तन्वङ्ग्याः किल वसति यत्राधरमधुः।इदं तत्किम्पाकद्रुमफलमिवानीव विरसं, व्यतीतेऽस्मिन् काले विषमिव भविष्यत्यसुखदम् ॥ ३ ॥ व्यादीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना, नीलाब्जद्युतिनाऽहिना वरमहं दष्टो न तच्चक्षुषा । दष्टे संति चिकित्सका दिशि दिशि प्रायेण पुण्यार्थिनो, मुग्धाक्षीक्षणवीक्षितस्य नहि मे वैद्यो न वाऽप्यौषधम् ॥ ४ ॥ संसार तव निस्तार–पदवी न दवीयसी । अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥ ५ ॥ नूनं हि ते कविवरा विपरीतबोधा, ये नित्यमाहुरबला इति कामिनीनाम् । याभिर्विलोलतरतारकदृष्टिपातैः, शक्रादयोऽपि विजितास्त्वबलाः कथं ताः ॥ ६ ॥ जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमाः । हृदये चिन्तयन्त्यन्यं, प्रियः को नाम योषिताम् ॥ ७ ॥ स्मितेन भावेन च लज्जया भिया, पराङ्मुखैरर्द्धकटाक्षवीक्षितैः । वचोभिरीर्ष्याकलहेन लीलया, समस्तभावैः

खलु बन्धनं स्त्रियः ॥ ८ ॥ आर्यासंसगवर्जने कारणमाह–खुः–यस्मादर्थे ततोऽयमर्थः यस्मात्कारणात् आर्यानुचरः साधुः–मुनिर्लभते–प्राप्नोति अकीर्त्तिं–असाधुवादं अचिरेणेति–स्तोककालेनेति । गाथाछन्दः ॥ ६३ ॥

**थेरस्स तवस्सिस्स व, बहुस्सुअस्स व पमाणभूयस्स । अज्जासंसग्गीए, जणजंपणयं हविज्जाहि ॥ ६४ ॥**

व्याख्या—स्थविरस्य–वृद्धस्य तपस्विनो वा–तपोयुक्तस्य बहुश्रुतस्य वा–अधीतबह्वागमस्य प्रमाणभूतस्य वा–सर्वजनमान्यस्य एवंविधस्यापि साधोः आर्यासंसर्ग्या–साध्वीप रिचयेन 'जणजंपणयं' ति जनवचनीयता–जनापवाद इत्यर्थः भवेदिति। गाथाछन्दः ॥ ६४ ॥ अथ यद्येवंविधस्याप्यार्यासंसर्ग्या जनापवादः स्यात् तर्हि एतद्विपरीतस्य का कथेत्याह–

**किं पुण तरुणो अबहुस्सुओ अ नय वि हु विगिट्ठ तवचरणो । अज्जासंसग्गीए, जणजंपणयं न पाविज्जा ६५**

व्याख्या—तरुणो–युवा अबहुश्रुतश्च–आगमपरिज्ञानरहितः न चापि हु विकृष्टतपश्चरणो–न दशमादितपः–कर्त्ता एवंविधो मुनिरार्यासंसर्ग्या जनवचनीयतां किं पुनर्न प्राप्नुयात् अपि तु प्राप्नुयादेवेत्यर्थः । गाथाछन्दः ॥६५॥ एतदपि कुत इत्याह–

**जइवि सय थिरचित्तो, तहवि संसग्गिलद्धपसराए । अग्गिसमीवे व घयं, विलिज्ज चित्तं खु अज्जाए ।६६।**

व्याख्या–यद्यपि स्वयमात्मना स्थिरचित्तो–दृढान्तःकरणः साधुः तथापि तस्येति शेषः, आर्यायाः संसर्ग्या प्राकृतत्वात् विभक्तिलोपः, लब्धप्रसरया–प्रसरणवत्या अग्निसमीपे घृतमिव खु–निश्चयेन चित्तं–मनो विलीयेत–शैथिल्य भजेत् अथवा संसर्गिलब्धप्रसरया आर्यया तस्य चित्तं विलीयेत । तत्र संसर्ग्या गमनागमनादिना संगत्यां मुनिना लब्धप्रसरः–कियत्का-

लमङ्गोपाङ्गालोकनालापादिकरणरूपो यस्याः सा तथा तया दृष्टमात्रया राजीमत्या रथनेमिमुनेरिव तथा हि–यदा श्रीनेमिः प्रव्रजितस्तदा रथनेमिर्ज्येष्ठभ्राता राजीमतीमुपचरति सा मामिच्छेदिति सा भगवती निर्विण्णकामभोगा अन्यदा तदभिप्रायं ज्ञात्वा मधुघृतसंयुता पेया पीता तस्मिन् आगते तया मदनफलाघ्राणेन वान्ता उक्तश्च–एतां पेयां पिव, रथनेमिरूचे कथं वांतं पीयते ? सा प्राह–अहं श्रीनेमिना वान्ता कथं पातुमिच्छसि । धिर त्थु ते जसोकामी, जो तं जीवियकारणा । वंत इच्छसि आवेउं सेअं ते मरणं भवे ॥ १ ॥ धिगस्तु ते तव पौरुषमिति गम्यते हे यशस्कामिन् ! सासूयं क्षत्रियामन्त्रणं अथवाऽकार-प्रश्लेषादयशःकामिन् धिगस्तु तव यस्त्वं जीवितकारणात्–असंयमजीवितहेतोर्वान्तमिच्छस्यापातुं श्रेयस्ते मरणं भवेत् । रथ-नेमिः सम्बुद्धः प्रव्रजितः राजीमत्यपि प्रव्रजिता, अन्यदा रथनेमिर्द्वारवत्यां भिक्षामाहिण्ड्य स्वामिसकाशमागच्छन् वृष्ट्या-भ्याहतो गुहामनुप्रविष्टः, राजीमती स्वामिनं वन्दित्वा प्रतिश्रयमागच्छन्ती वृष्ट्यान्तरा तामेव गुहामायाता। रथनेमिस्तां दृष्ट्वाऽध्युपपन्नः, सा ज्ञात्वेदमवोचत् ॥ १ ॥ अहं च भोगरायस्स, तं च सि अंधगवन्हिणो । मा कुले गंधणा होमो, संजमं निहुओ चर ॥२॥ अहं च भोगराज्ञः–उग्रसेनस्य दुहितेति गम्यते, त्वं च भवस्यन्धकवृष्णेः–समुद्रविजयस्य सुत इति गम्यते, अतो मा एकैकप्रधाने कुल आवां गन्धनौ भूवः–जघन्यसर्पतुल्यावित्यर्थः; अतः संयमं निभृतश्चर" इत्यादि गाथाछन्दः ॥ ६६ ॥

**सवत्थ इत्थिवग्गंमि, अप्पमत्तो सया अवीसत्थो । नित्थरइ बंभचेरं, तव्विवरीओ न नित्थरइ ॥६७॥**

व्याख्या–सर्वत्र–सर्वस्मिन् प्रव्रजिताप्रव्रजितरूपे स्त्रीवर्गे अप्रमत्तः–निद्राविकथादिप्रमादरहितः सदा–सर्वकालं अविश्व-स्तो–विश्वासरहितश्च सन् निस्तरति–पालयतीत्यर्थः, ब्रह्मचर्यं–मैथुनत्यागरूपं तद्विपरीतः–उक्तविशेषणरहितो न निस्तरति–

न निर्वहति ब्रह्मचर्यमिति । गाथाछन्दः ॥ ६७ ॥

**सव्वत्थेसु विमुत्तो, साहू सव्वत्थ होइ अप्पवसो । सो होइ अणप्पवसो, अज्जाणं अणुचरंतो उ ॥६८॥**

व्याख्या–सर्वार्थेषु विमुक्तः–सर्वपदार्थेषु ममतारहितः साधुर्मोक्षसाधकः सर्वत्रात्मवशो भवति न कुत्रापि परवशः, स पुनर्मुनिर्भवत्यनात्मवशः–परवशः किं कुर्वन्नित्याह 'अज्जाणं' ति 'क्वचिद् द्वितीयादेः (८–३–१३४) इति प्राकृतसूत्रेण द्वितीयास्थाने षष्ठीविधानात् आर्याः–साध्वीरनुचरन्–साध्वीनां किङ्करत्वं कुर्वन्नित्यर्थः तुः–पुनरर्थे इति । गाथाछन्दः ॥६८॥

**खेलपडिअमप्पाणं, न तरइ जह मच्छिआ विमोएउं । अज्जाणुचरो साहू, न तरइ अप्पं विमोएउं ।६९ ।**

व्याख्या–श्लेष्मपतितमात्मानं न शक्नोति, यथा मक्षिका विमोचयितुं–पृथक् कर्त्तु एवमार्यानुचरः–साध्वीपाशबद्धपादः साधुर्न शक्नोति आत्मानं विमोचयितुं जिनाज्ञया ग्रामादिषु विहरणार्थमिति । गाथाछन्दः ॥६९॥

**साहुस्स नत्थि लोए अज्जासरिसी हु बंधणे उवमा । धम्मेण सह ठवंतो, नय सारिसो जेण असिलेसो ।७०।**

व्याख्या–लोके–जगति साधोः–मुनेरार्यासदृशी हु–निश्चित बन्धने उपमा नास्ति, अविधिना आर्याः परिवर्त्तयतः साधोरार्यासदृशमन्यत्कर्मबन्धस्थानं नास्तीत्यर्थः, तथा धर्मेण सह वर्त्तमानस्येति शेषः, 'ठवितो' त्ति विभक्तिव्यत्ययात् आर्याः स्थापयतः मक्रमाद्धर्मे एव यासां सदृशोऽश्लेषो–अबन्धनं नच नैवास्ति, कोऽर्थः यः स्वयं धर्मवान् विधिपरिवर्त्तनेनार्या धर्मे स्थापयति तस्यार्यासदृशमन्यत् कर्म(र्म)बन्धस्थानमुपलक्षणत्वात्कर्मनिर्जरास्थानं च नैवास्तीत्यर्थः, तथा चोक्तं–निशीथपंचदशो-

देश्यकभाष्यचूर्ण्योः प्रलम्बाधिकारे–"पुच्छ सहुभीअपरिसो, चउभंगे पढमगे अणुण्णातो। सेसतिगे नाणुण्णा, गुरुगा परियट्टणे जं च ॥१॥ एत्थ सीसो पुच्छति, जं सुत्तं दोण्हवि वग्गाण दोसु खित्तेसु त्ति एत्थ पुढो ठिताणं संजतीणं वा दुक्खं वावारो बुज्झति, दोसदंसी य पुढो खित्ते ठवेह जतो अदोसा समुप्पज्जंति, तं न घेत्तवं आगमे य पव्वावेज्जा, अतो संसतो किं परियट्टियव्वाओ न परियट्टियव्वाओ ? आयरिओ भणइ–नत्थि कोइ नियमो जहा अवस्सं परियट्टियव्वाओ न व त्ति, जइ पुण पव्वावेत्ता णायओ परियट्टति तो महतीए णिज्जराए वट्टति, अह अणायओ पालेइ तो अतिमहामोहं पकुव्वइ दीहं संसारं णिवत्तेइ, तो केरिसेण परियट्टियव्वाओ ? को वा परियट्टणे विधी ? अतो भणति, सहू भीयपरिसो त्ति एतेहिं दोहिं पदेहिं चउभंगो कायव्वो–सहू भीयपरिसो १ सहू अभीयपरिसो २ असहू भीयपरिसो ३ असहू अभीतपरिसो ४ धितिबलसंपण्णो इंदियनिग्गहसमत्थो थिरचित्तो य आहारोवधिखेत्ताणि य तप्पाउग्गाणि उप्पाएउं समत्थो एरिसो सहू, जस्स सव्वो साहुणिवग्गो भया न किंचि अकिरियं करेति भया कंपति एसो भीतपरिसो, एत्थ पढमभंगिल्लस्स परियट्टणं अणुण्णायं, सेसेसु तिसु भंगेसु नाणुण्णायं, अह परियट्टति तो चउगुरुं 'परियट्टणे जं च' त्ति बितियभंगिल्लो अप्पणा सहू परं अभीतपरिसत्तणओ जं ताओ सच्छंदपयाराओ काहिंति तं पावति, ततियभंगिल्लो पुण असहुभीतत्तणओ तासिं अंगपच्चंगसंठाणचारुल्लवियपेहिय दट्ठुं जं समायरति तं पावति, चरिमे य बितियततियभंगदोसा दट्ठवा। पढमभंगिल्लो जति पुण पव्वावेती, जावज्जीवाइ ताओ पालेति। अणासति कप्पेवि हु, गुरुगा जं निज्जरा विउला ॥ २ ॥ 'जति'त्ति अब्भुवगमे किमब्भुवगच्छति, ताओ पव्वावेउं जति ता पव्वावेति तो विधीए जावज्जीवं परियट्टेति, 'पुण' त्ति विसेसणे किं विसेसेति इमं सो पढमभंगिल्लो जइ

जिणकप्पं पडिवज्जिउकामो अण्णं च अज्जाओ परिअट्टियवाओ तो किं करेउ? जइ अत्थि गच्छे अन्नो परिअट्टगो तो चिर-दिक्खियाओ अहिणवाओ दिक्खेउं तस्स समप्पेउं जिणकप्पं पडिवज्जउ, अह नत्थि अन्नो परियट्टगो तो मा जिणकप्पं पडिवज्जउ ताओ चिय परियट्टउ एवं विसेसेति किं एवं भन्नइ, उच्यते–अन्नवट्टावगस्सासति जति जिणकप्पं पडिवज्जति तो चउगुरुगा। अण्णं च जिणकप्पट्ठिअस्स जा निज्जरा तओ विधीए संजतीउ अणुपालेंतस्स विउलतरा णिज्जरा भवतीति।"

तथाऽत्र प्रसङ्गतो निशीथाष्टमोद्देशकभाष्यचूर्णीगतः साधुभिः सार्धं साध्वीविहारविधिर्यथा–"इदाणिं गच्छस्स आणण चि दारं–पडिलेहिए अ खित्ते, संजतिवग्गस्स आणणा होइ। निक्कारणंमि मग्गउ, कारणि पुरओ व समगं वा ॥ १ ॥ जया खेत्ताओ खेत्तं संजतीउ संचारिज्जंति तदा निब्भए–निराबाधे साहू पुरतो ठितो ताओ अ मग्गतो ठिता, आगच्छंति, भया-इकारणे पुण साहू पुरतो मग्गतो पक्खा पक्खिअं वा समंतओ वा ठिता गच्छंति ॥१॥ निप्पच्चवाइसंबंधि भाविओ गणहरो प्पवितइतो। णेति भये पुण सत्थेण सद्धिं कयकरणसहिओ वा ॥ २ ॥ संजतीणं संबंधिणो जे संजया तेहिं सहितो गण-धरो अप्पवितिओ अप्पतितिओ वा निप्पच्चवाए णेति, सपच्चवाए सत्थेण सद्धिं णेति, जो वा संजओ सहस्सजोही सत्थे वा कयकरणो तेण सहितो णेति ॥२॥ उभयट्ठा विणिविट्ठं मा पेल्ले समणि तेण पुरखेगे। तं उ न जुज्जइ अविणयविरुद्धउभयं च जयणाए ॥३॥ एगे आयरिया भणंति पुरतो वि ठिता संजतीउ गच्छंतु किं कारणं, आह–काइअसण्णाविणिविट्ठं संजतं मा वइणीपेल्लिहि त्ति। सोवा वइणिं तम्हा पुरतो गच्छंतु तं न जुज्जति ॥ कम्हा तासिं अविणतो भवति लोगविरुद्धं च तम्हा उभयं जयणाए करेज्ज का जयणा? जत्थ एगो काइअसण्णं वोसिरति, तत्थ सव्वेवि चिट्ठंति, ततो सव्वेवि चिट्ठंते

दट्ठुं मग्गओ चेव चिट्ठंति, ताओ वि पिट्ठतो सरीरचिंतं करेंति एवं दोसा न भवंतीति ।" अयं च साध्वीविहारविधिबृहत्कल्पवृत्तिप्रथमखण्डप्रान्तेऽप्यस्ति । तथा साधुसाध्वीनामेकत्र स्थानाद्याश्रित्य स्थानाङ्गपञ्चमस्थानकेऽप्युक्तं, यथा–" पंचहिं ठाणेहिं निग्गंथा य निग्गंथीओ य एगंतओ ठाणं वा सेज्जं वा निसीहियं वा चेयमाणे नाइक्कमंति, तं जहा–अत्थेगइआ निग्गंथा य निग्गंथीओ य एगं महं आगामिअं छिन्नावायं दीहमद्धमडविमणुपविट्ठा, तत्थेगयतो ठाणं वा सेज्जं वा निसीहिअं वा चेअमाणे नाइक्कमंति १, अत्थेगइया निग्गंथा य निग्गंथीओ य गामंसि वा नगरंसि वा जाव रायहाणिंसि वा वासं उवागया एगइया जत्थ उवस्सयं लभंति एगइआ णो लभंति तत्थेगयतो ठाणं वा जाव नाइक्कमंति २, अत्थेगइया निग्गंथा य निग्गंथीओ य नागकुमारावासंसि वा सुवन्नकुमारावासंसि वा वासं उवागया तत्थेगयओ जाव णाइक्कमंति ३, आमोसगा दीसंति ते इच्छंति णिग्गंथीओ चीवरपडिआए पडिगाहित्तए तत्थेगयओ जाव णाइक्कमंति, ४, जुवाणा दीसंति ते इच्छंति णिग्गंथीओ मेहुणपडिआए पडिगाहित्तए तत्थेगयओ ठाणं वा जाव णाइक्कमंति ५, इच्चेतेहिं पंचहिं ठाणेहिं जाव णाइक्कमंति तथा पंचहिं ठाणेहिं समणे णिग्गंथे अचेलए सचेलिआहिं णिग्गंथीहिं सद्धिं संवसमाणे णाइक्कमंति, तं जहा खित्तचित्ते समणे निग्गंथे निग्गंथेहिं अविज्जमाणेहिं अचेलए सचेलिआहिं णिग्गंथीहिं संवसमाणे णाइक्कमइ १, एवमेतेणं गमएणं दित्तचित्ते २, जक्खाइट्ठे ३, उम्मायपत्ते ४, निग्गंथी पवाविए समाणे निग्गंथेहिं अविज्जमाणेहिं अचेलए सचेलिआहिं निग्गंथीहिं सद्धिं संवसमाणे णाइक्कमति ५ ।" इति, गाथाछन्दः ॥७०॥ पूर्वमार्याधिकारे 'जइवि सयं थिरचित्तो' इत्यादिना कस्यचिदार्यया रागादिप्रादुर्भावेन चारित्रभ्रंशोऽपि स्यादित्युक्तमथ वाङ्मात्रेणापि भ्रष्टचारित्रस्य दण्डप्रतिपादनद्वारेण प्रस्तुतमेवाह–

वायामित्तेण वि जत्थ, भट्ठचरिअस्स निग्गहं विहिणा। बहुलद्धिजुअस्सावी, कीरइ गुरुणा तयं गच्छं ७१

व्याख्या–वाङ्मात्रेणापि किं पुनः कायेनेत्यपि शब्दार्थः, यत्र गच्छे भ्रष्टचरितस्य–खण्डितचारित्रस्य साधोः 'निग्गहं' ति, नपुंसकत्वं प्राकृतत्वात्, निग्रहो–दण्डो विधिना आगमोक्तप्रकारेण, कथम्भूतस्य बहुलब्धियुतस्यापि–आमर्पौषध्याद्यनेकलब्धिसमन्वितस्यापि क्रियते–विधीयते गुरुणा आचार्येण क्षुल्लकस्येव पित्रा स गच्छः स्यादिति क्षुल्लकसम्बन्धश्चायम्–

वसन्तपुरे देवप्रियः श्रेष्ठी, यौवने भार्या मृता, पुत्रेणाष्टवार्षिकेण सह प्रव्रजितः। इतश्च स क्षुल्लकः परीषहैर्बाध्यमानो वक्ति–तात! न शक्नोमि भिक्षाटनं कर्तुं, ततः पिता आनीय दत्ते, एवं भूमौ न संस्तारयितुं शक्नोमि, ततः पिता फलकमर्पयति, एवं लोचस्थाने क्षौरं कारयति, प्रक्षालयत्यङ्गं प्रासुकनीरेण, पुनर्वक्ति तात! न शक्नोमि ब्रह्मव्रतं पालयितुं, ततोऽयोग्योऽयमिति पित्रा निष्काशितः, मृत्वा महिषो जातः, पिता चारित्रमाराध्य देवो जातः, अवधिना सुतं महिषं पश्यति, सार्थवाहरूपं कृत्वा तं महिषं गुरुभारं वाहयन् तात! न शक्नोमीत्यादिपूर्वभवोक्तं पुनः पुनः कथयन् स्मारयति, तस्य जातिस्मरणं उत्पन्नम्, गृहीतानशनो महिषो मृत्वा वैमानिकदेवो जात इति क्षुल्लककथा। अत्राधिकारात् आमर्षौषध्यादिलब्धिस्वरूपं लिख्यते–

आमोसहि १ विप्पोसहि २ खेलोसहि ३ जल्लओसही ४ चेव। सव्वोसहिसंभिन्ने ६, ओही ७ रिउ ८ विउलमइलद्धी ९ ॥१॥ चारण १० आसीविस ११ केवली अ १२, गणधारिणो अ १३ पुव्वधरा १४। अरिहंत १५ चक्कवट्टी १६, बलदेवा १७ वासुदेवा १८ य ॥ २ ॥ खीरमहुसप्पिआसव १९–कोट्ठयबुद्धी २० पयाणुसारी य। तह बीयबुद्धि २२

तेयग २३-आहारग २४ सीयलेसा य २५ ॥ ३ ॥ वेउव्विदेहलद्धी २६, अक्खीणमहाणसी २७ पुलागा य २८ । परिणामतव्ववसेणं, एमाई हुंति लद्धीओ ॥ ४ ॥ इह लब्धिशब्दस्य प्रत्येकमभिसम्बन्धात् ' आमोसहिलद्धि ' त्ति आमर्शो-हस्तादिना स्पर्शः औषधिर्यस्य स आमर्षौषधिस्तस्य स एव वा लब्धिलब्धिमतोरभेदविवक्षणाल्लब्धिः-सम्पदामर्षौषधिरेवमग्रेऽपि ज्ञेयम् १ । 'विप्पोसहि ' त्ति विप्रुड्-उच्चारः पुरीषमिति यावत् औषधिर्यस्य स तथा तस्य स एव वा लब्धिः विप्रुडौषधिलब्धिः २ । 'खेलोसहि' त्ति खेलः-श्लेष्मः ३ । 'जल्लोसहि' त्ति जल्लः-कर्णदन्तनासिकानयनजिह्वोद्भवः शरीरसम्भवश्च मलः ४ । 'सव्वोसहि' त्ति सर्वे विण्मूत्रकेशनखादय उक्ता अनुक्ताश्च औषधयो यस्य स तथा, उक्तं च योगशास्त्रप्रथमप्रकाशवृत्तौ श्रीहेमचन्द्रसूरिपादैः—"योगिनां कायसंस्पर्शः, सिञ्चन्निव सुधारसैः । क्षिणोति तत्क्षणं सर्वा-नामयानामयाविनाम् ॥ १ ॥ योगिनां योगमाहात्म्यात्, पुरीषमपि कल्पते । रोगिणां रोगनाशाय, कुमुदामोदशालि च ॥२॥ तथाहि योगमाहात्म्या-द्योगिनां कफबिन्दवः । सनत्कुमारादेरिव, जायन्ते सर्वरुक्छिदः ॥ ३ ॥ मलः किल समाम्नातो, द्विविधः सर्वदेहिनाम् । कर्णनेत्रादिजन्मैको, द्वितीयस्तु वपुर्भवः ॥ ४॥ योगिनां योगसम्पत्ति-माहात्म्याद् द्विविधोऽपि सः । कस्तूरिका परिमलो, रोगघ्ना सर्वरोगिणाम् ।५॥ नखाः केशा रदाश्चान्य-दपि योगिशरीरगम् । भजते भेषजीभाव-मिति सर्वौषधिः स्मृता ॥ ६ ॥ तथाहि तीर्थनाथानां, योगभृच्चक्रवर्त्तिनाम् । देहास्थिशकलस्तोमः, सर्वस्वर्गेषु पूज्यते ॥ ७ ॥ " किञ्च-मेघमुक्तमपि वारि यदङ्गसङ्गमात्रान्नदीगतमपि सर्वरोगहरं भवति, तथा विषमूर्च्छिता अपि यदीयाङ्गसञ्जिवातस्पर्शादेव निर्विषी भवन्ति, विषसम्पृक्तमप्यन्नं यन्मुखप्रविष्टमविषं भवति, महाविषमव्याधिबाधिता अपि यद्वचः श्रवणमात्राद्दर्शनमात्राच्च वीतविकारा भवन्ति, एषः सर्वोऽपि सर्वौष-

धिप्रकार इति ५। तथा 'संभिन्ने'त्ति पदैकदेशे पदसमुदायोपचारात् सम्भिन्नश्रोतो लब्धिः सम्भिन्नानि—एकैकशः सर्वविषयैः संगतानि श्रोतांसि—इन्द्रियाणि यस्य स तथा तस्य लब्धिः सम्भिन्नश्रोतो लब्धिः, उक्तञ्च—"सर्वेन्द्रियाणां विषयान्, गृण्हात्येकमपीन्द्रियम्। यत्प्रभावेण सम्भिन्न—श्रोतोलब्धिस्तु सा मता ॥ १ ॥" ६, तथा 'ओहि' त्ति अवधिज्ञानलब्धिर्मूर्त्तद्रव्यविषयं ज्ञानम्, उक्तञ्च—" द्रव्याणि मूर्त्तिमन्त्येव, विषयो यस्य सर्वतः। नैयत्यरहितं ज्ञानं, तत्स्यादवधिलक्षणम् ॥ १ ॥"

७ तथा ऋजुमतिलब्धिरर्द्धतृतीयोच्छ्रयाङ्गुलन्यूनमनुष्यक्षेत्रवर्त्तिसञ्ज्ञिपञ्चेन्द्रियमनोद्रव्यप्रत्यक्षीकरणहेतुर्मनःपर्यायज्ञानभेदः, विपुलमतिलब्धिस्तु विशुद्धतरः सम्पूर्णमनुष्यक्षेत्रवर्त्तिसञ्ज्ञिपञ्चेन्द्रियमनोद्रव्यप्रत्यक्षीकरणहेतुर्मनःपर्यायज्ञानभेद एव, उक्तञ्च—स्यान्मनःपर्ययोज्ञानं, मनुष्यक्षेत्रवर्त्तिनाम्। प्राणिनां समनस्कानां, मनोद्रव्यप्रकाशकम् ॥ १ ॥ ऋजुश्च विपुलश्चेति, स्यान्मनःपर्ययो द्विधा। विशुद्ध्यप्रतिपाताभ्यां, विपुलस्तु विशिष्यते ॥ २ ॥ ८, ९, तथा 'चारण'त्ति अतिशयचरणाश्चारणास्ते च द्विधा, जंघाचारणा विद्याचारणाश्च, अथवाऽन्येऽपि बहुभेदाश्चारणा भवन्ति, तथा चोक्तं योगशास्त्रवृत्तावेव "द्विविधाश्चारणा ज्ञेया, जंघाविद्योत्थशक्तितः। तत्राद्या रुचकद्वीपं, यान्त्येकोत्पातलीलया ॥ १ ॥ वलंतो रुचकद्वीपादेकेनोत्पतनेन ते। नन्दीश्वरे समायान्ति, द्वितीयेन यतो गताः ॥२॥ ते चोर्द्ध्वगत्यामेकेन, समुत्पतनकर्मणा। गच्छन्ति पाण्डुकवनं, मेरुशैलशिरःस्थितम् ॥ ३ ॥ ततोऽपि वलिता एको—त्पातेनायान्ति नन्दनम्। उत्पातेन द्वितीयेन, प्रथमोत्पातभूमिकाम् ॥ ४ ॥ विद्याचारणास्तुगच्छ—न्त्येकेनोत्पातकर्मणा। मानुषोत्तरमन्येन, द्वीपं नन्दीश्वराह्वयम् ॥५॥ तस्मादायान्ति चैकेनोत्पातेनोत्पतिता यतः। यान्त्यायान्त्यूर्द्ध्वमार्गेऽपि तिर्यग्यानक्रमेण ते ॥६॥" अन्येऽपि बहुभेदाश्चारणा भवन्ति,

तद्यथा—आकाशगामिनः पर्यङ्कासनावस्थानिषण्णाः कायोत्सर्गशरीरा वा पादोत्क्षेपनिक्षेपक्रमादिना व्योमचारिणः। केचित्तु जल १ जङ्घा २ फल ३ पुष्प ४ पत्र ५ श्रेण्यग्निशिखा ७ धूम ८ नीहारा ९ वश्याय १० मेघ ११ वारिधारा १२ मर्कटकतन्तु १३ ज्योतीरश्मि १४ पवनाद्यालम्बनगतिपरिणामकुशलाः १५, जलमुपेत्य वापीनिम्नगासमुद्रादिष्वप्कायिकजीवानविराधयन्तो जले भूमाविव पादोत्क्षेपनिक्षेपकुशला जलचारणाः १, भुव उपरि चतुरङ्गुलप्रमिते आकाशे जङ्घानिक्षेपोत्क्षेपनिपुणा जङ्घाचारणाः २, नानाद्रुमफलान्युपादाय फलाश्रयप्राण्यविराधनेन फलतले पादोत्क्षेपनिक्षेपकुशलाः फलचारणाः ३ नानाद्रुमलतागुल्मपुष्पाण्युपादाय पुष्पसूक्ष्मजीवानविराधयन्तः कुसुमतलदलावलम्बनसङ्गतयः पुष्पचारणाः ४, नाना वृक्षगुल्मवीरुल्लतावितानानामबालतरुणपल्लवालम्बनेन पर्णसूक्ष्मजीवानविराधयन्तश्चरणोत्क्षेपपटवः पत्रचारणाः ५, चतुर्योजनशतोच्छ्रितस्य निषधस्य नीलस्य वाऽद्रेष्टंकच्छिन्नां श्रेणिमुपादायोपर्यधो वा पादनिक्षेपोत्क्षेपपूर्वकमुत्तरणावतरणनिपुणाः श्रेणिचारणाः ६, अग्निशिखामुपादाय तेजःकायिकानविराधयन्तः स्वयमदह्यमानाःपादविहारनिपुणा अग्निशिखाचारणाः ७, धूमवर्त्तितिरश्चीनामूर्द्ध्वगां वा आलम्ब्यास्खलितगमनारकन्दिनो धूमचारणाः ८, नीहारमवष्टभ्याप्कायिकपीडामजनयन्तो गतिमसङ्गामश्नुवाना नीहारचारणाः ९, अवश्यायमाश्रित्य तदाश्रयजीवानुपरोधेन यान्तोऽवश्यायचारणाः १०, नभोवर्त्मनि प्रवितंतजलधरपटलपटास्तरणे जीवानुपघातिचङ्क्रमणप्रभवो मेघचारणाः ११, प्रावृषेण्यादिजलधरादेर्विनिर्गतवारिधारावलम्बनेन प्राणिपीडामन्तरेण यान्तो वारिधाराचारणाः १२, कुब्जवृक्षान्तरालभाविनभःप्रदेशेषु कुब्जवृक्षादिसम्बद्धमर्कटकतन्त्वा-

१ प्रचलित प्र०

लम्बनपादोद्धरणनिक्षेपावदाता मर्कटकतन्तूनच्छिन्दन्तो यान्तो मर्कटकतन्तुचारणाः १३, चन्द्रार्कग्रहनक्षत्राद्यन्यतमज्योतिरश्मिसम्बन्धेन भुवीवपादविहारकुशला ज्योतिरश्मिचारणाः १४, पवनेष्वनेकदिग्मुखोन्मुखेषु प्रतिलोमानुलोमवर्त्तिषु तत्प्रदेशावलीमुपादाय गतिमस्खलितचरणविन्यासमास्कन्दन्तो वायुचारणाः १५, इति चारणाश्च सातिरेकानि सप्तदशयोजनसहस्राणि ऊर्द्ध्वमुत्पत्य पश्चात्तिर्यग्गच्छन्ति, उक्तञ्च समवायांगे, "इमीसेणं रयणप्पभाए पुढवीए बहुसमरमणिज्जाओ भूमिभागाओ साइरेगाइं सत्तरसजोअणसहस्साइं उड्ढं उप्पइत्ता तओ पच्छा चारणाणं तिरियगती पवत्तति त्ति" १० । तथा आशीविषलब्धिः –निग्रहानुग्रहसामर्थ्यं यदाह–"तपश्चरणमाहात्म्यात्, गुणादितरतोऽपि वा । आशीविषाः समर्थाः स्युः, निग्रहेऽनुग्रहेऽपि च ॥ १" ॥ ११ । तथा केवलिलब्धि १२, गणधरलब्धि १३, पूर्वधरलब्धि १४, अर्हल्लब्धि १५, चक्रवर्त्तिलब्धि १६, बलदेवलब्धि १७, वासुदेवलब्धयः प्रतीताः १८ । 'खीरमहुसप्पिआसव' त्ति पुण्ड्रेक्षुचारिणीनां गवां लक्षस्य क्षीरमर्द्धार्द्धक्रमेण दीयते यावदेकस्याः क्षीरं तत् चातुरिक्यमित्यागमे गीयते तदिह क्षीरं ज्ञेयम्, मध्वाद्यप्यजीवसम्पातिशर्करादि किंचिद्विशिष्टं द्रव्यं ज्ञेयम्, ततो येषां पात्रपतितं कदन्नमपि क्षीरमधुसर्पीरसवीर्यविपाकं जायते, वचनं वा शारीरमानसदुःखप्राप्तानां देहिनां क्षीरादिवत्सन्तर्पकं भवति, ते क्षीराश्रवा मध्वाश्रवाः सर्पिराश्रवा उपलक्षणत्वादमृताश्रवा इक्षुरसाश्रवाश्च १९ । तथा 'कोट्ठबुद्धि' त्ति कोष्ठबुद्धयः कोष्ठागारिकस्थापितानामसङ्कीर्णानामविनष्टानां भूयसां धान्यबीजानां यथा कोष्ठेऽवस्थानं तथा परोपदेशादवधारितानां श्रोतानामर्थग्रन्थबीजानां भूयसामनुस्मरणमन्तरेणाविनष्टानामवस्थानात् कोष्ठबुद्धयः २० । तथा 'पयाणुसारि' त्ति पदानुसारिणस्त्रिधा अनुश्रोतःपदानुसारिणः १ प्रतिश्रोतःपदानुसारिणः २ उभयपदानुसारिणश्च ३, तत्रा-

दिपदस्यार्थं ग्रन्थं च परत उपश्रुत्य आ अन्त्यपदादर्थग्रन्थविचारणासमर्थपटुतरमतयोऽनुश्रोतःपदानुसारिबुद्धयः, अन्त्यपदस्यार्थं ग्रन्थं च परत उपश्रुत्य ततः प्रातिकूल्येनादिपदादा अर्थग्रन्थविचारपटवः प्रतिश्रोतःपदानुसारिबुद्धयः, मध्यपदस्यार्थं ग्रन्थं च परकीयोपदेशादधिगम्याद्यन्तावधिपरिच्छिन्नपदपदसमूहप्रतिनियतार्थग्रन्थोदधिसमुत्तरणसमर्थासाधारणातिशयपटुविज्ञाननियता उभयपदानुसारिबुद्धयः २१ । १ 'तह बीयबुद्धि' त्ति तथा बीजबुद्धयः उत्कृष्टसुमतीकृते क्षेत्रे क्षित्युदकाद्यनेककारणविशेषापेक्षं बीजमनुपहतं यथाऽनेकबीजकोटीप्रदं भवति तथैवेह ज्ञानावरणादिक्षयोपशमातिशयप्रतिलम्भादेकार्थबीजश्रवणे सति अनेकार्थबीजानां प्रतिपत्तारो बीजबुद्धयः बीजबुद्धिरेकपदार्थावगमादनेकार्थानामवगन्ता, पदानुसारी त्वेकपदावगमात् पदान्तराणामवगन्तेति विशेषः २२ । तथा 'तेयग' त्ति तेजोलेश्यालब्धिः क्रोधाधिक्यात् प्रतिपन्थिनं प्रति सुखेन विशिष्टतपोजन्यानेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थतेजोज्वालामोचनशक्तिः, सा तु यो यमी नित्यं षष्ठं तपः करोति पारणके सनखकुल्माषमुष्ट्या जलचुलुकेन चास्ते तस्य षण्मासान्ते सिद्ध्यतीति २३ । तथा 'आहारग' त्ति आहारकलब्धिः—आहारकशरीरकरणशक्तिः, आहारकशरीरं च हस्तप्रमाणमेकस्मिन् भवे द्विः, संसारे च चतुःकृत्वः, तीर्थकरस्फातिदर्शनाद्यर्थं चतुर्दशपूर्वविदा विधीयते, नानाजीवापेक्षयात्वेकस्मिन् समये तेषां नवसहस्राणि लभ्यते, अन्तरं जघन्यं समयं उत्कृष्टं तु षण्मासाः २४ । तथा शीतलेश्यालब्धिरगण्यकारुण्यवशादनुग्राह्यं प्रति तेजोलेश्याप्रतिघातप्रत्यलंशीततेजोविशेषविमोचनशक्तिः २५ । तथा 'वेउव्विदेहलद्धि' त्ति वैक्रियशरीरकरणशक्तिः साचानेकधा, अणुत्व १ महत्व २ लघुत्व ३

१ सुकृष्टसुमती, प्र०

गुरुत्व ४ प्राप्ति ५ प्राकाम्ये ६ शित्व ७ वशित्व ८ अप्रतिघातित्व ९ अन्तर्धान १० कामरूपित्वादि ११ भेदात्, तत्राणुत्वं-अणुशरीरविकरणं येन बिसछिद्रमपि प्रविशति, तत्र च चक्रवर्त्तिभोगानपि भुंक्ते १, महत्वं-मेरोरपि महत्तरशरीरकरणसामर्थ्यं २, लघुत्वं-वायोरपिलघुतरशरीरता ३, गुरुत्वं-वज्रादपि गुरुतरशरीरतया इन्द्रादिभिरपि प्रकृष्टबलैर्दुःसहता ४, प्राप्तिः-भूमिस्थस्य अङ्गुल्यग्रेण मेरुपर्वताग्रप्रभाकरादिस्पर्शसामर्थ्यं ५, प्राकाम्यं-अप्सु भूमाविव गमनशक्तिः, तथा अप्स्विव भूमावुन्मज्जननिमज्जने ६, ईशित्वं त्रैलोक्यस्य प्रभुता तीर्थंकरत्रिदशेश्वरऋद्धिविकरणं ७, वशित्वं-सर्वजीववशीकरणलब्धिः ८, अप्रतिघातित्वं-अद्रिमध्येऽपि निःसङ्गगमनम् ९, अन्तर्धानं-अदृश्यरूपता १०, कामरूपित्वं-युगपदेव नानाकाररूपविकरणशक्तिः ११ । २६ । तथा 'अक्खीणमहाणस'त्ति अक्षीणमहानसो महानसं-अन्नपाकस्थानं तदाश्रित्वाद्राद्धान्नमपि महानसमुच्यते, ततश्च येषामसाधारणान्तरायक्षयोपशमादल्पमात्रमपि पात्रपतितमन्नं गौतमादीनामिव पुरुषशतसहस्रेभ्योऽपि दीयमानं स्वयमेवाभुक्तं न क्षीयते, ते अक्षीणमहानसाः, उक्तं च-" अक्खीणमहाणसिआभिक्खं जेणाणिअं पुणो तेण । परिभुत्तं चिय खिज्जइ बहुएहिं वि न पुण अन्नेहिं ॥ १ ॥ " उपलक्षणत्वादक्षीणमहालयाश्च ते च यत्र परिमितभूप्रदेशेऽवतिष्ठन्ते, तत्रासङ्ख्याता अपि देवास्तिर्यञ्चो मनुष्याश्च सपरिवाराः परस्परबाधारहितास्तीर्थंकरपर्षदीव सुखमासते इति २७ तथा 'पुलाग' त्ति पुलाकाः-पुलाकलब्धियुक्ता ये संघादिकार्ये चक्रवर्त्तिनमपि चूर्णयेयुः, उक्तं च-भगवतीवृत्तौ " संघाइयाण कज्जे, चुण्णिज्जा चक्कवट्टिमवि जीए । तीए लद्धीइ जुत्तो, लद्धिपुलाओ मुणेयव्वो ॥ १ ॥ " २८ । एवमेता अष्टाविंशतिसङ्ख्या आदिशब्दादन्याश्च मनोवाक्कायबलिलब्ध्यादयो जीवानां शुभशुभतरशुभतमपरिणामवशादसाधारणतपः

प्रभावाच्च नानाविधा लब्धयः—ऋद्धिविशेषा भवन्ति, तत्र प्रकृष्टज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषेण वस्तूद्धृत्यान्तर्मुहूर्त्तेन सकलश्रुतोदध्यवगाहनावदातमनसो मनोवलिनः १। अन्तर्मुहूर्त्तेन सकलश्रुतवस्तूच्चारणसमर्था वाग्बलिनः, अथवा पदवाक्यालङ्कारोपेतां वाचमुच्चैरुच्चारयन्तो अविरहितवाक्क्रमा अहीनकंठा वाग्वलिनः २। वीर्यान्तरायक्षयोपशमाविर्भूतासाधारणकायवलत्वात् प्रतिमया अवतिष्ठमानाः श्रमक्रमविरहिता वर्षमात्रप्रतिमाधरा वाहुवलिप्रभृतयः कायवलिनः ३ । तथा प्रकृष्टश्रुनावरणवीर्यान्तरायक्षयोपशमाविर्भूतासाधारणमहाप्रज्ञर्द्धिलाभा अनधीतद्वादशाङ्गचतुर्दशपूर्वा अपि सन्तो यमर्थं चतुर्दशपूर्वी निरूपयति तस्मिन् विचारकृच्छ्रेप्यर्थेऽतिनिपुणप्रज्ञाः प्राज्ञश्रमणाः, अन्ये अधीतदशपूर्वा रोहिणीप्रज्ञप्त्यादिमहाविद्यादिभिरङ्गुष्ठप्रसेनिकादिभिरल्पविद्यादिभिश्चोपनतानां भूयसीनामृद्धीनामवशगा विद्यावेगधारणाद्विद्याधरश्रमणा इत्यादि । तथा भवसिद्धिअपुरिसाणं, एयाओ हुंति भणिअलद्धीओ । भवसिद्धिअमहिलाणवि, जत्तिय जायंति ते वुच्छं ॥ १ ॥ " अरिहंत १ चक्कि २ केसव ३—वल ४ संभिन्ने य ५ चारणे ६ पुव्वा ७ । गणहर ८ पुलाय ९ आहारगं च १०, न हु भवियमहिलाणं- ॥ २ ॥ अभवियपुरिसाणं पुण, दस पुव्विल्ला उ केवलित्तं च ११ । उज्जुमई १२ विउलमई १३ तेरस एयाउ न हु हुंति ॥ ३ ॥ अभवियमहिलाणं पुण, एयाउ न हुंति भणियलद्धीओ १३ । महुखीरासवलद्धीवि, नेव सेसा उ अविरुद्धा ॥४॥ " इति लब्धिस्वरूपं प्रवचनसारोद्धार—योगशास्त्रवृत्त्याद्यवलोक्य लिखितमिति, गाथाछन्दः ॥ ७१ ॥ अथ सन्निध्याद्यनेकदोषपरिवर्जनं गुणप्रतिपत्तिं चासाधारणां प्रतिपादयन् गाथात्रयेण गच्छत्वमेव समर्थयति—

**जत्थ य संनिहिउक्खड-आहडमाईण नामगहणे वि । पूईकम्मा भीता, आउत्ता कप्पतिप्पेसु ॥ ७२ ॥**

मउए निहुअसहावे, हासदवविवज्जिए विगहमुक्के। असमंजसमकरंते, गोअरभूमट्ठ विहरंति ॥ ७३ ॥
मुणिणं नाणाभिग्गह-दुक्करपच्छित्तमणुचरंताण। जायइ चित्तचमक्कं, देविंदाणं पि तं गच्छं ॥ ७४ ॥

व्याख्या—यत्रेति प्रतिवाक्यं सम्बन्धनीयम्, चः समुच्चये सन्निधिर्निशायामशनादिधारणं, 'उक्खड 'त्ति औद्देशिकं आहृतं—अभ्याहृतं आदिशब्दात्पूतिकर्मव्यतिरिक्ता दोषाः पूतिकर्मणः पृथगुक्तत्वात्, एतेषां नामग्रहणेऽपि सति तथा 'पूतिकम्म 'त्ति पूतिकर्मदोषाच्च यत्र गच्छे मुनयो भीताः—पापभीरुतया भयवन्तो भवन्ति, तत्र सन्निधिविषये किञ्चिन्निशीथैकादशोद्देशकोक्तमुच्यते, " जे भिक्खू असणं वा पाणं वा खाइमं वा साइमं वा दिया पडिगाहेत्ता दिया भुंजइ १, जे भिक्खू असणं वा ४ दिया पडिगाहेत्ता राओ भुंजइ २, जे भिक्खू असणं वा ४ राओ पडिगाहेत्ता दिया भुंजइ ३, जे भिक्खू असणं वा ४ राओ पडिगाहेत्ता राओ भुंजइ ४, चउसुवि भंगेसु आणादिया य दोसा चउगुरुं च पच्छित्तं तवकालविसेसियं दिज्जंति । तथा जे भिक्खू पारियासियं पिप्पलिं वा पिप्पलिचुण्णं वा मिरियं वा मिरियचुण्णं वा सिंगबेरं वा सिंगबेरचुण्णं वा बिलं वा लोणं उब्भियं वा लोणं आहारेइ आहारंतं वा साइज्जइ ॥ अस्य चूर्णिः—पारियासियं णाम—राओ पज्जुसियं अभिण्णा पिप्पली सा एव सुहुमा भेदकया चुण्णा, एवं मिरीयसिंगबेराणंपि सिंगबेरं—सुंठी, जत्थ विसए लोणं णत्थि तत्थ ऊसो पच्चइ तं बिललोणं भन्नति, उब्भेतिमं पुण सयंरुहं जहा सामुद्दं सिंधवं वे "त्यादि । तथा बृहत्कल्पपञ्चमोद्देशकप्रान्तेऽप्युक्तं, यथा " नो कप्पति निग्गंथाण वा २ पारिवासिअस्स आहारस्स जाव तयप्पमाणमित्तमवि भूइप्पमाणमित्तमवि तो-

अविंदुप्पमाणमित्तमवि आहारं आहारित्तए नन्नत्य आगाढेसु रोगायंकेसु ”त्ति एतद्वृत्तिलेशो यथा–“ त्वक्प्रमाणमात्रं नाम-तिलतुपत्रिभागमात्रं तच्चाशनस्य घटते, भूतिप्रमाणमात्रं सक्तुकादीनां, तोयविन्दुप्रमाणमात्रं पानकस्य, इदमेवापवदति आगाढेभ्यो रोगातंकेभ्योऽन्यत्र न कल्पते” तेषु पुनः कल्पते इति सूत्रार्थः। अथ निर्युक्तिविस्तरः–“ परिवासिअआहारस्स मग्गणे”त्यादि वहुस्ति परं किञ्चिल्लिख्यते–“ मिच्छत्ता संचइए, विराहणा सत्तुपाणजाईओ। संमुच्छणा य तक्कण, दवे अ दोसा इमे हुंति ॥ १ ॥ अशनादिपरिवास्यमानं दृष्ट्वा शैक्षोऽन्यो वा मिथ्यात्वं गच्छेत्, उड्डाहं वा कुर्यात् अहो अमी असंचयिकाः, परिवासिते तु संयमात्मविराधना भवति, सक्तुकादिषु धार्यमाणेषु ऊरणिकादयः प्राणजातयः सम्मूर्च्छन्ति, पूपलिकादिषु लालादिसम्मूर्च्छना च भवति, उंदरो वा तत्र तर्कणं–अभिलाषं कुर्वन् पार्श्वतः परिभ्रमन् मार्जारादिना भक्ष्यते, एवमादिका संयमविराधना, आत्मविराधना च, तत्राशनादौ लालाविषः सर्पो लालां मुञ्चेत्, त्वग्विषो वा जिघ्रन् निःश्वासेन विषीकुर्यात् उंदरो वा लालां मुञ्चेत्, द्रवे चाहारे एते वक्ष्यमाणा दोषा भवन्तीत्यादि।” अथ औद्देशिकमोघविभाग-भेदाद् द्विधा, तत्र स्वार्थमग्निज्वालनस्थाल्यारोपणादिकपाकाद्यारम्भे यः कश्चिदागमिष्यति, तस्य दानार्थं यः कियानपि भागः कल्पते तदोघौद्देशिकं विभागौद्देशिकं तु उद्दिष्ट १ कृत २ कर्म्म ३ ति मूलभेदानां प्रत्येकं उद्देशसमुद्देशादेशसमादेशरूपोत्तरभेदैर्द्वादशविधं यथा उद्दिष्टोद्देशं १ उद्दिष्टसमुद्देशं २ उद्दिष्टादेशं ३ उद्दिष्टसमादेशं ४ कृतोद्देशं ५ कृतसमुद्देशं ६ कृतादेशं ७ कृतसमादेशं ८ कर्म्मोद्देशं ९ कर्म्मसमुद्देशं १० कर्मादेशं ११ कर्मसमादेशं १२ इति ॥ उत्तरभेदानां अर्थो यथा समस्तार्थिनां निमित्तं कल्पितमशनाद्युद्देशं १, चरकादीनां निमित्तं विवक्षितमशनादिसमुद्देशं २, निर्ग्रन्थशाक्यतापसगैरिकाजीविकानां

निमित्तं कल्पितमशनाद्यादेशं ३, साधूनां निमित्तं कल्पितमशनादिसमादेशं ४, तत एवं योजना विवाहादिप्रकरणे स्वजनादिभुक्तोद्धरितमोदनतीमनदधिमोदकचूर्णादिभक्तं तदवस्थमेव चतुर्णां पूर्वोक्तानां निमित्तमुद्दिशति—मनसा संकल्पयति वाचा वा निर्द्दिशति गृहस्थः, यथा समस्तभिक्षुकेभ्य इदं दातव्यमित्युद्दिष्टौद्देशिकं १, पाखण्डिकेभ्य इदं दातव्यमिति उद्दिष्टसमुद्देशिकं २, श्रमणेभ्य इद दातव्यमित्युद्दिष्टादेशिकं ३, निर्ग्रन्थेभ्य इदं दातव्यमित्युदिष्टसमादेशिकं ४, तथा विवाहादिप्रकरणे भुक्तोद्धरितमोदनमोदकचूर्णादिकं दधितीमनविकटफाणितनिर्भञ्जनघृतादिना तदर्थमेव मिश्रं करम्बकादिलक्षणं कृत्वा मनसा संकल्पयति, वाचा वा निर्द्दिशति, पूर्वोक्तन्यायेन यथा इदं समस्तभिक्षुकेभ्यो दातव्यमिति कृतोद्देशिकं १, पाखण्डिकेभ्यो दातव्यमिति कृतसमुद्देशिकं २, श्रमणेभ्य इदं दातव्यमिति कृतादेशं ३, निर्ग्रन्थेभ्य इदं दातव्यमिति कृतसमादेशं ४, तथा च विवाहादिप्रकरणोपभुक्तावशेषं यन्मोदकचूर्णमुद्गौदनादिकं तदर्थमेवाग्नितापितगुडादिना पुनर्मोदकादि विधाय मुद्गादीन् वा पुनः संस्कृत्य सचित्तजललवणप्रभृतिद्रव्यसन्मिश्रदध्यादिना करम्बकं वा कृत्वा चतुर्णां पूर्वोक्तन्यायेन संकल्पयति निर्दिशति च, यथा समस्तभिक्षुकेभ्यो दातव्यमिदमिति कर्म्मौद्देशिकं १, पाखण्डिकेभ्यो दातव्यमिति कर्म्मसमुद्देशिकं २, श्रमणेभ्यो दातव्यमिदमिति कर्म्मादेशिकं ३, निर्ग्रन्थेभ्यो दातव्यमिति कर्म्मसमादेशिक४मिति। अथ अभ्याहृत्तमाचीर्णानाचीर्णभेदाद् द्विधा, तत्राचीर्णमपि जघन्यमध्यमोत्कृष्टभेदात् त्रिधा, तत्र महत्याम्भोक्तृजनपङ्क्तौ दूरप्रवेशे तथाविधगृहे वा पङ्क्तिस्थितगृहत्रये वा साधुसङ्घाटकस्य भिक्षां जिघृक्षोस्तद्दानार्थं यद्भक्तादि कश्चिद्धस्तशतादानयति तदुत्कृष्टमाचीर्णाभ्याहृतं तत्रोपयोगसम्भवात्, हस्तपरिवर्त्तरूपं तु जघन्याचीर्णाभ्याहृतं, शेषं तु मध्यममिति। अनाचीर्णं तु हस्तशतात् परतः समानीतं तत्रोप-

योगासम्भवात्, तच्च स्वपरग्रामादिभेदादनेकविधम्, तत्र जलस्थलपथयोरप्कायादिसत्त्वोपमर्दनात् संयमविराधना, जलनिमज्जनमकरतन्तुकण्टकाहिचौरश्वापदज्वराद्युत्पादकश्रमादिभ्यस्त्वात्मविराधना । अथ आधाकर्म्मौद्देशिकांतिमत्रिकमिश्रजाताध्यवपूरकान्तिमद्विकभक्तपानपूतिवादरप्राभृतिकलक्षणाऽविशोधिकोटीनामवयवेन मिलित शुद्धमप्यशनाद्यशुचिलवेनेव पूतिकर्म स्यात्, तच्च सूक्ष्मवादरभेदेन द्विविधम्, तत्र शुद्धमप्यशनादिकमाधाकर्मभक्तादिगन्धवाष्पाग्निधूमैः सह मिलितं सूक्ष्मपूतिस्तच्चाचीर्णत्वादशक्यपरिहारत्वाच्च न दोषकारि । उपकरणभक्तपानभेदेन वादरमपि द्विविधम्, तत्राधाकर्मिकचुल्लीस्थाल्यादिचट्टुककडच्छुकोदुखलिकादिषु गतं शुद्धमप्यशनादि उपकरणपूतिः स्यात्, तत्त स्वयोगेन पृथक् संक्रामितं कल्पते, आधाकर्म्मिकवघारहिंगुलवणजीरकादियुक्तं भक्तपानपूतिः स्यात् । तथा 'आउत्ता कप्पतिप्पेसु'त्ति आयुक्ता–उद्यताः सावधाना वा यत्र गच्छे साधवः स्युः कयोः कल्पश्च त्रेपश्च कल्पत्रेपौ तयोः तत्र कल्पो–भोजनानन्तरं पात्रादिधावनरूपः, स च सामान्येन सर्वत्र कल्पसप्तकरूपः विशेषतस्तु जघन्यमध्यमोत्कृष्टभेदेन त्रिधा, कथं ओदनमण्डकयवक्षोदकुल्माष[1]राजमुद्गचवलकचवलिकावृत्तचणकसामान्यचणकनिष्पावतुवरीमसूरमुद्गाद्यलेपकृदाहारे गृहीते सति एकः पात्रस्य मध्ये कल्पो द्वितीयो वहिः तृतीयस्तु सर्वत्रेति कल्पत्रयरूपो जघन्यः १, शाकपेयायवागू[2]कोद्रवौदनराद्धमुद्गदाल्यादिसौवीरतीमनाद्यल्पलेपकृदाहारे गृहीते सति द्वौ कल्पौ पात्रस्य मध्ये ततो द्वौ वहिः तत एकः सर्वत्रेतिकल्पपञ्चकरूपो मध्यमः २, तथा दुग्धदधिक्षीरेयीतैलघृतगुडपानकादिबहुलेपकृदाहारे गृहीते कल्पत्रयं मध्ये ततो द्वौ वहिः ततो द्वौ सर्वत्रेतिकल्पसप्तकरूप उत्कृष्टः ३, इति वृद्धवादः । हस्ते तु मणिबन्धं

१ राजमाष, प्र० २ यवाकगू प्र०

यावत् कल्पो देय इति । त्रेपो—अपानादिक्षालनलक्षणोऽत्र किञ्चिन्निशीथसूत्रचतुर्थोद्देशकगतं लिख्यते—"जे भिक्खू २ साणुप्पाए उच्चारपासवणभूमिं ण पडिलेहेइ न पडिलिहंतं वा साइज्जइ । अस्य चूर्णिः—साणुप्पाओ णाम—चउभागावसेसचरिमा तीए उच्चारपासवणभूमीओ पडिलेहेयव्वाओ १ ॥ जे भिक्खू २ तओ उच्चारपासवणभूमिओ ण पडिलेहेइ न पडिलेहंतं वा साइज्जइ २ ॥ जे भिक्खू २ खुड्डागंसि थंडिलंसि उच्चारपासवणं परिठवइ परिठवंतं वा साइज्जइ ॥ ३ ॥ अस्य चूर्णिः—रयणिपमाणाओ जं आरओ तं खुड्डं तत्थ जो वोसिरइ तस्स मासलहुं आणादिया दोसा । वित्थारायामेणं थंडिल्लं जं भवे रयणिमेत्तं । चउरंगुलमोगाढं,जहन्नयं तं तु विच्छिन्नं ॥१॥ वित्थारो-पोहत्तं आयामो-दग्घत्तणं रयणी-हत्थो तम्माणे ठितं रयणिमित्तं जस्स थंडिलस्स चत्तारि अंगुला अहे अचित्ता तं चउरंगुलावगाढं एयप्पमाणं जहण्णयं विच्छिण्णं । एत्तो हीणतरागं, खुड्डागं तं तु होइ नायव्वं । अइरेगयरं एत्तो, विच्छिण्णं तं तु नायव्वं ॥२॥ सव्वुक्कोसं विच्छिण्णं बारसजोयणं तं च जत्थ चक्कवट्टिखंधावारो ठिउ त्ति ३ । जे भिक्खू उच्चारपासवणं अविधीए परिठवेइ परिठवंतं वा साइज्जइ । अस्य चूर्णिः—थंडिलसामायारीं ण करेइ एस अविधीए वोसिरति, तस्स मासलहुं आणाइया य दोसा । इमा विधी सागारियसंरक्खणट्ठा उड्ढमहोतिरियं च दिसावलोगो कायव्वो अह ण करेति तो दवअप्पकलुसादिएहिं उड्डाहो भवइ इच्चाइ ४ । जे भिक्खू २ उच्चारपासवणं परिठवित्ता ण पुंछइ ण पुंछंतं वा साइज्जइ । अस्य चूर्णिः—ण पुंच्छति—ण णिल्लेवेइ । ५ । जे भिक्खू २ उच्चारपासवणं परिठवित्ता कट्ठेण वा कलिंचेण वा अंगुलियाए वा सलागाए वा पुछति पुंच्छंतं वा साइज्जइ । अस्य चूर्णिः—कलिंचो वंसकप्परी अण्णतर कट्ठघडिया सलागा तस्स मासलहुं ६ । जे भिक्खू उच्चारपासवणं परिठवित्ता णायमइ णायमंतं वा साइ-

ज्जइ। अस्य चूर्णिः–उच्चारे वोसिरिज्जमाणे अवरसं पासवणं भवति त्ति तेण गहियं पासवणं पुण काउं असागारिए णायमंति जहा उच्चारे ॥ ७ । जे भिक्खू उच्चारपासवणं परिठवित्ता । तत्थेव आयमति आयमंतं वा साइज्जइ । अस्य चूर्णिः–तत्थेव त्ति थंडिले जत्थ सण्णा वोसिरिया ८ । जे भिक्खू २ उच्चारपासवणं परिठवित्ता अतिदूरे आयमति आयमंतं वा सातिज्जति, अस्य चूर्णिः–अतिदूरे–हत्थसयपमाणमेत्ते ९ । जे भिक्खू २ उच्चारपासवणं परिठवित्ता परं तिण्हं णावापूराणं आयमति आयमंतं वा साइज्जइ । अस्य चूर्णिः–णाव त्ति पसती ताहि तिहिं आयमियव्वं, अण्णे भणंति अंजली पढमं णावापूरं तिहा करेति अवयुवे विकिंचेति, वितियं णावापूरं तिहाकरेत्ता सव्वावयवे विसोहति, ततियं णावापूरं तिहाकरेत्ता तिण्णिकप्पे करेइ सुद्ध अतो परं जइ तो मासलहुं । उच्छोलणुप्पिलावणपडणं तसपाणतरुगणाईणं । कुरकुअदोसा य पुणो, परेण तिण्हायमंतस्स ॥ १ ॥ उच्छोलणा पधोविम्स दुल्लभा सुगई तारिसयस्स । उच्छोलणा दोसो भवति, पिपीलगादीणं वा पाणाण उप्पिलावणा हवति, खिल्लरंधे तसा पडंति, तरुगणपत्ताणि वा पुप्फाणि वा फलाणि वा पडंति, आदिगहणेणं पुढविआउतेउवाऊण य । यत्राग्निस्तत्र वायुना भवितव्यमिति कृत्वा कुरकुयकरणे य वाउसत्तं भवति, कारणे अतिरित्तेण आयमे वितिअपदसेहरोहगहरिसा आगारसोअवादीसु उत्थाणोरुहपाणे । परेण तिन्हायमेज्जासि । जेण वा णिल्लेवं णिग्गंधं भवतीत्यर्थः ॥ १० ॥ कारणे तु मूत्रेणापि कल्पते । उक्तं च बृहत्कल्पपञ्चमोद्देशके "णो कप्पइ निग्गंथाण वा निग्गंथीण वा अण्णमण्णस्स मोयं आइयत्तए वा आयमित्तए वा णण्णत्थ गाढेसु अगाढेसु वा रोगायंकेसु ॥ नो कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां वाऽन्योन्यस्य–परस्परस्य मोकं–मूत्रं वा पातुं वा आचमितुं वा, किं सर्वथैव नेत्याह–

गाढा अहिविषविसूचिकादयः अगाढाश्च ज्वरादयो रोगातंकास्तेभ्योऽन्यत्र न कल्पते, तेषु कल्पत इत्यर्थः । ” इति कल्प-त्रेपस्वरूपं । यद्वा कल्पत्रेपशब्देनात्र चैत्रमासाद्यस्वाध्यायिकोत्तरणानन्तरकर्त्तव्यः परम्परागम्यः कश्चित्कर्त्तव्यविशेष इति । तथा यत्र गच्छे मृदुकाः—मार्दवोपेता विनयादिसमन्विता इत्यर्थः निभृतस्वभावा—आलोचनादौ रहस्येऽपि प्रोक्ते गम्भीर-स्वभावाः निश्चलचित्ता वा हास्यं—सामान्येन द्रवः—परिहासः परोत्प्रासनं परोपहास इत्यर्थः हास्यं च द्रवश्च हास्यद्रवौ ताभ्यां विवर्ज्जिता—रहिताः, विरुद्धा कथा विकथास्ताभिर्मुक्ता—विवर्ज्जिताः असमञ्जसं—गुर्वाज्ञाभङ्गाद्यन्यायमकुर्वन्तः एवं-विधाः सन्तः साधवो गोचरभूम्यर्थं तात्स्थात्तद्व्यपदेश इति गोचरभूमिलभ्याऽशनाद्यर्थं न निष्प्रयोजनमित्यर्थः, अत्र विभ-क्तिलोपः प्राकृतत्वात् । अथवा गोचरभूमयः, ऋज्वी १ गत्वा प्रत्यागतिका २ गोमूत्रिका ३ पतंगवीथिका ४ पेटा ५ अर्द्धपेटा ६ अभ्यन्तरशम्बूका ७ बहिःशंबूका ८ रूपाः क्षेत्राभिग्रहभेदविशेषास्तासां, ‘अट्ठ’त्ति अष्टकं तस्मिन् विहरन्ति—विचरन्ति भिक्षार्थमिति शेषः, तथा यत्र गच्छे नानाभिग्रहान् दुःकरप्रायश्चितं चानुचरतो मुनीन् क्वचिद् द्वितीयादेः (८-३-१३४) इति प्राकृतसूत्रेण द्वितीयार्थे षष्ठीविधानात् दृष्ट्वाति शेषः देवेन्द्राणामपि किं पुनरन्येषां चित्तचमत्कारः—अन्तःकरणा-श्चर्यं जायते, हे गौतम ! स गच्छः । अत्राधिकारादभिग्रहप्रायश्चितस्वरूपं किञ्चिदुच्यते, तत्राभिग्रहाः—द्रव्य १ क्षेत्र २ काल ३ भाव ४ भेदाच्चतुर्विधास्तद्यथा—लेवडमलेवडं वा, अमुगं दवं व अज्ज घेत्थामि । अमुगेण व दवेणं, अह दवाभिग्गहो नाम ॥ १ ॥ लेपकृतं—झगारिप्रभृतिकमलेपकृतं वा वल्लचणकादि अमुकं वाऽनिर्द्दिष्टनामकं मण्डकादि द्रव्यमद्य ग्रहीष्यामि, अमु-केन वा दर्वीकुन्तादिना दीयमानमहं ग्रहीष्ये, अथायं द्रव्याभिग्रहो नाम—भिक्षाग्रहणविषयप्रतिज्ञाविशेष इति, द्रव्या-

भिग्रहाः ॥ १ ॥ अट्ठ उ गोयरभूमी, एलुगविक्खंभमित्तगहणं व । सग्गामपरग्गामे एवइयघरा य खित्तम्मि ॥ २ ॥ अष्टौ गोचरभूमयो भवन्ति, ताश्चैताः—ऋज्वी १ गत्वा प्रत्यागतिका २ गोमूत्रिका ३ पतंगवीथिका ४ पेटा ५ अर्द्धपेटा ६ अभ्यन्तर-शंबूका ७ बहिःशंबूका ८। तत्र यस्यामेकां दिशमभिगृह्योपाश्रयान्निर्गतः (ग्रं० ३०००) प्राञ्जलेनैव पथा समश्रेणिव्यवस्थितगृह-पङ्क्तौ भिक्षां परिभ्रमन् तावद्याति यावत् पङ्क्तौ चरमगृहं, ततो भिक्षामगृण्हन्नेव अपर्याप्तेऽपि प्राञ्जलयैव गत्या प्रतिनिवर्त्तते सा ऋज्वी १, यत्र पुनरेकस्यां गृहपङ्क्तौ परिपाट्या भिक्षमाणः क्षेत्रपर्यन्तं गत्वा प्रत्यागच्छन् पुनर्द्वितीयस्यां गृहपङ्क्तौ भिक्षामटति सा गत्वा प्रत्यागतिका, गत्वा प्रत्यागतिर्यस्यां सा गत्वा प्रत्यागतिकेति व्युत्पत्तेः २, यस्यां तु वामगृहाद्दक्षिण-गृहे दक्षिणगृहाच्च वामगृहे भिक्षां पर्यटति, सा गोः—बलीवर्दस्य मूत्रणं गोमूत्रिका, तदाकारा गोचरभूमिरपि गोमूत्रिका ३, यस्यां तु त्रिचतुरादीनि गृहाणि विमुच्याग्रतः पर्यटति सा पतंगवीथिका, पतङ्गः—शलभस्तस्येव या वीथिका—पर्यटनमार्गः सा पतङ्ग-वीथिका, पतङ्गो हि गच्छन्नुत्प्लुत्योत्प्लुत्यानियतया गत्या गच्छति एवं गोचरभूमिरपि या पतंगोड्डयनाकारा सा पतङ्गवीथिकेति भावः ४, यस्यां तु साधुः क्षेत्रं पेटावच्चतुरस्रं विभज्य मध्यवर्त्तीनि च गृहाणि मुक्त्वा चतसृष्वपि दिक्षु समश्रेण्या भिक्षामटति सा पेटा, अर्द्धपेटाऽप्येवमेव नवरमर्द्धपेटासदृशसंस्थानयोर्दिग्द्वयसम्बद्धयोर्गृहश्रेण्योरत्र पर्यटति, ६, तथा शम्बूकः—शङ्खस्तद्वद्या वीथी सा शम्बूका सा द्वेधा, अभ्यन्तरशम्बूका बहिःशम्बूका च, तत्र यस्यां क्षेत्रमध्यभागात् शङ्खवृत्तया परिभ्रमणभङ्ग्या भिक्षां गृण्हन् क्षेत्रबहिर्भागमागच्छति सा अभ्यन्तरशम्बूका ७, यस्यां तु क्षेत्रबहिर्भागात् तथैव भिक्षामटन् मध्यभागमायाति सा बहिःशम्बूका ८, तथा एलुकः—उदुम्बरस्तस्य विष्कम्भ—आक्रमणं तन्मात्रेण मया ग्रहणं कर्त्तव्यमिति कस्याप्यभिग्रहो भवति यथा श्री-

मन्महावीरस्वामिनः, तथा स्वग्रामे वा परग्रामे वा एतावन्ति गृहाणि मया प्रवेष्टव्यानीत्येष क्षेत्रविषयोऽभिग्रह इति क्षेत्राभिग्रहः ॥ २ ॥ काले अभिग्गहो पुण, आई मज्झे तहेव अवसाणे । अप्पत्ते सइकाले, आई विइओ अ चरमम्मि ॥ ३ ॥ काले कालविषयोऽभिग्रहः, पुनरयं आदौ मध्ये तथैव चावसाने भिक्षावेलायाः एतदेव व्याचष्टे, अप्राप्ते भिक्षाकाले यत्पर्यटति स आदाविति आद्यभिक्षाकालविषयः प्रथमोऽभिग्रहः, यत्तु सति प्राप्ते भिक्षाकाले चरति स द्वितीयो मध्यभिक्षाकालविषयोऽभिग्रहः, यत्पुनश्चरमेऽतिक्रान्ते भिक्षाकाले पर्यटति, सोऽवसानविषयोऽभिग्रहः, कालत्रयेऽपि गुणदोषानाह—दिन्तगपडिच्छगाणं, हविज्ज सुहुमंपि मा हु अचियत्तं । इय अप्पत्ते अइए, पवत्तणं मा ततो मज्झे ॥४॥ ददत्प्रतीच्छकयोरिति भिक्षादातुरगारिणो भिक्षाप्रतीच्छकस्य च वनीपकादेर्माभूत सूक्ष्ममप्यचियत्तं—अप्रीतिकमित्यस्माद्धेतोरप्राप्तेऽतीते च भिक्षाकालेऽटनं न श्रेय इति गम्यते, ' पवत्तणं मा ततो मज्झे 'त्ति अप्राप्ते अतीते वा पर्यटतः प्रवर्त्तनं पुरःकर्मपश्चात्कर्मादिर्माभूत् एतेन हेतुना मध्ये—प्राप्तभिक्षाकाले पर्यटन्तीति कालाभिग्रहाः ॥ ४ ॥ उक्खित्तमाइचरगा, भावजुया खलु अभिग्गहा होंति । गायंतो व रुदंतो, जं देइ निसन्नमाई वा ॥ ५ ॥ उत्क्षिप्तं पाकपिठरात्पूर्वमेव दायकेनोद्धृतं तद्ये चरंति—गवेषयन्ति ते उत्क्षिप्तचरकाः, आदिशब्दान्निक्षिप्तचरका संख्यादत्तिकाः पृष्टलाभिकाः दृष्टलाभिकाः इत्यादयो गृह्यन्ते, एते गुणिनः कथञ्चिदभेदाद्भावयुताः खल्वभिग्रहा भवन्ति भावाभिग्रहा इति भावः, यद्वा गायन् यदि दास्यति तदा मया गृहीतव्यम्, एवं रुदन् वा निषण्णादिर्वा आदिग्रहणादुत्थितः सम्प्रति स्थितो यद्ददाति तद्विषयोऽभिग्रहः स सर्वोऽपि भावाभिग्रह उच्यते ॥५॥ तथा ओसक्कणअहिसक्कण—परम्मुहालंकिएयरो वावि । भावन्नयरेण जुओ, अहभावाभिग्गहो नाम ॥ ६ ॥ अवष्वष्कन्—अपसरणं कुर्वन्नभिष्वष्कन्—

सम्मुखमागच्छन् पराङ्मुखः प्रतीतः अलङ्कृतः कटकेयूरादिभिः इतरो वाऽनलङ्कृतः पुरुषो यदि दास्यति तदा मया ग्राह्य-मित्येतेषां भावानामन्यतरेण भावेन युतः अथायं भावाभिग्रहो नामेतिभावाभिग्रहाः ॥ ६ ॥ एते च द्रव्यादयश्चतुर्विधा अप्य-भिग्रहास्तीर्थकरैरपि यथायोगमाचीर्णत्वान्मोहमदापनयनप्रत्यलत्वाच्च गच्छवासिनां तथाविधसहिष्णुपुरुषविशेषापेक्षया महत्याः कर्म्मनिर्ज्जराया निबन्धनं प्रतिपत्तव्या इति । तथा प्रायश्चित्तं दशधा, तद्यथा–आलोयणारिहं १, पडिकमणारिहं २, तदुभयारिहं ३, विवेगारिहं ४, उस्सग्गारिहं ५, तवारिहं ६, छेदारिहं ७, मूलारिहं ८, अणवट्ठप्पारिहं ९, पारंचियारिहं १० । तत्थ आहाराइगहणे तहा उच्चारसज्झायभूमिचेइयजइवंदणत्थं पीढफलगपच्चप्पणत्थं कुलगणसंघाइकज्जत्थं वा हत्थसया बाहिं निग्गमे आलोअणारिहं । तत्र आलोचनां–गुरुनिवेदनां विशुद्धये यदर्हति भिक्षाचर्याद्यतीचारजातं तदालोचनार्हं तद्विशोधकमालोचनालक्षणं प्रायश्चित्तमप्युपचारादालोचनार्हमित्युक्तं एवमन्यान्यपि १, पडिक्कमणं–मिच्छादुक्कडदाणं तं च सहसा अणाभोगेण वा गुत्तिसमिइपमाए, गुरुआसायणाए, विणयभंगे, इच्छाकाराइसामायारीअकरणे, लहुसमुसावायअदिन्नादाणमुच्छासु, अविहीए खासखुयजंभियवाएसु, कंदप्पहासविकहाकसायविसयाणुसंगेसु, आभोएणवि अप्पेसु नेहभयसोगवाउसाईसु य कीरइ । तत्थ लहुसमुसावायपया पयला १ उल्ले २ मरुए ३, पच्चक्खाणे अ ४ गमण ५ परिआए ६ । समुद्देस ७ संखडीओ ८, खुड्डग ९ परिहारिअ १० मुहीओ ११ ॥१॥ अवसगमणे १२ दिसासु १३, एगकुले चेव १४ एगदव्वे अ १५ । एए सव्वेवि पया, लहुसमुसाभासणे हुंति ॥२॥ इतिगाहादुगुत्ता पनरस निसीहपीढाउ णेया, अणिकाचिए लहुसमुसावाओ भवइ, णिकाचिए बादरो मुसावाओ त्ति । लहुसअदिण्णं अणणुन्नविय तणडगलछारलेवाइगहणं । लहुसमु-

च्छा सिज्जायरकप्पडगाइसु वसहिसंथारयठाणाइसु वा ममत्तं २ । सहसाणाभोगेण वा संभमभयाईहिं वा सव्ववयाईयारेसु उत्तरगुणइयारेसु वा दुविचिंतियाइसु वा कएसु मीसं पच्छित्तं ३ । पिंडोवहिसेज्जाई गीएण उवउत्तेण गहियं पच्छा असुद्धं ति नायं अहवा कालद्धाईयं अणुगयत्थंमि य गहियं कारणगहियं वा उव्वरियं भत्ताई विगिंचंतो सुद्धो ४ । काउस्सग्गो हत्थसया बाहिं गमणागमणे विहारे नावानईसंतरे सावज्जसुमिणाइसु अ ५ । तव पच्छित्तं निव्विगाइयं जीयकप्पाउ णेयं ६ । तवगव्विय व-असमत्थतवदुद्दमाइसु पंचरायाइपज्जायछेदणं छेदो ७ । आउट्टियाए पंचिंदियवहे दप्पमेहुणे अदिण्णमुसापरिग्गहेणं उक्कोसाभिक्खसेवणे उसन्नयाविहारे इच्चाइसु मूलं, भिक्खुस्स नवमदसमावत्तीए वि मूलं चेव दिज्जइ ८ । सपक्खे परपक्खे वा निरवेक्खपहारे अत्थादाणहत्थलंवदाणाईसु य अणवट्ठप्पो कीरइ, तत्थ अत्थायाणं दव्वोवज्जणकारणं अट्ठंगनिमित्तं तस्स पउजणं हत्थालंवदाणं पुण पुरगेहाइअसिवे तप्पसमणत्थमभिचारमंतादिप्पओगो, एयं पुण पच्छित्तं उवज्झायस्सेव दिज्जइ ९ । तित्थयराईणं बहुसो आसायगो रायवहगो रायग्गमहिसिपडिसेवओ सपरपक्खकसायविसयपदुट्ठो थीणर्द्धीनिद्दावंतो अन्नोन्नं कुव्वाणो य पारंचियमावज्जइ, एयं च पच्छित्तं आयरिअस्सेव दिज्जइ १० । तत्थ तवअणवट्ठप्पो तवपारंचिओ य पढमसंघयणे चउद्दसपुव्वधरम्मि वोच्छिन्ना । सेसा पुण लिंगखेत्तकालअणवट्ठप्पपारंचिया जाव तित्थं ताव वट्टिहिंति । एयस्स वित्थरो जीयकप्पाउ णेउ त्ति । त्रीण्यपि गाथाछन्दांसि ७२ । ७३ । ७४ ॥

अथ वृत्तसप्तकेन पृथिव्यादिषड्जीवघटनामाश्रित्य प्रस्तुतमेवाह–

**पुढविदगअगणिमारुअ–वाउवणस्सइतसाण विविहाणं । मरणंते वि न पीडा, कीरइ मणसा तयं गच्छं ७५**

व्याख्या-पृथिवी च-पृथ्वीकायः, दकं च-उदकं, अग्निश्च-वह्निः, मारुतवायुश्च म्रियन्ते क्षुद्रजन्तवोऽनेनेति मरुत् मरुदेव मारुतः स चासौ वायुः-अतिचञ्चलत्वेन क्षुद्रसत्त्वोपद्रवकारी समीरणः, वनस्पतिश्च-प्रत्येकसाधारणरूपः, त्रसाश्चद्वित्रिचतुःपञ्चेन्द्रियरूपाः ते तथा तेषां विविधानां-अनेकप्रकाराणां पीडा-वाधा मरणान्तेऽपि यत्र गच्छे मनसा उपलक्षणत्वाद्वचनकायाभ्यां च न क्रियते मुनिभिः, हे गौतम! स गच्छः स्यादिति। गाथाछन्दः॥ क्वचिद्वाउत्ति पदं न दृश्यते, तत्र व्याख्यानं सुकरमेव, छन्दस्तु उपगीतिः, तल्लक्षणं चेदं-"आर्या द्वितीयकेऽर्द्धे, यद्गदितं लक्षणं तत् स्यात्। यद्युभयोरपि दलयो-रुपगीतिं तां मुनिर्ब्रूते॥ १॥" इति॥ ७५॥

खज्जूरिपत्तमुंजेण, जो पमज्जे उवस्सयं। नो दया तस्स जीवेसु, सम्मं जाणाहि, गोअमा!॥ ७६॥

व्याख्या-'खज्जूरिपत्तमुंजेण'त्ति खर्जूरीपत्रमयप्रमार्ज्जन्या मुञ्जमयवहुकर्या वा यः साधुरुपाश्रयं-वसतिं प्रमार्जयति तस्य मुनेः जीवेषु दया-घृणा नास्ति, हे गौतम! त्वं सम्यग् जानीहीति। अनुष्टुप् छन्दः॥ ७६॥

जत्थ य वाहिरपाणिअ-बिंदूमित्तंपि गिम्हमाईसु। तन्हासोसिअपाणा, मरणे वि मुणी न गिण्हंति॥७७॥

व्याख्या-हे गौतम! यत्र गच्छे वाह्यपानीयविंदुमात्रमपि-सचित्तजललेशमात्रमपि ग्रीष्मादिषु कालेषु तृष्णया-द्वितीयपरिषहेण शोपिताः-ग्लानिं प्रापिताः प्राणा-इन्द्रियादयो येषां ते तृष्णाशोषितप्राणाः मरणान्तेऽपि मुनयः-साधवो न गृण्हन्ति क्षुल्लकवत्, तथाहि-उज्जेणी नयरी, तत्थ धणमित्तो नाम वणियओ, तस्स पुत्तो धणसम्मानाम, सो धणमित्तो पुत्तेण सह पव्वइओ, अण्णया य ते साहू विहरंता मज्झन्हसमए एलगत्थपुरपहे पडिया, सो वि खुड्डओ तिसाए अभिभूओ सणियं स-

णियं एइ, सो वि से खंतओ सिणेहाणुरागेण पच्छओ एइ। साहुणो वि पुरओ वच्चंति, अंतरा य नई समावडिया, खंतएण भणियं, एहि पुत्ता पियसु पाणियं, नित्थरेसु आवइं, पच्छा आलोएज्जसि, सो न इच्छति, खंतो नईउत्तिन्नो चिंतेइ, अओसरामि मणागं जावेस खुड्डगो पाणियं पियइ मा ममासंकाए न पाही, एगंते पडिच्छइ जाव खुड्डो पत्तो नईं, दढव्वययाए संसारयाए ण पीयं। अन्ने भणंति–अईव बाहिओ हंत पिवामि पाणियं पच्छा गुरुमूले पायच्छित्तं पडिवज्जिस्सामि त्ति उक्खित्तो जलंजली, अह से चिंता जाया कहमेए हलहलए जीवे पियामि, जओ "एक्कम्मि उदगबिंदुम्मि, जे जीवा जिणवरेहिं पण्णत्ता। ते पारेवयमित्ता, जंबुद्दीवे न माएज्जा॥१॥" जत्थ जलं तत्थ वणं, जत्थ वणं तत्थ निच्छओ तेऊ। तेऊ वाउसहगओ, तसा य पच्चक्खया चेव २॥ ता हंतुण परपाणे, अप्पाणं जो करेइ सप्पाणं। अप्पाणं दिवसाणं, कएण नासेइ अप्पाणं॥३॥" तथा जा अहिंसा भगवई सा अपरिमियनाणदंसणधरेहिं सीलगुणविणयतवसंजमनायगेहिं तित्थंकरेहिं सव्वजगवच्छलेहिं तिलोगमहिएहिं जिणचंदेहिं सुट्ठुदिट्ठा १ ओहिजिणेहिं विण्णाया २ उज्जुमईहिं विदिट्ठा ३ विउलमईहिं विइया ४ पुव्वधरेहिं अहीया ५ वेउव्वीहिं पइण्णा ६ आभिणिवोहियनाणीहिं ७ सुयनाणीहिं ८ मणपज्जवनाणीहिं ९ केवलणाणीहिं १० आमोसहिपत्तेहिं ११ खेलोसहिपत्तेहिं १२ जल्लोसहिपत्तेहिं १३ विप्पोसहिपत्तेहिं १४ सव्वोसहिपत्तेहिं १५ वीयबुद्धीहिं १६ कुट्ठबुद्धीहिं १७ पयाणुसारीहिं १८ संभिण्णसोएहिं १९ सुयधरेहिं २० मणबलिएहिं २१ वयबलिएहिं २२ कायबलिएहिं २३ नाणबलिएहिं २४ दंसणबलिएहिं २५ चरित्तबलिएहिं २६ खीरासवेहिं २७ महुआसवेहिं २८ सप्पियासवेहिं २९ अक्खीणमहाणसिएहिं ३० चारणेहिं ३१ विज्जाहरेहिं ३२ चउत्थभत्तिएहिं ३३ एवं जाव छम्मासभत्तिएहिं ३४ उक्खित्तचरएहिं ३५ निक्खित्तचरएहिं ३६ अंतचर-

एहिं ३७ पंतचरएहिं ३८ लूहचरएहिं ३९ समुदाणचरएहिं ४० अणगिलाएहिं ४१ मोणचरएहिं ४२ संसट्ठकप्पिएहिं ४३ तज्जायसंसट्ठकप्पिएहिं ४४ उवनिहिएहिं ४५ सुद्धेसणिएहिं ४६ संखादत्तिएहिं ४७ दिट्ठलाभिएहिं ४८ अदिट्ठलाभिएहिं ४९ पुट्ठलाभिएहिं ५० आयंबिलेहिं ५१ पुरिमड्ढिएहिं ५२ एकासणिएहिं ५३ निविइएहिं ५४ भिण्णपिंडवातिएहिं ५५ परिमियपिंडवाइएहिं ५६ अंताहारेहिं ५७ पंताहारेहिं ५८ अरसाहारेहिं ५९ विरसाहारेहिं ६० लूहाहारेहिं ६१ अंतजीविहिं ६२ पंतजीविहिं ६३ लुहजीविहिं ६४ तुच्छजीविहिं ६५ उवसंतजीविहिं ६६ पसंतजीविहिं ६७ विवित्तजीविहिं ६८ अक्खीरमहुसप्पिएहिं ६९ अमज्जमंसासिएहिं ७० पठाणाइएहिं ७१ पडिमट्ठाइएहिं ७२ ठाणुक्कडिएहिं ७३ वीरासणिएहिं ७४ णेसज्जिएहिं ७५ दंडायइएहिं ७६ लगंडसाइएहिं ७७ एगपासगेहिं ७८ आयावएहिं ७९ अप्पाउएहिं ८० अणिट्ठुभएहिं ८१ अकंडुयएहिं ८२ अधुयकेसमंसुलोमनखेहिं ८३ सव्वगायपडिकम्मविप्पमुक्केहिं ८४ समणुचिण्णा एवं भावं तेण अइसंविग्गेण न पीयं उत्तिन्नो नई, आसाए छिन्नाए नमोकारं झायंतो सुहपरिणामो कालगओ देवेसु उववन्नो। ओहीपउत्तो जाव खुड्डगसरीरं पासइ तहिमणुपविट्ठो खंतमणुगच्छइ। खंतो वि एइ त्ति पत्थिओ। पच्छा देवेण अनुकंपाए साहूणं गोकुलाणि विउव्वियाणि, साहूवि तासु वइयासु तक्काईणि गिण्हंति, वइया परंपरएण जणवयं पत्ता। पच्छिमाए वइयाए देवेण विंटिया पम्हुसाविया जाणावणनिमित्तं, एगो य साहू निवत्तो तयवत्थं पेच्छइ विंटियं नत्थि वइया, आगंतूण साहियं तेण, पच्छा नायं·तेहिं सा दिव्वं ति। इत्थंतरे देवेण साहू वंदिया खंतो न वंदिओ, तेहिं पुच्छिओ किमेयं न वंदसि, तओ सव्वं परिकहेइ नियवइयरं, भणइ अ अहं एएण परिचत्तो वयलोवेण दोग्गइभायणं कओ आसि, तुममेयं पियाहि जंपंतेण जइ तं पा-

णियं पियंतो तो संसारं भमंतो, देवो पडिगओ त्ति । हे गौतम ! स गच्छो ज्ञेय इति शेषः । गाथाछन्दः ॥ ७७ ॥

इच्छिज्जइ जत्थ सया, बीयपएणा वि फासुयं उदयं ।
आगमविहिणा निउणं, गोअम ! गच्छं तयं भणियं ॥ ७८ ॥

व्याख्या—इष्यते—वाञ्छ्यते यत्र गणे सदा—नित्यं उत्सर्गपदापेक्षया द्वितीयपदं—अपवादपदं तेनापि किम्पुनरुत्सर्गपदेनेत्यपि
शब्दार्थः, प्रगता असवः—प्राणा यस्मात् तत्प्रासुकं किं उदकं—जलं तच्च उत्कालत्रयोत्कलनादिप्रकारेण प्रासुकी स्यात् ननु
तप्तमात्रम् । यत उक्तम् दशवैकालिके—“गिहिणो वेयावडियं, जायया जीववत्तिया । तत्तानिवुडभोइत्तं, आउरस्सरणाणि य
॥ १ ॥” तप्तानिर्वृतभोजित्वं तप्तं च तदनिर्वृतं चाऽत्रिदण्डोद्वृतं च उदकमिति विशेषणान्यथानुपपत्त्या गम्यते, तद्भोजित्वं मिश्र-
सचित्तोदकभोजित्वमित्यर्थः । आगमविधिना—सिद्धान्तोक्तप्रकारेण निपुणं यथा स्यात् तथा हे गौतम ! स गच्छो भणितः,
प्राकृतत्वान्नपुंसकत्वं, अत्र पानीयमाश्रित्य आगमोक्तं किञ्चिल्लिख्यते—तत्राऽऽचाराङ्गे “से भिक्खू वा भिक्खुणी वा जाव स-
माणे सेज्जं पुण पाणगजायं जाणिज्जा तं० उस्सेइमं वा १ संसेइमं वा २ चाउलोदगं वा ३ अन्नतरं वा तहप्पगारं पाणगजातं
अहुणा धोतं अणंबिलं अवोक्कंतं अपरिणतं अविद्धत्थं अफासुयं जाव णो पडिगाहेज्जा । अह पुणेवं जाणेज्जा चिरा धोयं
अंबिलं वुक्कंतं परिणयं विद्धत्थं फासुयं जाव पडिगाहेज्जा” सभिक्षुर्गृहपतिकुलं पानकार्थं प्रविष्टः सन् यत्पुनरेवं जानीयात् त-
द्यथा—‘उस्सेइमं व’ त्ति पिष्टोत्स्वेदनार्थमुदकम् १ ‘संसेइमं व’ त्ति तिलधावनोदकं यदि वा अरणिकादिसंस्विन्नधावनोदकम् २
‘चाउलोदगं’ ति तंदुलधावनोदकम् ३ अत्र
तत्र प्रथमद्वितीयोदके प्रासुके एव तृतीयचतुर्थे तु मिश्रे कालान्तरेण परिणते भवतः ।

च त्रयोऽनादेशास्तद्यथा–बुद्बुदापगमो वा १ भाजनलग्नबिन्दुशोषो वा २ तंदुलपाको वा ३ आदेशस्त्वयं उदकस्वच्छीभावः, तदेवमाद्युदकं अनाम्लं–स्वस्वभावादचलितं अव्युत्क्रान्तं–अपरिणतमविध्वस्तमप्रासुकं यावन्न प्रतिगृह्णीयादिति। एतद्विपरीतं तु ग्राह्यमित्याह–अहेत्यादि सुगमम्। तथा "से भिक्खू वा २ जाव समाणे सेज्जं पुण पाणगजायं जाणेज्जा, तं जहा–तिलोदगं वा ४ तुसोदगं वा ५ जवोदगं वा ६। आयामं वा ७ सोवीरं वा ८ सुद्धवियडं वा ९ अण्णतरं वा तहप्पगारं पाणगजायं पुव्वामेव आलोएज्जा आउसो त्ति वा भगिणि त्ति वा दाहिसि मे एत्तो अण्णतरं पाणगजायं से सेवं वदंतस्स परो वएज्जा, आउसंतो समणा तुमं चेवेदं पाणगजायं पडिग्गहेण वा उस्सिंचियाणं ओवत्तिआणं वा गिण्हाहि तहप्पगारं पाणगजायं सयं वा गिण्हेज्जा परो वा से दिज्जा फासुयं लाभे संते पडिगाहेज्जा।" तिलोदकं–तिलैः केनचित्प्रकारेण प्रासुकीकृतमुदकमेवं तुषैर्यवैर्वा तथा आचाम्लं–अवश्यामं, सौवीरं–आरनालं, शुद्धविकटं–प्रासुकमुदकं, अन्यद्वा तथाप्रकारं द्राक्षापानकादिपानकजातं–पानीयसामान्यं पूर्वमेवालोकयेत्–पश्येत्। ततश्च दृष्ट्वा तं गृहस्थं अमुक इति वा भगिनीति वा इत्यामन्त्र्यैवं ब्रूयात्, यथा दास्यसि मे किञ्चित् पानकजातं? स परस्तं भिक्षुमेवं ब्रूयात् यथाऽऽयुष्मन्! श्रमण! त्वमेवेदं पानकजातं स्वकीयेन पतद्ग्रहेण टोप्परिकया कटाहकेन वोत्सिच्याऽपवृत्य वा पानकभण्डकं गृहाण। स एवमभ्यनुज्ञातः स्वयं गृह्णीयात् परो वा तस्मै दद्यात् तदेवं लाभे सति परिगृह्णीयादिति। "से भिक्खू वा २ जाव समाणे सेज्जं पुण पाणगजातं जाणिज्जा तं० अंबपाणगं वा १ अंबाडगपाणगं वा २ कविट्ठपाणगं वा ३ माउलिंगपाणगं वा ४ मुद्दियापाणगं वा ५ दालिमपाणगं वा ६ खज्जूरपाणगं वा ७ णालिएरपाणगं वा ८ करीरपाणगं वा ९ कोलपाणगं वा १० आमलगपाणगं वा ११ चिंचापाणगं वा १२ अन्नतरं

वा तहप्पगारं पाणगजायं सअट्ठियं सकणुयं सबीयं अस्संजए भिक्खुपडियाए छब्बेण वा दूसेण वा चालगेण वा आवलियाणं परपीलियाणं परिस्सावियाणं आहट्टुदलएज्जा तहप्पगारं पाणगजातं अफासुयं लाभे संते णो पडिगाहेज्जा।" 'अंबपाणगं वे'त्यादि सुगमम्। नवरं 'मुद्दिया' द्राक्षा कोलानि–बदराणि एतेषु च पानकेषु द्राक्षाबदराम्लिकादिकतिचित्पानकानि तत्क्षणमेव सम्मर्द्य क्रियन्ते, अपराणि त्वाम्राम्बाटकादिपानकानि द्वित्रादिदिनसन्धानेन विधीयन्त इत्येवंभूतं पानकजातं, तथाप्रकारमन्यदपि सास्थिकं सहास्थिना–कुलकेन यद्वर्त्तते, तथा सह कणुकेन–त्वगाद्यवयवेन यद्वर्त्तते, तथा बीजेन सह यद्वर्तते, अस्थिबीजयोश्चामलकादौ प्रतीतो विशेषः, तदेवंभूतं पानकजातमसंयतो–गृहस्थो भिक्षुप्रतिज्ञया–भिक्षुमुद्दिश्य साध्वर्थं द्राक्षादिकमामर्द्य वंशत्वनिष्पादितच्छबकेन वा तथा दूसं–वस्त्रं तेन वा तथा 'चालगेणं'ति गवादिवालधित्रालनिष्पन्नचालकेन सुघरिकागृहकेन वेत्यादिनोपकरणेनाऽस्थ्याद्यपनयनार्थं सकृदापीड्य पुनः पुनः परिपीड्य तथा परिश्राव्य–निर्गाल्याहृत्य च साधुसमीपं दद्यादित्येवं प्रकारं पानकजातमुद्गमदोषदुष्टं सत्यपि लाभे न प्रतिगृण्हीयादिति वृत्तौ, चूर्णौ तु गोलविसए अंबगाणि फालित्ता सुक्कविज्जंति तेसिं धोवणं अंबपाणगं एवं अंबाडगाइणं सव्वेसिं धोवणं रसमीसं वा इत्यस्ति। अयं चाचारांगोक्तः सर्वस्मिन् काले साधूनां साधारणः पानकग्रहणविधिः, तथा वर्षाकालमाश्रित्य श्रीमत्कल्पेऽप्युक्तं, तद्यथा–"वासावासं पज्जोसवियाणं निच्चभत्तियस्स भिक्खुस्स कप्पंति सव्वाइं पाणगाइं पडिगाहित्तए १ वासावा० चउत्थभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए तं जहा उस्सेइमं १ संसेइमं २ चाउलोदगं ३। वासावा० छट्ठभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं तं० तिलोदगं १ तुसोदगं २ जवोदगं ३। ३। वासावा० अट्ठमभत्ति० तओ पाणगाइं तं० आयामं १ सोवीरं २

सुद्धवियडे ३ । ४ । वासावा० विकिट्ठभत्तियस्स भिक्खुस्स कप्पइ एगे उसिणवियडे पडिगाहित्तए से वि य णं असित्थे नो वि य णं ससित्थे ।५। वासावा० भत्तपडिआइक्खियस्स कप्पइ एगे उसिणवियडे पडिगाहित्तए, से वि य णं असित्थे नो चेव णं ससित्थे, से वि य णं परिपूए नो चेव णं अपरिपूए, से वि य णं परिमिए नो चेव णं अपरिमिए । ६ । ” ‘सवाइं पाणगाइं ’ति पानैषणोक्तानि वक्ष्यमाणानि वा नवोत्स्वेदिमानि, तत्रोत्स्वेदिमं–पिष्टजलं पिष्टभृतहस्तादिक्षालनजलं वा १, संस्वेदिमं संसेकिमं वा–यत्पर्णाद्युक्काल्यसीतोदकेन सिच्यते तत् २, चाउलोदकं–तंदुलधावनोदकं ३, तिलोदकं–महाराष्ट्रादिषु निस्त्वचितनिलधावनं जलं ४, तुषोदकं–व्रीह्यादिधावनं ५, यवोदकं–यवधावनं ६, आयामको–ऽवश्रावणं ७, सौवीरं–काञ्जिकं ८, शुद्धविकटं–उष्णोदकं वर्णान्तरादिप्राप्तं शुद्धजलं वा केवलोष्णं तु उसिणवियड इत्यनेनैवोक्तमिति । ‘एगे उसिणविअडे ’ त्ति । एकमुष्णोदकं तदप्य सिक्थं, यतः प्रायेणाष्टमोर्ध्वं तपस्विनो देहं देवताधितिष्ठति, भत्तपडि० प्रत्याख्यातभक्तस्यानशनिन इत्यर्थः। तथा हरीतकीप्रभृतिफलादिभिरपि जलं प्रासुकं स्यात्। यत उक्तं श्रीबृहत्कल्पप्रथमोद्देशकभाष्ये–“तुवरे फले अ पत्ते, रुक्खसिलातप्पमद्दणाईसु। पासंदणे पवाए, आयवतत्ते वहेयवहे ॥ १ ॥” अध्वनि वर्त्तमानैः काञ्जिकादिप्रासुकपानकाऽप्राप्तावीदृशानि पानकानि गृहीतव्यानि। तद्यथा–तुंबरफलानि–हरीतकीप्रभृतीनि तुंबरपत्राणि–पलाशपत्रादीनि तैः परिणामितं, तथा ‘रुक्खे’ त्ति वृक्षकोटरकटुकफलपत्रादिपरिणामितं, एवंविधस्याभावे ‘सिल’ त्ति शिलाजतुभावितमित्यादि, एतच्च निशीथभाष्यपीठेऽप्यस्ति इति। गाथाछन्दः ॥ ७८ ॥

**जत्थ य सूलविसूइय–अन्नयरे वा विचित्तमायंके। उप्पण्णे जलणुज्जालणाइ, कीरइ न मुणि तयं गच्छं ७९**

व्याख्या–यत्र च गणे शूले विशूचिकायां प्राकृतत्वाद्विभक्तिलोपः, अन्यतरस्मिन् वा विचित्रे–ऽनेकविधे आतंके–रोगे उत्पन्ने–प्रादुर्भूते सति ज्वलनस्य–अग्नेरुज्ज्वालनं ज्वलनोज्ज्वालनं तदादि न क्रियते, उत्सर्गपदेनेति शेषः, हे मुने ! गौतम ! स गच्छः स्यादिति । गीतिछन्दः ॥ ७९ ॥

**बीयपएणं सारूविगाइसड्ढाइमाइएहिं च । कारिंती जयणाए, गोयम ! गच्छं तयं भणियं ॥ ८० ॥**

व्याख्या–यत्र गच्छे मुनयो द्वितीयपदेन–उत्सर्गपदापेक्षयाऽपवादपदेनेत्यर्थः, सारूपिकेणादिशब्दात् सिद्धपुत्रकेण पश्चात्कृतेन च, तत्र मुण्डितशिराः शुक्लवासपरिधायी कच्छामबध्नान अभार्याको भिक्षां हिण्डमानः सारूपिकः, सभार्याकोऽभार्याको वा शुक्लाम्बरधरो मुण्डितशिराः सशिखाकोऽदण्डकोऽपात्रकः सिद्धपुत्रकः, त्यक्तचारित्रवेषः पश्चात्कृतः, तथा श्राद्धेन–गृहीताणुव्रतेन आदिशब्दात् सम्यग्दृष्टिना यथा भद्रकेन च तृतीयादिशब्दादन्यतीर्थिकेन तद्गृहस्थेन च शूले विशूचिकायामन्यतरस्मिन् वा रोगे उत्पन्ने ज्वलनोज्ज्वालनादीति पूर्वगाथात आकर्षणीयम्, यतनया पूर्वपूर्वस्याभावे उत्तरोत्तरेणेत्यर्थः । 'कारिंति' त्ति कारयन्ति अत्र छन्दोभङ्गनिवृत्तये प्राकृतत्वादीर्घः, एवमन्यत्रापि ज्ञेयम् । अथवा निशीथपीठोक्ता यतना सा च तत एवावसेया । हे गौतम ! स गच्छो भणित इति । गाथाछन्दः ॥ ८० ॥

**पुप्फाणं बीयाणं, तयमाईणं च विविहदव्वाणं । संघट्टणपरिआवण, जत्थ न कुज्जा तयं गच्छं ॥८१॥**

व्याख्या–पुष्पाणि द्विविधानि जलजानि स्थलजानि च, तत्र जलजानि सहस्रपत्रादीनि, स्थलजानि कोरण्टकादीनि, तान्यपि प्रत्येकं द्विविधानि वृंतबद्धानि अतिमुक्तकादीनि नालबद्धानि च जातिपुष्पप्रभृतीनि, तत्र यानि नालबद्धानि तानि सर्वाणि संख्ये-

यजीवानि यानि तु वृंतवद्धानि तानि असंख्येयजीवानि, स्नुह्यादीनां पुष्पाणि अनन्तजीवानीति तेषां तथा बीजानि शालिगोधूमयवादीनि तेषां, त्वगादीनां च आदिशब्दात् मूलपत्राङ्कुरफलादीनां विविधद्रव्याणां—नानाविधसजीवपिण्डानां वनस्पतिकायभेदानामित्यर्थः। सङ्घट्टनं—मनाक्स्पर्शनं परितापनं—सर्वतः पीडनम्, यत्र न कुर्यात् मुनिनिकरः स गच्छः स्यादिति शेषः। कारणे तु वृक्षादीनां सङ्घट्टादिकं कुर्यादपि यदुक्तमाचाराङ्गद्वितीयश्रुतस्कन्धतृतीयेर्याध्ययनस्य द्वितीयोद्देशके "से भिक्खू वा भिक्खुणी वा गामाणुगामं दूइज्जमाणे अंतरा से वप्पाणि वा फलिहाणि वा पागाराणि वा तोरणानि वा अग्गलाणि वा अग्गलपासगाणि वा गड्डाउ वा दरीउ वा सति परक्कमे संजयामेव परक्कमेज्जा णो उज्जुयं गच्छेज्जा, केवली बूया आयाणमेयं, से तत्थ परक्कममाणे पयलेज्ज वा पवडेज्ज वा से तत्थ पयलमाणे पवडमाणे वा रुक्खाणि वा गुच्छाणि वा गुम्माणि वा लयाउ वा वल्लीउ वा तणाणि वा गहणाणि वा हरियाणि वा अवलंबिय अवलंबिय उत्तरेज्जा, जे तत्थ पाडिपहिया उवागच्छंति ते पाणी जाएज्जा, ततो संजयामेव अवलंबिय अवलंबिय उत्तरेज्जा, ततो संजयामेव गामाणुग्गामं दूइज्जेज्जा।' अस्य वृत्तिः—स भिक्षुर्ग्रामान्तराले यदि वप्रादिकं पश्येत् ततः सत्यन्यस्मिन् संक्रमे तेन ऋजुना पथा न गच्छेत्, यतस्तत्र गर्त्तादौ निपतन् सचित्तवृक्षादिकमवलम्बेत् तच्चायुक्तम्, अथ कारणिकस्तेनैव पथा गच्छेत् कथंचित्पतितश्च गच्छगतो वल्यादिकमप्यवलम्ब्य प्रातिपथिकं हस्तं वा याचित्वा संयत एव गच्छेदि"ति। गाथाछन्दः ॥ ८१ ॥ अथ हास्यादित्याजनद्वारेण प्रस्तुतमेव विशेषयति—

**हासं खेड्डाकंदप्प, नाहियवायं न कीरए जत्थ। धावणडेवणलंघण—ममकारावण्णउच्चरणं ॥ ८२॥**

व्याख्या—हास्यं—हसनं खेला—क्रीडा शारिचतुरङ्गद्यूताद्या अन्त्याक्षरिकाप्रहेलिकादानादिजनिता वा इन्द्रजालकगोलकखे-

लनाद्या वा 'कंदप्प' त्ति कान्दर्पीभावना विभक्तिलोपः प्राकृतत्वात्, उपलक्षणत्वादाभियोगी २ किल्विषिक्या ३ सुरी ४ मोही ५ भावनाश्च, एतासां भावनानां व्याख्यानगाथा उत्तराध्ययनप्रान्तोक्ता यथा—" कंदप्पकोकुयाइं, तह सीलसहावहासविगहाहिं । विम्हावितो अ परं, कंदप्पं भावणं कुणइ ॥ १ ॥" कन्दर्पो—अट्टट्टहासहसनं, अनिभृतालापाश्च गुर्वादिनापि सह निष्ठुरवक्रोक्त्यादिरूपाः कामकथा—कामोपदेशकामप्रशंसाश्चेति, काकुच्यं द्विधा, कायकौकुच्यं वाक्कौकुच्यं च, तत्राद्यं यत् स्वयमहसन्नेव भ्रूनयनवदनादि तथा करोति यथाऽन्यो हसति, यत्तु तज्जल्पति येनान्यो हसति, तथा नानाजीवविरुतानि मुखातोद्यवाद्यनं च विधत्ते तद्वाक्कौकुच्यं ततः कन्दर्पश्च कौकुच्यं च कन्दर्पकौकुच्ये कुर्वन्निति शेषः। 'तह'त्ति येन प्रकारेण परस्य विस्मयः उपजायते तथा यच्छीलं च—फलनिरपेक्षा वृत्तिः स्वभावश्च परविस्मयोत्पादनाभिसन्धिनैव तत्तन्मुखविकारादिकं स्वरूपं हासश्च—अट्टाट्टहासादिः विकथाश्च—परविस्मापकविविधोल्लापरूपाः शीलस्वभावहासविकथास्ताभिर्विस्मापयंश्च—विस्मितं कुर्वन् परम्—अन्यं कन्दर्पयोगात् कन्दर्पाः प्रस्तावाद्देवास्तेषामियं तेषूत्पत्तिहेतुतया कान्दर्पी तां भाव्यते—आत्मसात्क्रीयते आत्मा अनयेति भावना, तद्भावाभ्यासरूपा तां करोति, एवमुत्तरत्रापि भावनीयम् ॥ १ ॥ " मंताजोगं काउं, भूईकम्मं च जे पउंजंति । सायरसइड्ढिहेउं अभिओगं भावणं कुणइ ॥ २ ॥" मंत्राणामायोगो—व्यापारो मन्त्रायोगस्तं यदि वा मन्त्राश्चयोगाश्च—तथाविधद्रव्यसंयोगाः सूत्रत्वान्मन्त्रयोगं तत्कृत्वा—विधाय व्यापार्य वा भूत्वा—भस्मना उपलक्षणत्वान्मृदा सूत्रेण कर्परक्षार्थं वसत्यादिपरिवेष्टनं भूतिकर्म्म च शब्दात् कौतुकादि च यः प्रयुक्ते, किमर्थं सातं—सुखं रसा—माधुर्यादयः, ऋद्धिरुपकरणादिसंपदेता हेतवो यस्मिन् प्रयोजने तत्सातरसर्द्धिहेतुको भावः, साताद्यर्थं मन्त्रयोगादि प्रयुङ्क्ते एवमाभियोगीं भावनां करोति

इह च मानादिहेतोरभिधानं निःस्पृहस्यापवादत एतत् प्रयोगे प्रत्युत गुण इति ख्यापनार्थम् ॥२॥ "नाणस्स केवलीणं, धम्मायरियस्स संघसाहूणं । माई अवण्णवाई, किब्बिसियं भावणं कुणइ ॥ ३ ॥ " ज्ञानस्य–श्रुतज्ञानादेः केवलिनां धर्माचार्यस्य–धर्मोपदेशकस्य सङ्घस्य साधवश्च सङ्घसाधवस्तेषां अवर्णवादीति सर्वत्र योज्यम्, तत्रावर्णो–अश्लाघारूपः, स चैवम्–श्रुतज्ञानस्य पुनस्त एव कायास्तान्येव व्रतानि तावेव च प्रमादाप्रमादाविहाभिधेयौ मोक्षाधिकारिणां च किं ज्योतिर्योनिपरिज्ञानेनेत्यादि भाषते केवलिनां च ज्ञानदर्शनयोः क्रमेणोपयोगे परस्परावरणता युगपदुपयोगे चैक्यापत्तिरिति, धर्माचार्यस्य जात्यादिभिरविशेषणादीनि सङ्घस्य च बहवः श्वसृगालादिसंघास्तत्कोऽयमिह सङ्घः, साधूनां च नाऽमी परस्परमपि सहन्ते तत एव देशान्तरयायिनोऽन्यथा त्वेकत्रैव संहत्या तिष्ठेयुरत्वरितगतितया मन्दयायिनोऽत एव वकवृत्तिरियमेषामित्यादि, एवंविधमवर्णं वदितुं शीलमस्येत्यवर्णवादी माया–अस्य स्वभावविनिगूहनादिरूपास्तीति मायी किल्बिषिकीं भावनां करोतीति ॥ ३ ॥ "अणुबद्धरोसपसरो, तह य निमित्तंमि होइ पडिसेवी । एएहि कारणेहिं, आसुरियं भावणं कुणइ ॥ ४ ॥ " अनुबद्धः–सततमव्यवच्छिन्नो रोषस्य–क्रोधस्य प्रसरो–विस्तारो यस्य सोऽनुबद्धरोषप्रसरः नित्यं विरोधशीलतया पश्चादननुतापितया क्षामणादावपि मनःप्रसत्त्यप्राप्त्या चेति भावः, तथा च निमित्तं–अतीतानागतवर्त्तमानभेदात् त्रिधा तस्मिन् विषये भवति जायते प्रतिसेवीति–अवश्यं प्रतिसेवकोऽपुष्टालम्बनेऽपि तदासेवनात् । एताभ्यां कारणाभ्यामासुरीं भावनां करोति ॥ ४॥ मोहीभावनामाह–"सत्थग्गहणं विसभक्खणं च, जलणं च जलपवेसो अ । अणयारभंडसेवा, जम्मणमरणाणि बंधंति ॥ ५ ॥ " शस्त्रं–खड्गादि तस्य ग्रहणं–स्वीकरणमुपलक्षणत्वादस्यात्मनि वधार्थं व्यापारणं शस्त्रग्रहणं, विषं–तालपुटादि तस्य भक्षणं विष-

भक्षणं, चः समुच्चये, ज्वलनं भस्मीकरणमात्मन इति गम्यते, जले प्रवेशो–निमज्जनं जलप्रवेशश्चशब्दोऽनुक्तभृगुपातादिपरिग्रहार्थः, आचारः–शास्त्रविहितो व्यवहारस्तदभावोऽनाचारस्तेन भाण्डस्य–उपकरणस्य सेवा–हास्यमोहादिभिः परिभोगोऽनाचारभाण्डसेवा गम्यमानत्वादेतानि कुर्वन्तो यतयो जन्ममरणान्युपचारात् तद्धेतुकर्म्माणि वध्नन्ति–आत्मना श्लेषयन्ति, सङ्क्लेशजनकत्वेन शस्त्रग्रहणादीनामनन्तभवहेतुत्वात्। एतेन चोन्मार्गमतिपत्त्या सन्मार्गविप्रतिपत्तिराक्षिप्ता, तथा चार्थतो मोहभावनोक्ता। यतस्तल्लक्षणं–"उम्मग्गदेसओ मग्गनासओ, मग्गविप्पडीवत्ती। मोहेण य मोहित्ता, सम्मोहं भावणं कुणइ॥ १॥" ननु पूर्वं तद्विधदेवगामित्वं भावनाफलमुक्तं, इह त्वन्यदेवास्या इति कथं न विरोधः उच्यते–अनन्तरफलमाश्रित्य तदुक्तमिदमेव तु परम्पराफलं सर्वभावनानामिति ज्ञापनार्थमित्थमुपन्यासस्तथा चोक्तं–" एयाउ भावणाओ, भावित्ता देवदुग्गइं जंति। तत्तोय चुया संता, पडंति भवसागरमणंतं ॥१॥" इति॥ तथा 'नाहियवाय'मिति नास्तिकवादः–चार्वाकमताऽभ्युपगम इत्यर्थः, सूत्रे नपुंसकत्वं प्राकृतत्वात्। यत्र न क्रियते इति क्रियाभिसम्बन्धः प्रत्येकं विधेयः। अत्र नास्तिकवादे च पूर्वपक्षसमाधाने यथा–"संति पंच महब्भूया, इहमेगेसिमाहिया। पुढवी १ आऊ १ तेऊ ३, वाऊ ४ आगासपंचमा ॥१॥ संति–विद्यन्ते महान्ति च तानि भूतानि च महाभूतानि सर्वलोकव्यापित्वात् महत्त्वं विशेषणं, अनेन च भूताभाववादिनिराकरणं द्रष्टव्यम्, इहास्मिन् लोके एकेषां भूतवादिनामाख्यातानि–प्रतिपादितानि तत्तीर्थकृता तैर्वा भूतवादिभिराख्यातानि स्वयमङ्गीकृतान्यन्येषां च प्रतिपादितानि, तानि चामूनि, तद्यथा–पृथिवी कठिनरूपा १ आपो द्रवलक्षणाः ३ तेज उष्णरूपं ३ वायुश्चलनलक्षणः ४ आकाशं शुषिरलक्षणमिति ५ तच्च पञ्चमं येषां तानि तथा एतानि च आगोपालाङ्गनाप्रसिद्धत्वात् प्रत्यक्षप्रमाणावसेयत्वाच्च न

कैश्चिदप्यपन्होतुं शक्यानीति ॥१॥ एए पंचमहब्भूआ तब्भो एगो त्ति आहिआ। अह तेसिं विणासेणं, विणासो होइ देहिणो ॥ २ ॥ एतान्यनन्तरोक्तानि पृथिव्यादीनि पञ्चमहाभूतानि यानि तेभ्यः कायाकारपरिणतेभ्य एकः कश्चिच्चिद्रूपो भूताव्यतिरिक्तः आत्मा भवति, न भूतेभ्यो व्यतिरिक्तोऽपरः कश्चित्परपरिकल्पितः परलोकयायी सुखदुःखभोक्ता जीवाख्यः पदार्थोऽस्तीत्येवमाख्यातवन्तस्ते, ननु च यदि भूतव्यतिरिक्तोऽपरः कश्चिदात्माख्यः पदार्थो न विद्यते कथं तर्हि मृत इति व्यपदेश इत्याशंक्याह–अथैषां कायाकारपरिणतौ चैतन्याभिव्यक्तौ सत्यां तदूर्द्ध तेषामन्यतमस्य विनाशे अपगमे वायोस्तेजसो वोभयोर्वा देहिनो देवदत्ताख्यस्य विनाशापगमो भवति, ततश्च मृत इति व्यपदेशः प्रवर्त्तते, न पुनर्जीवापगमः।" इति द्वितीयाङ्गोक्तो नास्तिकमतपूर्वपक्षः, अत्र समाधानार्थं श्रीदशवैकालिकनिर्युक्तितः किञ्चिदुच्यते–"अत्थि त्ति दारमहुणा, जीवो अत्थि त्ति विज्जए नियमा। लोगाययमयघायत्थ–मुच्चए तत्थिमो हेऊ ॥ १ ॥ लोकायतमतघातार्थ–नास्तिकाभिप्रायनिराकरणार्थं ॥ १ ॥ जो चिंतेइ सरीरे, नत्थि अहं स इव होइ जीवु त्ति। न हु जीवम्मि असंते, संसयउप्पायओ अन्नो ॥ २ ॥ यश्चिन्तयति शरीरे नास्त्यहं स एव चिन्तयिता भवति जीवः, न हु–यस्माज्जीवेऽसति मृतदेहादौ संशयोत्पादकोऽन्यः प्राणादिश्चैतन्यरूपत्वात् संशयस्य ॥ २ ॥ एतदेव भावयति–जीवस्स एस धम्मो, जा ईहा अत्थि नत्थि वा जीवो। थाणुमणुस्साणुगया, जह ईहा देवदत्तस्स ॥ ३ ॥ जीवस्यैषः धर्म्मः–स्वभावः या ईहा–सदर्थपर्यालोचनात्मिकाऽस्ति नास्ति वा जीव इति, लोकप्रसिद्धं निदर्शनमाह–स्थाणुमनुष्यानुगता–किमयं स्थाणुः किं वा पुरुष इत्येवं रूपा यथेहा देवदत्तस्य जीवतो धर्म्मः ॥३॥ प्रकारान्तरेण तदेवाह–सिद्धं जीवस्स अत्थित्तं सद्दादेवाणुमीयए। नासओ भुवि भावस्स सद्दो हवइ केवलो ॥४॥ सिद्धं–प्रति-

ष्ठितं जीवस्य–उपयोगलक्षणस्यास्तित्वं शब्दादेव जीव इत्यस्मादनुमीयते कथमेतदेवमित्याह–नासतो–ऽविद्यमानस्य भुवि–पृ-
थिव्यां भावस्य–पदार्थस्य शब्दो भवति वाचकः खरविषाणादिशब्दैर्व्यभिचारमाशंक्याह–केवलः–शुद्धोऽन्यपदासंस्पृष्टः खरा-
दिपदसंस्पृष्टाश्च विषाणादिशब्दाः ॥ ४ ॥ एतद्विवरणार्थैवाह–अत्थि त्ति निव्विगप्पो, जीवो नियमाउ सद्दओ सिद्धी । कम्हा
सुद्धपयत्ता, घडखरसिंगाणुमाणाओ ॥५॥ अस्तीति निर्विकल्पो जीवः, निर्विकल्प इति–निःसन्दिग्धः नियमात्प्रतिपत्त्यपेक्षया,
शब्दतः सिद्धिः–वाचकाद्वाच्यप्रतिपत्तितः, एतदेव प्रश्नद्वारेणाह–कस्मादेतदेवमित्याह, शुद्धपदत्वात्–केवलपदत्वाज्जीवशब्दस्य घ-
टखरशृङ्गानुमानादनुमानशब्दः दृष्टान्तवचनः, घटखरशृङ्गदृष्टान्तादिति प्रयोगार्थः, प्रयोगस्तु मुख्येनार्थेनार्थवान् जीवशब्दः शुद्ध-
पदत्वात् घटशब्दवत्, यस्तु मुख्येनार्थेनार्थवान्न भवति स शुद्धपदमपि न भवति, यथा खरशृङ्गशब्दः ॥५॥ पराभिप्रायमाशंक्य
परिहरन्नाह–सुद्धपयत्ता सिद्धी, जइ एवं सुन्नसिद्धि अम्हंपि । तं न भवइ संतेणं जं सुन्नं सुन्नगेहं व ॥ ६ ॥ उक्तवच्छुद्धपद-
त्वात् सिद्धिर्यदि जीवस्य एवं तर्हि शून्यसिद्धिरस्माकमपि शून्यनष्टशब्दस्यापि ·शुद्धपदत्वादित्यभिप्रायः, अत्रोत्तरमाह–तन्न
भवति, यदुक्तं परेण कुत इत्याह सता–विद्यमानेन पदार्थेन यत्–यस्मात् शून्यं शून्यमुच्यते किंवत्तदित्याह–शून्यगृहमिव यथा-
हि–देवदत्तेन रहितं शून्यगृहमुच्यते निवृत्तो घटो नष्ट इति । न त्वनयोर्जीवशब्दस्य जीववदविशिष्टं वाच्यमस्तीति ॥ ६ ॥
प्रकारान्तरेणास्तित्वपक्षमेव समर्थयन्नाह– मिच्छा भवे उ सव्वत्था, जे केइ पारलोइया । कत्ता चेवोपभुत्ता य, जइ जीवो न वि-
ज्जइ ॥ ७ ॥ पारलौकिका दानादयः कर्त्ता चैव कर्मण उपभोक्ता च तत्फलस्य । एतदेव स्पष्टतरमाह–पाणिदया तव नियमा
बंभं दिक्खा य इंदियनिरोहो । सव्वनिरत्थयमेयं जइ जीवो न विज्जइ ॥ ८ ॥ लोइआ वेइआ चेव तहा सामाइआ विऊ ।

निच्चो जीवोपि हू देहा इइ सव्वे ववत्थिया ॥ ९ ॥ लोकिका–इतिहासादिकर्त्तारः वेदिकाश्चैव–त्रैवेद्यवृद्धास्तथा सामायिका–त्रिपिटिकादिसमयवृत्तयो विद्वांसः–पण्डिताः नित्यो जीवो नाऽनित्य एवं पृथग्देहात् इत्येवं सर्वे व्यवस्थिता नान्यथा । ९ । एतदेव व्याचष्टे । लोए अच्छिज्जभिज्जो, वेए सपुरीसदड्ढगसियालो। समए अहमासि गओ, तिविहो दिवाइसंसारो ॥ १० ॥ लोके अच्छेद्योऽभेद्य आत्मा पठ्यते । यथोक्तं गीतासु 'अच्छेद्योऽयमभेद्योऽय–मविकार्योऽयमुच्यते । नित्यः सततगः स्थाणूरचलोऽयं सनातनः । १ ।' इत्यादि, तथा वेदे सपुरीषो दग्धः शृगालः पठ्यत इति । यथा–शृगालो वै एष जायते यः सपुरीषो दह्यते ।' अथ अपुरीषो दह्यतेऽक्षौधुका अस्य प्रजाः प्रादुर्भवन्तीत्यादि, तथा समयेऽहमासीद् गज इति पठ्यते । तथा च बुद्धवचनं 'अहमासं भिक्षवो ! हस्ती षड्दन्तः शंखसन्निभः । शुकः पञ्जरवासी च शकुंतो जीवजीवक ॥ १ ॥' इत्यादि । तथा त्रिविधो दिव्यादिसंसारः कैश्चिदिष्यते । देवमानुषतिर्यग्भेदेन आदिशब्दाच्चतुर्विधः कैश्चिन्नारकाधिक्येन । १० । पुनः प्रकारान्तरेणाह–अत्थि सरीरविधाता, पडिनिअताकारमाइभावाओ । कुंभस्स जह कुलालो, सो मुत्तो कम्मसंजोगा ॥ ११ ॥ फरिसेण जहा वाऊ, गिज्झइ कायसंसिओ । नाणाइहिं तहा जीवो, गिज्झइ कायसंसिओ ॥ १२ ॥ कायसंश्रितो–देहसङ्गतः ॥ अणिंदियगुणं जीवं, दुन्नेयं मंसचक्खुणा । सिद्धा पासंति सव्वन्नू, नाणसिद्धा य साहुणो ॥ १३ ॥ " तथा च पूर्वाचार्यकृतगाथा–" जीवो अणाइनिहणो, अविणासी अक्खओ धुवो निच्चं । दव्वट्ठयाइनिच्चो, परियायगुणेहि य अणिच्चो ॥ १ ॥ जह पंजराउ सउणी, घडाउ वयराणि कंचुआ पुरिसो । एवं न चेव भिन्नो, जीवो देहाउ संसारी ॥ २ ॥ जह खीरोदगतिलतिल्ल–कुसुमगंधाण दीसइ न भेओ । तह चेव न जीवस्सवि, देहादच्चंतिओ भेओ ॥ ३ ॥ संकोअविकोएहि अ, जहक्कमं देहलोअ-

मित्तो वा। हत्थिस्स व कुंथुस्स व, पएससंखा समा चेव ॥४॥ कालो जहा अणाई, अवि णासी होइ तिसु वि कालेसु। तह जीवोवि अणाई, अविणासी तिसु वि कालेसु ॥५॥ गयणं जहा अरूवी, अवगाहगुणेण घिप्पई तं तु। जीवो तहा अरूवी, विन्नाणगुणेण घित्तवो ॥६॥ जह पुढवी अविणट्ठा, आहारो होइ सवदवाणं। तह आहारो जीवो, नाणाईणं गुणगणाणं ॥७॥ अक्खयमणंतमउलं, जह गयणं होइ तिसु वि कालेसु। तह जीवो अविणासी, अवट्ठिओ तिसु वि कालेसु ॥ ८ ॥ जह कणगाओ कीरंति, पज्जवा मउडकुंडलाईया। दवं कणगं तं चिय, नामविसेसो इमो अन्नो ॥ ९ ॥ एवं चउगईए, परिब्भमंतस्स जीवकणगस्स। नामाइं बहुविहाइं, जीवदवं तयं चेव ॥ १० ॥ जह कम्मयरो कम्मं, करेइ भुंजेइ सो फलं तस्स। तह जीवो वि अ कम्मं, करेइ भुंजेइ तस्स फलं ॥ ११ ॥ उज्जोवेउं दिवसं, जह सूरो वच्चई पुणो अत्थं। नय दीसइ सो सूरो, अन्नं खित्तं पयासंतो ॥ १२ ॥ जह सूरो तह जीवो, भवंतरं वच्चए पुणो अन्नं। तत्थवि सरीरमन्नं, खित्तं व रवी पयासेइ ॥१३॥ फुल्लुप्पलकमलाणं, चंदणअगरूण सुरहिगंधीणं। घिप्पइ नासाइ गुणो, नय रूवं दीसए तेसिं ॥ १४ ॥ एवं नाणगुणेणं, घिप्पइ जीवो वि बुद्धिमंतेहिं। जह गंधो तह जीवो, न हु सक्खा कीरए भित्तुं ॥ १५ ॥ भंभामउद्दमद्दल–पणवमकुंदाण संखसन्नाणं। सद्दुच्चिय सुवइ केवलु त्ति न हु दीसई रूवं ॥ १६ ॥ पच्चक्खं गहगहिओ, दीसइ पुरिसो न दीसइ पिसाओ। आगारेहि मुणिज्जइ, एवं जीवो वि देहठिओ ॥ १७ ॥ हसइ विरूसइ रूसइ, नच्चइ गाएइ रुयइ सुहदुक्खं। जीवो देहमइगओ, विविहपयारं पयंसेइ ॥ १८ ॥ जह आहारो भुत्तो, जिआण परिणमइ सत्तभेएहिं। वस १ सोणिय २ मंस ३ ट्ठिअ ४ मज्जा ५ तह मेय ६ सुक्केहिं ७ ॥ १९ ॥ एवं अट्ठविहं चिअ, जीवेण अणाइसहगयं कम्मं। जह कणगं पाहाणे, अणाइस-

जोगनिप्फन्नं ॥ २० ॥ जीवस्स य कम्मस्स य, अणाइमं चेव होइ संजोगो । सो वि उवाएण पुढो, कीरइ न वलाउ जह कणगं ॥२१॥ ज(इ)ह पुवयरं कम्मं, जीवो वा जइ हविज्ज वइ कोइ । सो वत्तवो कुकुडि-अंडाणं भणसु को पढमो ॥ २२ ॥ जह अंडसंभवा कुकुडि त्ति अंडं च कुकुडाइभवं । नय पुवावरभावो, जह तह कम्माण जीवाणं ॥ २३ ॥ अणुमाणपहे सिद्धं, छउमत्थाणं जिणाण पच्चक्खं । गिण्हसु गणहर! जीवं, अणाइयं अक्खयसरूवं ॥२४॥ कत्थ य जीवो वलिओ, कत्थ य कम्माइ हुंति वलियाइं । जीवस्स य कम्मस्स य, पुवनिबद्धाइ वेराइं ॥ २५ ॥ इति जीवस्थापनकुलकम् ॥

अथवा 'नाहियवायं'ति धूर्त्ताख्यानादिवदसम्बद्धजल्पनम् । यथा अवंतीजणवए उज्जेणी नाम णगरी, तीसे उत्तरपासे जिण्णुज्जाणं णाम उज्जाणं, तत्थ बहवे धुत्ता समागया, तेसिं अहिवइणो इमे-ससगो १ एलासाढो २ मूलदेवो ३ खंडपाणा य इत्थिया ४ । एक्केक्कस्स पंच पंच धुत्तसया धुत्तीण[ए]य पंचसया खंडपाणाए, अहण्णया पाउसकाले सत्ताहवद्दले भुक्खत्ताणं इमेरिसी कहा संवुत्ता, को अम्हं देज्ज भत्तं ति ? मूलदेवो भणति-जं जेण अणुभूयं सुयं वा सो तं कहयतु, जो तं ण पत्तियति तेण सवधुत्ताणं भत्तं दायवं, जो पुण भारहरामायणसुइसमुत्थाहिं उवणयउववत्तीहिं पत्तीहिति सो मा किंचि दलयतु । एवं मूलदेवेण भणिए सवेहि वि भणियं-साहु साहु त्ति । ततो मूलदेवेण भणियं-को पुवं कहयति ? एलासाढेण भणियं-अहं भे कहयामि, ततो सो कहिउमारद्धो । अहयं गावीउ गहाय अडविं गओ पेच्छामि चोरे आगच्छमाणे, तो मे पावरणी कंवली पत्थरिऊणं तत्थ गावीउ छुभिऊणाहं पोट्टलयं वंधिऊण गाममागओ । पेच्छामि य गाममज्झयारे गोद्दहे रममाणे,

ता हं गहियगावो ते पेच्छिउमारद्धो, खणमेत्तेण य ते चोरा कलयलं करेमाणा तत्थेव णिवइता। सो य गामो सदुपदचउप्पदो एकं वालुंकं पविट्ठो। ते य चोरा पडिगया। तं पि वालुंकं एगाए अजियाए गसियं। सा वि अजिया चरमाणी अयगरेण गसिया। सो वि अयगरो एगाए ढेंकाए गहिओ। सा उड्डिउं वडपायवे णिलीणा। तीसे य एगो पाओ पलंबति। तस्स य वडपायवस्स अहे खंधावारो ठिओ, तंमि य ढेंकापाए गयवरो आगलितो, सा उड्डिउं पयत्ता आगासे उप्पाओ गयवरे कड्डिउमारद्ध डोवेहिं कलयलो कओ। तत्थ सद्दवेहिणो गहियचावा पत्ता, तेहिं सा जमगसमगं सरेहिं पूरिया, सा मया, रण्णा तीए पोट्टं फाडावियं, अयगरो दिट्ठो, सोवि फाडाविओ अजिया दिट्ठा, सा वि फालाविया वालुंकं दिट्ठं रमणिज्जं, एत्थंतरे ते गोद्दहा उपरता, पतंगसेणा इव भूविलाओ सो गामो वालुंकाओ णिग्गंतुमारद्धो, अहंपि गहियगावो णिग्गओ। सव्वो सो जणो सट्ठाणाणि गओ। अहंपि अवउज्झिय गावो इहमागतो, तं भणह कहं सच्चं? सेसगा भणंति-सच्चं सच्चं, एलासाढो भणति-कहं गावीउ कंवलीए मायाओ गामो वा वालुंके? सेसगा भणंति—भारहसुतीए सुव्वति जहा पुव्वं आसी एगण्णवं जगं सव्वं, तम्मि य जले अंडमासी, तम्मि अ अंडगे ससेलवणकाणणं जगं सव्वं जइ मायं तो तुह कंवलीए गावो वालुंके वा गामो ण माहिति? जं भणसि जहा—ढेंकुदरे अयगरो तस्स य अजिया तीए वालुंकं एत्थवि भण्णइ उत्तरं—ससुरासुरं सनारकं ससेल-वणकाणणं जगं सव्वं जइ विण्हुस्स उदरे मायं सो वि य देवई उदरे माओ, सा वि य सयणिज्जे माया, जइ एयं सच्चं तो तुह वयणं कहं असच्चं भविस्सति? १। ततो ससगो कहितुमारद्धो—अम्हे कुडुंविपुत्ता कयाइं च करिसणाणि, अहं सरय-काले छेत्तं अतिगओ, तम्मि य खेत्ते तिलो वुत्तो, सो य एरिसो जातो जो परं कुहाडेहिं छेत्तव्वो, तं समंता परिब्भमामि,

पेच्छामि य गयवरं, अरण्णतणंमि, उत्थिउं पलाओ, पेच्छामि य अइप्पमाणं तिलरुक्खं तंमि विलग्गो । पत्तो अ गयवरो सो मं अपावंतो कुलालचक्कं व तं तिलरुक्खं परिभमति चालेइ य तं तिलरुक्खं तेण य चालिओ जलहरो विव तिलो तिलवुट्ठिं मुंचति । तेण य भमंतेण चक्कतिला विव ते तिला पीलिया, तओ तेल्लोदा णाम णदी वूढा सो य गओ तत्थेव तिलचलणीए क्खुत्तो मओ य । मयावि से चम्मं गहियं दतिओ कओ तेल्लस्स भरिओ अहंपि खुधिओ खलभारं भक्खयामि दस य तेल्लघडा तिसिओ पिवामि, तं च तेल्लपडिपुण्णं दइयं घेत्तुं गामं पट्ठिओ, गामबहिया रुक्खसालाए णिक्खिविउं तं दइयं गिहमतिगओ पुत्तो य मे दइयस्स पेसिओ सो तं जाहे ण पावइ ताहे रुक्खं पाडेउं गेण्हत्था । अहंपि गिहाओ उट्ठिओ परिभमंतो इहमागओ । एयं पुण मे अणुभूयं, जो ण पत्तियति सो देउ भत्तं । सेसगा भणंति–अत्थि एसो य भावो भारहरामायणे सुइं सुणिज्जति "तेषां कटतटभ्रष्टैर्गजानां मदबिन्दुभिः। प्रावर्त्तत नदी घोरा हस्त्यश्वरथवाहिनी ॥१॥" जं भणसि कहं एमहंतो तिलरुक्खो भवति, एत्थ भण्णइ–पाडलिपुत्ते किल मासपादवे भेरी णिम्मविया तो किह तिलरुक्खो एमहंतो न होज्जाहि ? २ । ततो मूलदेवो कहिउमारद्धो सो भणति–तरुणत्तणे इत्थियसुहाभिलासी धाराधरणट्ठयाए सामिगिहं पट्ठिओ छत्तकमंडलुहत्थो, पेच्छामि य वणगयं मम वहाए एज्जमाणं, ततो हं भीतो अत्ताणो असरणो किंचि णिलुक्कणट्ठाणं अपस्समाणो दगछड्डणणालएण कमंडलुं अतिगओम्हि । सो वि य गयवरो मम वहाए तेणेवंतेण अतिगओ । ततो मे सो गयवरो छम्मासं अंतो कुंडियाए वामोहिओ । तओ हं छट्ठमासंते कुंडियगीवाओ णिग्गओ । सो वि य गयवरो तेणेवंतेण

१ आरण्णगयवरं तेणमिउत्थितो पलाओ. प्र०

णिग्गओ, णवरं वालग्गंते कुंडियगीवाए लग्गो। अहमवि पुरओ पेच्छामि अणोरपारं गंगं, सा मे गोपयमिव तिण्णा गओम्हि सामिगिहं। तत्थ मे तण्हाछुहासमे अगणेमाणेण गंगाओ पडंती मत्थए छम्मासा धारिया धारा। तओ पणमिऊण महसेणं पयाओ संपत्तो उज्जेणिं तुज्झं व इहं मिलिओ इति। तं जइ सच्चं एयं तो मं हेऊहिं पत्तियावेह, अह मण्णह अलियं तो धुत्ताणं देहउ भत्तं, तेहिं भणिय सच्चं, मूलदेवो भणइ कहं सच्चं? ते भणंति सुणेह पुव्वं बंभाणस्स मुहाओ विप्पा णिग्गया १ बाहाओ खत्तिया २ उरूसु वइस्सा ३ पादेसु सुद्दा ४, जइ इत्तिओ जणवओ तस्सुदरे माओ तो तुमं हत्थी य कुंडियाए किं ण माहिह। अण्णं च किल बंभाणे विण्हु य उड्ढाहं धावंता गता दिव्वं वाससहस्सं तहा वि लिंगस्संतो ण पत्तो तं जइ एमहंतं लिंगं उमाए सरीरे मायं तो तुमं हत्थी य कुंडियाए ण माहिह? जं भणसि वालग्गे हत्थी कहं लग्गो तं सुणसु—विण्हू जगस्स कत्ता एगण्णवे तप्पति तवं जलसयणगतो। तस्स य णाभीओ बंभो पउमगब्भणिभो णिग्गओ णवरं पंकयणाभीए लग्गो एवं जइ तुमं हत्थी य विणिग्गता हत्थी वालग्गे लग्गो को दोसो। जं भणसि गंगा कहमुत्तिण्णा? रामेण किल सीताए पवित्तिहेउं सुग्गीवो आणत्तो तेणावि हणूमंतो सो बाहाहिं समुद्दं तरिउं लंकापुरिं पत्तो दिट्ठा सीया पडिगियत्तो सीया भत्तुणा पुच्छिओ कहं समुद्दो तिण्णो? भणति—तव प्रसादात् तव च प्रसादाद्भर्त्तुश्च ते देवि तव प्रसादात्। साधुप्रसादाच्च पितुः प्रसादात्तीर्णो मया गोष्पदवत्समुद्रः ॥१॥ जइ तेण तिरिएण समुद्दो बाहाहिं तिण्णो तुमं कहं गंगं ण तरिस्ससि। जं भणसि कहं छम्मासे धारा धरिता एत्थवि सुणसु दिव्वं वाससहस्सं तवं कुणमाणं दट्ठुण बंभं खुब्भमाणेहिं लोयहियत्था सुरगणेहिं गंगा अब्भत्थिता अवाराहि मणुयलोगं, तीए भणियं को मे धरेहिति णिवडिंति पसुवइणा भणियं अहं ते एगजडाए

धारयामि। तेण सा दिव्वं वाससहस्सं धारिया। जइ तेण सा धरिया तुमं कहं छम्मासं ण धरिस्ससि ? ३। अह पत्ता खंडपाणा कहितुमारद्धा सा य भणइ ओलंबितंति अम्हेहि, भणह जइ अंजलिं करिय सीसे, उवसप्पह जइ अ ममं तो भत्तं देमि सव्वेसिं ॥ १ ॥ तो ते भणंति धुत्ता, अम्हे सव्वं जगं तुले माणा। कह एवं दीणवयणं, तुज्झ सगासे भणीहामो ॥ २ ॥ तत्तो ईसिं हसिऊण खंडपाणा कहयति–अहं रायरयगस्स धूया अह अण्णया सह पित्रा वत्थाण महासगडं भरेऊण पुरिससहस्सेण समं णदिं सलिलपुण्णं पत्ता, धोयाइं वत्थाणि तो आयवे दिण्णाणि उव्वायाणि आगतो महावाओ तेण ताणि सव्वाणि वत्थाणि अवहरियाणि ततो हं रायभया गोहारूवं काऊण रयणीए णगरुज्जाणं गया, तत्थाहं रत्तासोगपासे चूयलया जाता, अण्णया य सुणेमि जहा रयगाउम्मिट्ठंतु अभयघोसं पडहसद्दं सोऊण पुण्णणवसरीरा जाया। तस्स य सगडस्स णाडगवरत्ता य जंबूएहिं भक्खियाओ। तओ मे पिउणा णाडगवरत्ताओ अणिस्समाणेण महिसछिप्पा लद्धा तत्थ णाडगवरत्ता वलिता। तं भणह किमेत्थ सच्चं ते भणंति-वंभकेसवा अंतं ण गया लिंगस्स वाससहस्सेण जति तं सच्चं तुह वयणं कहमसच्चं भविस्सइत्ति। रामायणेवि सुणिजइ जहं हणुमंतस्स पुच्छं महंतमासी तं च किल अणेगेहिं वत्थसहस्सेहिं वेढिऊण तेल्लघडसहस्सेहिं सिंचिऊण पलवियं तेण किल लंकापुरी दड्ढा। एवं जइ महिसस्स वि महंतपुच्छेण णाडगवरत्ताओ जायाओ को दोसो। अण्णं च इमं सुई सुवइ जहा–गंधारो राया रण्णे कुदवत्तणं पत्तो। अवरो वि राया किमस्सो णाम- महाबलपरक्कमो। तेण य सक्को देवराया समरे णिज्जिओ। ततो तेण देवराइणा सावसत्तो रण्णो अयगरो जाओ। अन्नया य पंडुसुआ रज्जभट्ठा रण्णे ठिआ। अन्नया य एगागी निग्गओ भीमो, तेण य अयगरेण गसिओ, धम्मसुतो य अयगरमूलं पत्तो, ततो सो अयगरो

माणुसीए वायाए तं धम्मसुयं सत्त पुच्छातो पुच्छेइ तेण य कहिआतो सत्तपुच्छातो ततो भीमं गिग्गिलइ। तस्स य सावस्स अंतो जातो, जातो पुणरवि राया। जइ एयं सच्चं तो तुमं पि सब्भूतं गोहाचूयसभावं गंतूण पुणवा जाया। तो खंडवाणा भणइ—एवं गते वि मज्झ पणामं करेह। जइ कहं वि न जिप्पह तो काणावि कवड्डिया तुब्भं मुल्लं ण भवति। ते भणंति कोऽम्हे सत्तो णिज्जिणओ, तो सा हसिऊण भणति। तेसिं वातहरियाण वत्थाण गवेसणाय निग्गया रायाणं पुच्छिउण्णं अण्णं च मम दासचेडा णट्ठा ते य अणिसामिता ता हं गामणगराणि अडमाणी इहं पत्ता तं ते दासचेडा तुब्भे ताणि वत्थाणि इमाणि जाणि तुब्भं परिहियाणि, तं जइ सच्चं तो देह वत्था। अह अलियं तो देहि भत्तं। असुण्णत्थं भणियमिणं, सेसं धुत्तक्खाणगाणुसारेण णेयमिति। गतो लोइओ मुसावाउत्ति। एतच्च निशीथ (चूर्णि) पीठात् लिखितं। तथा धावनं—अकाले वर्षाकल्पादिक्षालनं यदिवा निष्कारणमतित्वरितमविश्रामं गमनं कौशिकतापसवत्। तत्सम्बन्धश्च संक्षेपतः पूर्वाचार्यैः पद्यबन्धीकृतो यथा—स्वाम्यपि श्वेतम्वीं गच्छन्नूचे गोपैरसावृजुः। पन्थाः किं त्वत्र कनकखलाख्यस्तापसाश्रमः ॥ १ ॥ सदृग्विषाहिना रुद्धोऽप्रचारः पक्षिणामपि। तत्पन्थानं विमुच्यामुं वक्रेणाप्यमुना व्रज ॥ २ ॥ वार्यमाणोऽपि भगवान् ययौ तत्रर्जुनाऽध्वना। ज्ञात्वा च बोधं तस्याहेरवमन्यात्मनो व्यथाम् ॥ ३ ॥ यक्षमण्डपिकायां च कायोत्सर्गेण तस्थिवान्। स तु पूर्वभवे क्वापि गच्छेऽभूत् क्षपकोत्तमः ॥ ४ ॥ गच्छता पारणार्थं च भेकी पादेन घातिता आलोचनार्थमेतस्य दर्शिता क्षुल्लकेन सा ॥ ५ ॥ क्रुद्धः सोऽदर्शयद्भेकीः मार्गं लोकेन मारिताः। अरे किं क्षुल्लकक्षुद्र! मयैता अपि मारिताः ॥ ६ ॥ क्षुल्लकोऽस्थात् ततस्तूष्णीं सायमावश्यकेऽपि सः। अनालोच्यैव तां भेकीं न्यषदत् पक्षकस्ततः ॥ ७ ॥ क्षुल्लको स्मारयद्भेकीं तामालोचयसे न किम्। क्षपकोऽथ क्रुधोत्थाय क्षुल्लं

हन्मीति धावितः ॥८॥ मृत्वा स्तम्भास्थिघातेन ज्योतिष्केषु सुरोऽभवत्। स च्युतः कनकखले पञ्चशत्यास्तपस्विनाम् ॥९॥ पत्युः कुलपतेः पत्न्याः सुतोऽभूत् कौशिकाभिधः। तत्र कौशिकगोत्रत्वा–दासन्नन्येऽपि कौशिकाः ॥ १० ॥ स चातिकोपनत्वेन ख्यातोऽभूत् चण्डकौशिकः। मृते कुलपतौ तत्र सोऽभूत् कुलपतिस्ततः ॥ ११ ॥ मूर्छालुस्तत्र कस्यापि नादात् पुष्पफलादि सः। जग्मुर्दिशोदिशं पश्चात् तापसास्तदनाश्रिताः ॥ १२ ॥ अन्यदा कण्टकार्थं च कौशिको गतवान् वहिः। श्वेतम्ब्या एत्य राजन्यैर्भग्नं तस्य वनं तदा ॥ १३ ॥ भज्यते त्वद्वनं कैश्चिदित्याख्यातेऽस्य गोपकैः। दधावे तत्क्षणात् पर्शु–पाणिं परशुराम-वत् ॥ १४ ॥ दृष्टः कुमारैर्नेष्टास्ते धावन् गर्त्ते पपात सः। कुठारः सम्मुखोऽस्या–भूच्छिरस्तेन द्विधा कृतम् ॥ १५ ॥ मोहात् तत्रैव जज्ञेऽहिर्दृग्विषश्चण्डकौशिकः। वने तत्र स बभ्राम जीवं दृष्ट्वा दहन् क्रुधा ॥ १६ ॥ दृष्ट्वाऽथ स्वामिनं क्रुद्धः किं मां न ज्ञातवानसौ। सूरं वीक्ष्य निरैक्षिष्ट परं नादह्यत प्रभुः ॥ १७ ॥ भानुं पुनः पुनर्वीक्ष्य वीक्षते स्म प्रभुं दृशा। परं प्रभौ विष-ज्वाला पुष्पमाला इवाभवन् ॥ १८॥ ददंश दंदशूकोऽथ निःशूकः पादयोः प्रभुम्। परं प्रभौ वज्रसारे दंशदंश इवाभवत्॥१९॥ दृष्ट्वा दृष्ट्वा क्रुधातीवापचक्रामाथ दृग्विषः। मूर्च्छितो मद्विषेणैष निपतन्मा ममोपरि ॥ २० ॥ शैलवन्निश्चलं वीक्ष्य विलक्षोऽथ पुरः स्थितः। पश्यन् मूर्त्तिं प्रभोः शान्तां सुधारसमयीमिव ॥ २१ ॥ निर्विषाक्षः क्षणाज्जज्ञे ततस्तं स्वाम्यवोचत। चण्डकौ-शिक बुध्यस्व बुध्यस्व ननु मा मुहः ॥ २२ ॥ तत्समाकर्ण्य तस्याहेरूहापोहादजायत। जातिस्मृतिस्ततः स स्वं निन्दन् क्षमय-त्प्रभुम् ॥ २३ ॥ प्रदक्षिणात्रयं दत्वा स्वाम्यग्रेऽनशनं व्यधात्। रुष्टो मा स्म हनं सत्वान् क्षिप्त्वा तुण्डं बिले स्थितः ॥२४॥ स्वाम्यस्थात् कृपया तस्य दृष्ट्वा प्रभुमुपागमन्। गोपालवत्सपालाद्या वृक्षाद्यन्तरिताः स्थिताः ॥ २५ ॥ जघ्नुस्ते लेष्टुभिस्त्वेष

चित्रस्थ इव नाचलत् । विश्वस्तास्ते उपेत्याथ यष्टिभिस्तमघट्टयन् ॥ २६ ॥ तथाऽप्यविचलंतं तं ते लोकस्य न्यवेदयन् । अथागत्य प्रभुं लोका नत्वाऽर्हिं तमपूजयन् ॥ २७ ॥ घृतविक्रयिकास्तं च म्रक्षयन्ति स्पृशन्ति च । अथैत्य घृतगन्धेन कीटिकास्तमुपाद्रवन् ॥२८॥ वेदनामधिसेहे तां कर्मक्षयसहायिनीम् । सोऽर्हिविपद्य पक्षान्ते सहस्रारे सुरोऽभवत् ॥ २९ ॥ इति कौशिकतापससम्बन्धः ॥

तथा डेपनं–गर्त्तवरंडादीनां रयेणोल्लङ्घनम् । तथा लङ्घनं–साधूपरि श्राद्धाद्युपरि वा क्रोधादिनाऽन्नपानादिमोचनं अथवा लङ्घनं–उत्प्लुत्य वाहादिकोल्लङ्घनं अर्हन्मित्रसाधुवत्तथा हि–क्षितिप्रतिष्ठितं नाम पुरं द्वौ तत्र सोदरौ । अर्हन्नतोऽर्हन्मित्रश्च ज्येष्ठभार्या लघौ रता ॥ १ ॥ लघुर्नेच्छति तां चाह भ्रातरं मे न पश्यसि ? । पतिं व्यापाद्य सा भूयस्तमूचे न त्वमस्त स ॥ २ ॥ निर्वेदनाथ तेनैव स लघुर्व्रतमाददे । तद्रक्ता साऽपि मृत्वाऽभूद् ग्रामे क्वाप्यर्त्तितः शुनी ॥ ३ ॥ साधवोऽपि ययुस्तत्र शुन्याऽदर्शि मुनिः स च । तदैवागत्य सा श्लेषं मुहुर्भर्त्तुरिवाकरोत् ॥ ४ ॥ नष्टः साधुर्मृता साऽथ जाताऽटव्यां च मर्कटी । तस्या एव च मध्येनाटव्या यातं कथञ्चन ॥ ५ ॥ अन्तर्मुनीनां तं वीक्ष्य प्रेम्णा शिश्लेष मर्कटी । तां विमोच्याऽथ कष्टेन स कथञ्चित्पलायितः ॥ ६ ॥ मृत्वा तत्रापि सा जज्ञे यक्षा तं प्रेक्ष्य साऽवधेः । नैच्छन्मामेष तच्छिद्राणीक्षते न त्ववैक्षत ॥ ७ ॥ समानवयसोऽवोचन् हसन्तस्तं च साधवः । त्वमर्हन्मित्र ! धन्योऽसि यच्छुनीमर्कटीप्रियः ॥ ८ ॥ अन्यदा क्रमलङ्घ्यं स जलवाहं विलङ्घितुम् । प्रमादाद् गतिभेदेन पदं प्रासारयन् मुनिः ॥ ९ ॥ तस्य तच्छिद्रमासाद्य सा चिच्छेदांह्रिमूरुतः । स मि-

ध्यादुष्कृतं जल्पन् न्यपतत्तज्जलाद्बहिः ॥ १० ॥ सम्यग्दृष्टिसुरी तां च निर्धाट्य तं मुनेः क्रमम् । तदैवालगयद् रूढो देवताऽतिशयेन सः ॥ ११ ॥ इत्यर्हन्मित्रसाधुसम्बन्धः ॥

तथा ममकारो—ममताकरणं, वस्त्रपात्रोपाश्रयादिषु, तथाऽवर्णोच्चारणं—अवर्णवादकथनं अर्हदादीनां एतच्च दुर्लभबोधित्वहेतुः । यदुक्तं स्थानाङ्गे—"पंचहिं ठाणेहिं जीवा दुल्लभबोहियत्ताए कम्मं पगरंति । तं अरिहंताणमवन्नं वदमाणे १ अरिहंतपन्नत्तस्स धम्मस्स अवण्णं वदमाणे २ आयरियउवज्झायाणमवन्नं वदमाणे ३ चाउवन्नस्स संघस्स अवन्नं वदमाणे ४ विवक्कतववंभचेराणं देवाणं अवण्णं वदमाणे ५ ।" विपक्वं—उदयागतं तपोब्रह्मचर्यं तद्धेतुकं देवायुष्कादि कर्म येषां ते तथा । तथाऽवर्णवादे गुरुप्रत्यनीकवराहमिहिरसम्बन्धो यथा—अत्थि सिरिभरहवरिट्ठे सयलट्ठगरिट्ठे मरहट्ठे धम्मियजणागिन्नपुन्नपढिपुन्नपवहणपइट्ठाणं सिरिपइट्ठाणं नाम नयरं, तत्थ य चउद्दसविज्जाठाणपारगो छक्कम्ममम्मविऊ पयईए भद्दओ भद्दबाहुनाम माहणो हुत्था। तस्स परमपिम्मभरसरसीरुहमिहिरो वराहमिहिरो सहोयरो। अन्नया तत्थ चउद्दसपुव्वऽपुव्वरयणमहेसरो नवतत्तवरनिहाणपत्तमहाभद्दो सिरिमं जसोभद्द सूरिचक्कवट्टी उज्जाणवणे समोसढो । तन्नमंसणकए अहमहमिगाए सयलं नयरलोयं गच्छंतं पलोइय किंचि वि संजायपमोओ वराहमिहिरेण सद्धिं भद्दबाहू सूरीण वंदणत्थं गओ । ते वंदिय कमवि परमाणंदमुव्वहंतो समुचियभूभागे निविट्ठो । तओ सूरीहिं विहिया निव्वेयसंजणणी देसणा—संसारो दुक्खरूवो चउगइगुविलो जोणिलक्खप्पहाणो, इत्थं जीवाण मुक्खं खणम वि पवरं विज्जए नेव किंचि । तम्हा तच्छेयणत्थं जिणवरभणिए उज्जया होह धम्मे, खंताईए मुणीणं गुणगणकलिए सावयाणं च सारे ॥ १ ॥ तं सुणिय वेरग्गतरंगरंगिओ आगमेसिभद्दो पणट्ठमोहनिद्दामुद्दो भद्दबाहू

सहोयरं वराहमिहिरं भणइ–वच्छाहं संजायभवविरागो, एसिं गुरूणं चरणमूले सव्वसंगपरिच्चायं करिय अणवज्जं पवज्जमायरिस्सं, भवया पुण घरकज्जेसु सज्जेण होयव्वं । तो वराहमिहिरो तं पइ जंपइ–भाय ! जइ तुमं संसारसायरं तरिउमिच्छसि ता कहमहं भग्गपवहणजणुव्व तत्थ मज्जेमि, जओ–सक्करसहिया खीरी, दियाण जह वल्लहा हवइ अहिया । ता किं सा इयराण वि, नराण न हु होइ अभिरुइया ॥ १ ॥ एवं दिक्खामहिलासं जाणिऊण मा एसो भवावडे निवडउ त्ति भद्दबाहुणा अणुमन्निओ तओ दो वि भायरा गुरुपच्चक्खं सव्वं सावज्जं पच्चक्खायंति । तओ भद्दबाहू गहियदुविहसिक्खो कमेण गुरुवयणकमलाओ भसलुव्व मयरंदं चउद्दसपुव्वसुत्तत्थरहस्सं पाऊण सुहिओ सुविहियचूडामणी जाओ । इओ य सिरिमं सिरिजसभद्दसूरीण असमाणविज्जाठाणो असमाणचरित्तो अज्जसंभूयविजओ नाम सीससेहरो आसि । अन्नंमि दिणे सूरिपयजुग्गे सुयकेवलिणो मुणिय संभूयविजयभद्दबाहू नामए मुणिवरे गणहरपए पट्ठाविऊण सयं सिरिजसभद्दसूरिणो संलेहणं करिय सुरपुरसिरीए अवयंसभावमुवगया । तओ ते ससिसूरुव्व मिच्छत्ततिमिरं गोवित्थरेण हणंता महिमंडले पुढो पुढो विहरंति । अह सो वराहमिहिरमुणी अप्पमई चंदसूरपन्नत्तिपमुहे केवि गंथे मुणिऊण अहंकारविकारनडिओ सूरिपयमहिलसंतो अजुग्गु त्ति गुरूहिं नाणबलेण नाऊण न गणहरपए ठाविओ इय सुयवयणं सरंतेहिं । "वूढो गणहरसद्दो, गोयममाईहिं धीरपुरिसेहिं । जो तं ठवइ अपत्ते, जाणंतो सो महापावो ॥ १ ॥" तओ वराहमिहिरस्स जिट्ठसहोयरे वि सिरिभद्दबाहुगणहरे परमा अपीई जाया, जओ इमेहिं मह माणखंडणा कया, अओ इत्थ ठाउं न जुज्जइ । भणियं च– "माणि पणट्ठइ जइ न तणु तो देसडा चइज्ज । मा दुज्जणकरपल्लविहिं दंसिज्जंतु भमिज्ज ॥ १ ॥" तेण पावकम्मोदएण अप्पा गुणपव्वयारूढो वि दोसावडे पाडिओ

मनेकभवं भ्रान्तः । इति चक्षुरिन्द्रियविषयविपाके चपलाक्षकथा २ ।

पद्मखण्डपुरे राजा प्रजापतिः, ज्येष्ठपुत्रस्तस्य गन्धप्रियनामा, यद्यत् सुगन्धिवस्तु तत् २ घ्राणेन्द्रियवशगो जिघ्रति, अन्यदा नद्यां क्रीडति । इतश्चापरमाता तन्मारणाय चूर्णयोगं महारौद्रं सुगन्धं पुटिकायां बद्ध्वा क्षिप्त्वा पयसि प्रवाहयति, कुमारस्तां दृष्ट्वा गृह्णाति, वार्यमाणोऽपि गन्धमाघ्राय मृतः, भृङ्गो जातः, ततोऽनन्तं संसारं भ्रान्तः । इति घ्राणेन्द्रियविपाके गन्धप्रियकथा ३ ।

अथ सिद्धार्थपुरे विमलः श्रेष्ठी, तस्य रसनेन्द्रियवशगः पुत्रः तिक्तकटुकषायादिरसेषु गृद्धः, प्रत्यहमपूर्वामपूर्वां रसवतीं कारयत्यासक्त्या तद्द्रव्यव्ययेण व्यवसायादि न करोति, अन्यदा स चिन्तयति, भुक्ता मया सर्वे रसाः, परमस्मत्कु- ... ...ो मसमग्ररस नाद्यापि भुक्तौ, ततो यद्भवति तद्भवतु, परं मद्यमांसादि मया भोक्तव्यमेव, ततो मांसाद्यत्ति, मद्यं पिबति, वार्यमाणोऽपि न तिष्ठति, ततः पित्रा कालाक्षरितः देशान्तरे भ्राम्यति, मधुप्रिय इति लोकप्रसिद्धो जातः । अन्यदा रसनेन्द्रियपरवशतया महामांसासक्तो जातः, प्रच्छन्नं लोकानां शिशून् मारयित्वा भक्षयति, दृष्टस्तलारक्षेण, बद्ध्वा विडम्ब्य शूलायामारोपितः, मृतो नरकादिष्वनन्तं संसारं भ्रान्तः । इति मधुप्रियकथा रसनेन्द्रियविपाके ४ ।

अथ विश्वपुरे धरणेन्द्रो राजा, महेन्द्रः पुत्रः, मदनः श्रेष्ठिपुत्रो मित्रं, मदनस्य चन्द्रवदना भार्या, साऽन्यदा पतिमित्राय महेन्द्राय गृहागताय स्वहस्तेन ताम्बूलमर्पयति, तस्या हस्तस्पर्शं सुकुमारं ज्ञात्वा सोऽभ्युपपन्नः, स्पर्शनेन्द्रियपरवशतया ततस्तया सह हास्यं करोति, एवं प्रसङ्गतोऽनाचारमपि सेवते स्म । अन्यदा राजा महेन्द्रस्य राज्यं दातुमिच्छति । इतश्च महेन्द्रेण

चन्द्रवदनासुकुमारस्पर्शलुब्धेन मदनं हन्तुनियुक्ताः सेवकाः, ते मदनं प्रहारैर्जर्जरयन्ति, तलारक्षैर्दृष्टाः, राज्ञा पार्श्वे नीताः, राज्ञा पृष्टा नियुक्ताः, केन यूयं प्रहिताः, तेऽप्यूचुः, महेन्द्रकुमारेण, ततो राज्ञा सम्यग्वृत्तान्तं ज्ञात्वा स देशान्निष्काशितः, चन्द्रवदनां लात्वा स गतो विदेशं, मदनो वैद्यैः सज्जः कृतः, राजाऽन्यपुत्राय राज्यं दत्वा प्रव्रज्य मोक्षं गतः, मदनोऽपि तथाविधं स्त्रीचरितं दृष्ट्वा संविग्नः, प्रव्रज्य वैमानिको देवो जातः, चन्द्रवदनामहेन्द्रौ भ्रमन्तौ चौरैर्निगृहीतौ, वब्बरकुले विक्रीतौ, तत्र रुधिराकणप्रवेदनां सहेते, भवमनन्त भ्रान्तौ । इति स्पर्शनेन्द्रियविषयविपाके महेन्द्रकथा । ५ ।

तथा विषयविवशत्वेन विनश्यतां पशवोऽपि निदर्शनीभवन्तो दृश्यन्ते । यदुक्तं श्री 'प्रशमरतौ" कलरिभितमधुरगांधर्वतूर्ययोषिद्विभूषणरवाद्यैः । श्रोत्रावबद्धहृदयो, हरिण इव नाशमुपयाति ॥ १ ॥ गतिविभ्रमेङ्गिताकार–हास्यलीलाकटाक्षविक्षिप्तः । रूपावेशितचक्षुः, शलभ इव विपद्यते विवशः ॥ २ ॥ स्नानांङ्गरागवार्त्तिक–वर्णकधूपाधिवासपटवासैः । गन्धभ्रमितमनस्को, मधुकर इव नाशमुपयाति ॥ ३ ॥ मृष्टान्नपानमांसौ–दनादिमधुररसविषयगृद्धात्मा । गलयन्त्रपाशबद्धो मीन इव विनाशमुपयाति ॥ ४ ॥ शयनासनसम्बाधन–सुरतस्नानानुलेपनासक्तः । स्पर्शव्याकुलितमति–र्गजेन्द्र इव बध्यते मूढः ॥ ५ ॥ एवमनेके दोषाः प्रनष्टशिष्टेष्टदृष्टिचेष्टानाम् । दुर्नियमितेन्द्रियाणाम्, भवन्ति बाधाकरा बहुशः ॥ ६ ॥ एकैकविषयसङ्गा–द्रागद्वेषातुरा विनष्टास्ते । किं पुनरनियमितात्मा, जीवः पञ्चेन्द्रियवशात्तः ॥ ७ ॥ तथा विषयैस्तरवोऽपि विगोपिताः । यतः पठयते– "पादाहतः प्रमदया विकसत्यशोकः, शोकंजहाति वकुलो मुखसीधुसिक्तः । आलिङ्गितः कुरवकः कुरुते विकाश–मालोकितः सतिलकस्तिलको विभाति ॥ ८ ॥इनि गाथाछन्दः ॥१०४॥ एवं शुभाशुभगच्छस्वरूपेऽवगते सति मुनिः किं कुर्यात् ? इत्याह–

तम्हा सम्मं निहालेउं, गच्छं सम्मग्गपट्ठियं । वसिज्ज पक्खमासं वा, जावज्जीवं तु गोयमा ॥१०५॥

व्याख्या–' तम्हा० ' यस्मात् सद्‌गच्छः संसारोच्छेदकारी, असद्‌गच्छश्च संसारवर्द्धकः, तस्मात् सम्यग्निभाल्य–सम्यग् विलोक्य, गच्छं–गणं सन्मार्गप्रस्थितं, तत्र पक्षं वा मासं वा उपलक्षणत्वात् मासद्वयादिकं वा यावज्जीवं वा, तुरपि विकल्पार्थ एव, वसेन्मुनिः । हे गौतम ! इति । अनुष्टुप् छन्दः ॥ १०५ ॥ अथैकाकिना क्षुल्लादिनोपाश्रयरक्षणमाश्रित्य साधुस्वरूपाधिकाराऽवशेष दर्शयति—

खुड्डो वा अहवा सेहो, जत्थ रक्खे उवस्सयं । तरुणो वा जत्थ एगागी, का मेरा तत्थ भासिमो ॥१०६॥

व्याख्या–' खुड्डो ' इत्यादि, यत्र गणे क्षुल्लो वा–बालयतिरथवा शैक्षो–नवदीक्षित एकाकी उपाश्रयं रक्षेत्, तरुणो वा एकाकी साधुर्यत्रोपाश्रयं रक्षेत्, अत्रानुक्तास्यापि गौतमामन्त्रणस्य गम्यमानत्वात् हे गौतम ! तत्र गच्छे का मेरा ?–का मर्यादा ? न काचिदपीत्यर्थः । इति वयं भाषामहे । एकाकिक्षुल्लादेः वसतिरक्षणे बहुदोषोत्पत्तेः, तथाहि–" एगो खुड्डो रमइ, रममाणस्स अण्णे धुत्ताइया उवहिं हरंति, बालं वा भोलविऊण अण्णत्थ गच्छन्ति । वसहीए वा कयाइ वलमाणाए खुड्डो वत्थाइ गहणत्थं पविसति, सप्पो वा डसइ, नट्टाइपेच्छणत्थं वा गच्छिज्जा, एवमाइ बहु एगागिणि बाले दोसा । सेहोवि एगागी कयाइ सघरं गच्छेज्जा, अन्नत्थ वा गच्छेज्जा, अम्मापियरो अण्णो वा सयाणो कयाइ मिलिज्जा, सिणेहेणं रोएज्जा, भासासमिइं भंजिज्जा, उड्डाहं वा करिज्जा, एवमाई बहू सेहे दोसा । तरुणो वि एगागी कयाइ मोहोदएण हत्थकम्मं करिज्जा, अंगादाणं

वा किड्डाए वालिज्जा, इत्थी वा काइ तरुणं दट्ठूण आगच्छिज्जा, स चऊत्थं भंजिज्जा ऊड्डाहं वा करिज्जा, मोहोदएण गच्छं मुत्तूण गच्छिज्ज वा, एवमाइ बहू एगागितरुणे दोसा ” विशेषतो निशीथचूर्ण्यादिभ्यो ज्ञेया इति । एतावता च प्रायो गच्छ-स्वरूपनिरूपणद्वारेण यतिस्वरूपमेव निरूपितम् । इतश्च प्राय आग्रन्थपरिसमाप्तेर्गच्छस्वरूपनिरूपणद्वारेव यतिनीस्वरूपं निरूपयिष्यते, ननु गच्छस्वरूपे वक्तुं प्रक्रान्ते कथं यतियतिनीस्वरूपमुच्यते ? ऊच्यते, तदात्मकत्वाद् गच्छस्य, तत्स्वरूपे निरूपिते गच्छस्वरूपस्यापि निरूपणादिति विषमाक्षरेति ॥ गाथाछन्दः ॥ १०६ ॥

इति श्रीमत्तपागच्छनभोमणिभट्टारकपुरन्दरश्रीआनन्दविमलसूरीश्वरचरणाम्भोजरजश्चञ्चरीकायमाणपंडितश्री विजयविमलगणिविरचितायां गच्छाचारप्रकीर्णकटीकायां साधुस्वरूपनिरूपणाधिकारो द्वितीयः ॥

वर्णितं व्रतिस्वरूपम् । अथ क्रमप्राप्तं व्रतिनीस्वरूपं वर्ण्यते, तत्रापि प्रथमं एकाकिन्या क्षुल्लिकादिकया व्रतिन्योपाश्रयरक्षणे दोषमेव दर्शयति—

**जत्थ य एगा खुड्डी, एगा तरुणाउ रक्खए वसहिं । गोयम ! तत्थ विहारे, का सुद्धी बंभचेरस्स ॥१०७॥**

व्याख्या—‘ जत्थ य एगा० ’ यत्र च साध्वी विहारे एकाकिनी क्षुल्लिका, एकाकिनी तरुणी वा, तुशब्दात् नवदीक्षिता चैकाकिन्युपाश्रयं रक्षति, हे गौतम ! तत्र साध्वी विहारे ब्रह्मचर्यस्य का शुद्धिः ? न काऽपीत्यर्थः । इत्थवि दोसा—कयाई वसहीए एगा खुड्डी किड्डिज्जा, कोइ तं अवहरिज्ज वा, बलाओ वा कोइ सेविज्जा, ईचाई बहूदोसा । तरुणी वि एगागिणी मोहोदएण फलादिणा चऊत्थं सेविज्जा, एगागिणिं वा तं दट्ठूणं तरुणा समागच्छंति, हासाइअं कुवंति, अंगे वा लग्गंति, तओ

ऊड्डाहो भवति, तप्फासाओ वा मोहोदओ भवति, सीलं भंजिज्ज वा, गब्भो वा भवेज्ज, तं च जइ गालइ तो महादोसो भवइ, अह वड्ढइ तो पवयणे महा ऊड्डाहो भवति, अहवा पुव्वकीलियं समरमाणी वेस्साइय वा दट्ठूण गच्छ मुत्तूण, एगागिणी तरुणी साहुणी गच्छिज्जा, एवमाई वहूदोसा, एवं नवदिक्खियाए वि एगागिणीए एगागिसेहसाहुव्व दोसा नायव्वत्ति। गाथाछन्दः ॥ १०७ ॥ अथैकाकिन्या व्रतिन्या रात्रौ वसते वहिर्गमने निर्मर्यादत्वमाह—

जत्थ य उवस्सयाओ, बाहिं गच्छे दुहत्थमित्तंपि। एगा रत्तिं समणी, का मेरा तत्थ गच्छस्स।१०८।

व्याख्या–'जत्थ य०' यत्र च गणे उपाश्रयाद्बहिरेकाकिनी 'रत्ति'ति 'सप्तम्या द्वितीया (८–३–१३७)' इति सूत्रेण सप्तमीस्थाने द्वितीयाविधानात्, रात्रौ श्रमणी–साध्वी द्विहस्तमात्रामपि भूमिं गच्छेत्, तत्र गच्छे गच्छस्य का मर्यादा? अथवा क्वचिद् 'द्वितीयादेः (८–३–१३४)' इति प्राकृतसूत्रेणात्र सप्तम्यर्थे षष्ठी, ततस्तत्र गच्छे का मर्यादा? न काचिदपीत्यर्थः। इत्थवि दोसा–कयाइ परदारसेवका रयणीए एगागिणीं समणिं दट्ठूण हरिज्जा, उड्डाहं वा करेज्जा, पच्छन्नं वा रायाई भममाणो संकिज्जा, का एसा? चोरा वा अवहरंति, वत्थाइयं वा गिण्हंति, अहवा कयाइ गुरुणीए फरुसचोयणं संभरमाणी, पुव्वकीलियं वा रयणीए विसेसओ संभरमाणी एगागिणी गच्छिज्जा, इच्चाई वहुदोसत्ति। गाथाछन्दः ॥ १०८ ॥ अथैकाकिश्रमण्यधिकारादेवेदमाह—

जत्थ य एगा समणी, एगो समणो य जंपए सोम! निअवंधुणावि सद्धिं, तं गच्छं गच्छगुणहीणं।१०९।

व्याख्या–'जत्थ य०' यत्र च एकाकिनी श्रमणी एकाकिना निजबन्धुनाऽपि सार्द्धं जल्पति, अथवा एकाकी साधुरेकाकिन्या निजभगिन्यापि सार्द्धं जल्पति, हे सौम्य !–हे गौतम ! तं गच्छं गच्छगुणहीनं जानीहीति शेषः। यत एकाकिन्या श्रमण्याः निजबन्धुनापि सार्द्धं, एकाकिनः साधोर्वा निजभगिन्याऽपि सार्द्धं संदर्शनसंभाषणादिना बहु दोषोत्पत्तिर्भवति, कामवृत्तेर्मलिनत्वात्। तथा चोक्तं–" संदंसणेण १ पीई २ पीईउ रई ३ रईओ वीसंभो ४। वीसंभाओ पणओ ५ पंचविहं वड्ढए पिम्मं॥ १ ॥" जह जह करेसि नेहं, तह तह नेहो भि वड्ढइ तुमंमि। तेण नडिओ मि बलियं, जं पुच्छसि दुब्बलतरोसि ॥२॥ मित्ति मम। इय संदंसणसंभासणेण संदीविओ मयणवण्ही। बंभाई गुणरयणे, डहइ अणिच्छ वि पमायाओ ॥३॥ अनिच्छतोऽपि दहति। तथा 'मात्रा स्वस्रा दुहित्रा वा, न विविक्तासनो भवेत्। बलवानिन्द्रियग्रामः, पण्डितोऽप्यत्र मुह्यति ॥४॥' इति गाथाछन्दः ॥ १०९॥ अथार्याया गृहिसमक्षं दुष्टभाषणे दोषमाह—

**जत्थ जयारमयारं, समणी जंपइ गिहत्थ पच्चक्खं। पच्चक्खं संसारे, अज्जा पक्खिवइ अप्पाणं ॥११०॥**

व्याख्या–'जत्थ०' यत्र गच्छे 'जयारमयारमिति' अवाच्यदुष्टगालिरूपं जकारमकारसहितं वचनं या श्रमणी गृहस्थप्रत्यक्षं–गृहिसमक्षं जल्पति, हे गौतम ! तत्र गच्छे सा आर्या आत्मानं संसारे प्रत्यक्षं साक्षात् प्रक्षिपतीति। गाथाछन्दः॥११०॥ अथार्याया गृहस्थभाषाभाषणे दोषमाह—

**जत्थ य गिहत्थभासाहिं,भासए अज्जिआ सुरुट्ठावि। तं गच्छं गुणसायर ! समणगुणविवज्जिअं जाण॥१११॥**

व्याख्या–यत्र च, सुरुष्टाऽपि–कथमपि कारणवशेन भृशं रोषंगताऽपि, किं पुनररुष्टा आर्या गृहस्थभाषाभिः–तव गृहं ज्वलतु, तव शवं कर्षयामि, तवाऽक्षिणी स्फुटिते ? तव पादौ कृत्तौ स्तः ? इत्यादि कठोरसावद्यरूपाभिर्भाषते, हे गुणसागर ! तं गच्छं श्रमणगुणविवर्जितं जानीहीति । गाथाछन्दः ॥ १११ ॥ अथार्याया विचित्रवस्त्रपरिधाने दोषमाह–

**गणिगोअम ! जा उचिअं, सेअवत्थं विवज्जिउं । सेवए चित्तरुवाणि, न सा अज्जा विआहिया ॥ ११२ ॥**

व्याख्या–' गणिगो० '–हे गणिन् ! गौतम ! आर्या उचितं श्वेतवस्त्रं विवर्ज्य, चित्ररूपाणि–विविध वर्णानि विविधचित्राणि वा वस्त्राणि सेवते, उपलक्षणत्वात् पात्रदण्डाद्यपि चित्ररूपं सेवते, सा आर्या न व्याहृता–न कथितेति विषमाक्षरेति । गाथाछन्दः ॥ ११२ ॥ अथार्याया गृहस्थादीनां सीवनादिकरणे दोषमाह–

**सीवणं तुन्नाणं भरणं, गिहत्थाणं तु जा करे । तिल्लउवट्टणं वा वि, अप्पणो अपरस्स य ॥ ११३ ॥**

व्याख्या–'सीवणं०' या आर्या गृहस्थानां तुशब्दादन्यतीर्थिकादीनां, वस्त्रकम्बलचीनांशुकादिसम्बन्धि सीवनं, तुन्नानं, भरणमिति भरतभरणं करोति, तथा या आत्मनश्च स्वस्य परस्य च गृहस्थडिम्भादेः ' तिल्ल 'त्ति–तैलाभ्यङ्गम् । ' उवट्टणं 'ति सुरभिचूर्णादिनोद्वर्त्तनम, वापीतिशब्दान्नयनाञ्जनमुखक्षालनं मण्डनादिकञ्च करोति, न सा आर्या व्याहृतेति पूर्वगाथात आकर्षणीयम्, तस्याः पार्श्वस्थादित्वसमासादनात् । अत्र ' निरयावल्यु 'पाङ्गतः सुभद्रार्योदाहरणं ज्ञाताधर्म्मकथाङ्गतः काल्यार्योदाहरणञ्च लिख्यते । तत्रापि प्रथमं सुभद्रोदाहरणञ्च लिख्यते–यथा–"तेणं कालेणं तेणं समएणं रायगिहे नयरे गुणसिलए

चेइए, सेणिए राया, सामी समोसढे, परिसा निग्गया, तेणं कालेणं तेणं समएणं बहुपुत्तिया देवी सोहम्मे कप्पे बहुपुत्तिए विमाणे सभाए सुहम्माए बहुपुत्तियंसि सीहासणंसि चउहिं सामाणियसाहस्सीहिं चउहिं महत्तरियाहिं सपरिवाराहिं तिहिं परिसाहिं सत्तहिं अणिआहिवईहिं सोलसहिं आयरक्खदेवसाहस्सीहिं अन्नेहिं बहूहिं बहुपुत्तियविमाणवासीहिं वेमाणिएहिं देवेहिं देवीहिय सद्धिं संपरिवुडा महया हयनट्टगीयवाइयतंतीतलतालतुडियघणमुइंगपडुप्पवादियरवेणं दिव्वाइं भोगभोगाइं भुंजमाणी विहरति, इमं च णं केवलकप्पं जंबुद्दीवं दीवं विउलेणं ओहिणा आभोएमाणी २ पासति २ समणं भगवं महावीरं जहा सूरियाभे जाव नमंसित्ता सीहासणवरंसि पुरत्थाभिमुहा सन्निसन्ना, आभिओगे[1] देवे सद्दावेइ जहा सूरियाभस्स सूसरा घंटा, आभिओगं देवं सद्दावेति जाणविमाणं जोअणसहस्सविच्छिणं जाणविमाणवन्नओ जाव उत्तरिल्लेणं निज्जाणमग्गेण जोयणसाहस्सिएहिं विग्गहेहिं आगया, जहा सूरियाभे, धम्मकहा सम्मत्ता। तएणं सा बहुपुत्तिया देवी दाहिणं भुयं पसारेति, देवकुमाराणं अट्ठसयं देवकुमारियाणं वामाओ भूयाओ अट्ठसयं, तयाणंतरं च णं बहवे दारगा य दारियाओ य डिंभए य डिंभिआओ य विउव्वइ, णट्टविहिं जहा सूरियाभे, उवदंसित्ता पडिगया। तए[2] णं भगवं गोयमे समणं भगवं जाव कूडागारसाला, बहुपुत्तियाए णं भंते! देवीए एसा दिव्वा देविड्ढी पुच्छा जाव अभिसमन्नागया। एवं खलु गो० तेणं कालेणं तेणं समएणं वाणारसी नामं नगरी, अंबसालवणे चेइए, तत्थ णं वाणारसीए नयरीए भद्दे नामं सत्थवाहे होत्था। अड्ढे जाव अपरिभूए, तस्स णं भद्दस्स य सुभद्दा नामं भारिया सूमाला वंझा, अवियाउरी, जाणुकोप्परमाया यावि होत्था। तए णं तीसे सुभद्दाए सत्थवाहीए अन्नया कयाइ पुव्वर-

---

१ आभिआगा जहा सूरियाभस्स प्र० २ भंतेति भ० प्र०

त्तावरत्तकालसमयंसि कुडुंबजागरियं जागरमाणीए इमेयारूवे जाव संकप्पे समुप्पज्जित्था। एवं खलु अहं भद्देणं सत्थवाहेणं सद्धिं विउलाइं भोगभोगाइं भुंजमाणी विहरामि, नो चेव णं अहं दारगं वा दारियं वा पयायामि, तं धण्णाओ णं ताओ अम्मयाओ जाव सुलद्धे णं तासिं अम्मगाणं मणुअजम्मजीवियफले, जासिं मन्ने नियगकुच्छिसंभूयगाइं, थणदुद्धलुद्धगाणि, महुरसमुल्लावगाणि, मंजुलपजंपियाणि, थणमूलकक्खदेसभागं अभिसरमाणगाणि, मुद्धयाइं पण्हयं पियंति, पुणो वि कोमलकमलोवमेहिं हत्थेहिं गिण्हिऊण उच्छंगनिवेसयाइं देंति, समुल्लावए सुमहुरे पुणो पुणो मंजुलप्पभणिए य। अहन्नं अधन्ना, अपुन्ना, अकयपुन्ना, इत्तो एगमवि न पत्ता ओहय जाव झियायति। तेणं कालेणं तेणं समएणं सुव्वयाणं अज्जाओ इरियासमियाओ, भासास०, एसणास०, आयाणभंडमत्तनिक्खेवणासमियाओ, उच्चारपासवणखेलसिंघाणजल्लपारिट्ठावणासमियाओ, मणगुत्ताओ, वयगुत्ताओ, कायगुत्ताओ, गुत्तिंदियाओ, गुत्तबंभचारिणीओ, बहुस्सुयाओ, बहुपरिवाराओ, पुव्वाणुपुव्विं चरमाणीओ, गामाणुगामं दूइज्जमाणीओ, जेणेव वाणारसी नगरी, तेणेव उवा० २ अहापडिरूवं उग्गहं २ संजमेणं तवसा जाव विहरंति। तए णं तासिं सुव्वयाणं अज्जाणं एगे संघाडए वाणारसीए णयरीए उच्चनीयमज्झिमाइं कुलाइं घरसमुदाणस्स भिक्खायरियाए अडमाणे भद्दस्स सत्थवाहस्स गिहं अणुपविट्ठे। तए णं सा सुभद्दा सत्थवाही ताओ अज्जाओ एज्जमाणीओ पासति २ हट्ठ० खिप्पामेव आसणाओ अब्भुट्ठेइ २ सत्तट्ठपयाइं अणुगच्छइ २ वंदइ नमंसइ २ विउलेणं असणपाणखाइमसाइमेणं पडिलाभित्ता, एवं वयासी—एवं खलु अहं अज्जाओ! भद्देणं सत्थवाहेणं सद्धिं विउलाइं भोगभोगाइं भुंजमाणी विहरामि, नो चेव णं अहं दारगं वा दारियं वा पयामि। तं धण्णाओ णं ताओ अम्मगाओ जाव एत्तो एगमवि न पत्ता, तं तुब्भे णं अज्जाओ बहुणायाओ,

वहुपढियाओ, वहूणि गामागरनगर० जाव संनिवेसाइं आहिंडह, वहूण य राईसरतलवरमाडंविय० जाव सत्थवाहप्पभितीणं गिहाइं अणुपविसह, अत्थि भे[1] केइ कहिं वि विज्जाप्पओगे वा मंतप्पओगे वा वमणं वा विरेयणं वा बत्थिकम्मे वा ओसहे वा भेसज्जे वा उवलद्धे? जेणं अहं दारगं वा दारियं वा पयाएज्जा, तए णं ताओ अज्जाओ सुभद्दं सत्थवाहिं एवं वयासी—अम्हे णं देवाणुप्पिए! समणीओ निग्गंथीओ इरियासमियाओ जाव गुत्तबंभयारिणीओ, नो खलु कप्पइ अम्हं एयमट्ठं कण्णेहिवि णिसुणित्तए! किमंग पुण उवदंसित्तए, वा समायरित्तए वा। अम्हे णं देवाणुप्पिए! पुण तव विचित्तं केवलिपन्नत्तं धम्मं परिकहेमो। तए णं सा सुभद्दा सत्थवाही तासिं अज्जाणं अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठा, ताओ अज्जाओ तिक्खुत्तो वंदइ नमंसति, एवं वयासी—सद्दहामि णं अज्जाओ! निग्गंथं पावयणं, पत्तियामि णं रोएमि णं अज्जाओ! निग्गंथं० एवमेयं तहमेयं अवितहमेयं जाव सावगधम्मं पडिवज्जित्तए, अहासुहं देवाणुप्पिए! मा पडिबंधं। तए णं सा सुभद्दा सत्थवाही तासिं अज्जाणं अंतिए जाव पडिवज्जति २ ताओ अज्जाओ वंदइ नमंसइ पडिविसज्जति। तए णं सा सुभद्दा सत्थवाही समणोवासिया जाया जाव विहरति। तए णं तीसे सुभद्दाए समणोवासियाए अन्नया कयाई पुव्वरत्तावरत्त जाव कुडुंब जाव समुप्पज्जित्था; एवं खलु अहं भद्दए णं सत्थवा० विउलाइं भोगभोगाइं जाव विहरामि, नो चेवणं अहं दारगं दारियं वा पयामि, तं सेयं खलु ममं कल्लं जाव जलंते भद्दस्स सत्थवाहस्स आपुच्छित्ता सुव्वयाणं अज्जाणं अंतियं अगाराओ जाव पव्वइत्तए, एवं संपेहेति २ त्ता कल्लं जेणेव भद्दे सत्थवाहे तेणेव० करयल० एवं वयासी—एवं खलु अहं देवाणुप्पिया तुब्भेहिं सद्धिं वहूइं वासाइं भोगभोगाइं (ग्रंथाग्रं ५०००) जाव विहरामि, नो चेव णं

[1] से प्र०

दारगं वा दारियं वा पयामि, तं इच्छामि णं देवाणुप्पिया ! तुब्भेहिं अब्भणुण्णाया समाणी सुव्वयाणं अज्जाणं जाव पव्वइत्तए, तए णं से भद्दे सत्थवाहे सुभद्दं सत्थवाहिं एवं वयासी–मा णं तुमं देवाणु० इयाणिं मुंडा जाव पव्वयाहि, भुंजाहिं ताव देवाणुप्पिए ! मए सद्धिं विउलाइं भोगभोगाइं ततो पच्छा भुत्तभोई सुव्वयाणं अज्जाणं जाव पव्वयाहि । तए णं सा सुभद्दा सत्थवाही भद्दस्स सत्थवाहस्स एयमट्ठं नो आढाति नो परि० दुच्चंपि तच्चंपि भद्दं स० एवं वयासी–इच्छामि णं देवाणुप्पिया ! तुब्भेहिं अब्भणुण्णाया समाणी जाव पव्वइत्तए । तए णं से भद्दे सत्थवाहे जाहे नो संचाएति, बहूहिं आघवणाहिं एवं पन्नवणाहिं जाव विन्नवित्तए, ताहे अकामए चेव सुभद्दाए निक्खमणं अणुमन्नित्था । तए णं से भद्दे सत्थवाहे विउलं असणं पाणं खाइमं साइमं उवक्खडावेति २ मित्तनाति० जाव ततो पच्छा भोयणवेलाए जाव मित्तनाति० सक्कारेति २ सुभद्दं सत्थ० ण्हायं जाव पायच्छित्तं सव्वालंकारविभूसियं पुरिससहस्सवाहिणिसीयं दुरूहेति, तए णं सा सुभद्दा सत्थवाही मित्तणाति जाव सद्धिं संपरिवुडा, सव्विड्ढीए जाव रवेणं वाणारसीनगरीमज्झंमज्झेणं जेणेव सुव्वयाणं अज्जाणं उवस्सए तेणेव उवागच्छइ २ पुरिससहस्सवाहिणीं सीयं ठवेति २ सुभद्दा सत्थवाही सीयाओ पच्चोरुहति । तए णं भद्दे सत्थवाहे सुभद्दं सत्थवाहिं पुरओ काउं जेणेव सुव्वया अज्जा तेणेव उवागच्छइ २ सुव्वयाओ अज्जाओ वंदति नमंसति २ एवं वयासी–एवं खलु देवाणुप्पिया सुभद्दा सत्थवाही ममं भारिया इट्ठा जाव कंता जाव मा णं वाइया पित्तिया जाव फुसंतु । एस ण देवाणुप्पिया संसारभउव्विग्गा भीया जम्मजरामरणाणं देवाणुप्पियाणं अंतिए मुंडा भवित्ता जाव पव्वयाति, तं एतं अहं देवाणुप्पियाणं सीसिणिभिक्खं दलयामि, पडिच्छंतु णं तुमं देवाणुप्पिया ! सीसिणिभिक्खं, अहासुहं मा पडिबंधं । तए णं सुभद्दा सत्थवाही सुव्व-

याहिं अज्जाहिं एवं वुत्ता समाणी हट्ठा २ सयमेव आभरणमल्लालंकारं ओमुयइ २ सयमेव पंचमुट्ठियं लोयं करेति २ जेणेव सुव्वयाओ अज्जाओ तेणेव उवागच्छइ २ सुव्वयाओ अज्जाओ तिक्खुत्तो आयाहिणपयाहिणेणं वंदइ नमंसइ २ एवं वयासी–आलित्तेणं भंते जहा देवाणंदा तहा पव्वइया जाव अज्जा जाया जाव गुत्तबंभयारिणी, ततो सा सुभद्दा अज्जा अन्नया कयाइ बहुजणस्स चेडरूवेसु मुच्छिया जाव अज्झोववन्ना, अब्भंगणं च, उव्वट्टणं च, फासुअपाणं च, अलत्तगं च, कंकणाणिय अंजणं च, वन्नगं च, चुन्नगं च, खेलगाणि य, खज्जुगाणि य, खीरं च, पुप्फाणि य गवेसति २ बहुजणस्स दारए वा दारियाओ वा कुमारए अ कुमारिआओ अ डिंभए य डिंभियाओ य अप्पेगइयाओ अब्भंगेइ–अप्पेगइयाओ उवट्टेइ, एवं अप्पेगइयाओ फासुयपाणएणं ण्हावेति, अप्पेगइयाओ पाए रयति, अप्पेगइआओ उट्ठे रएति, अप्पेगइयाओ अच्छीणि अंजेति, अप्पेगइयाओ उसुए करेइ, अप्पेगइयाओ तिलए करेति, अप्पेगइयाओ एगिंदलए य करेति, अप्पेगइयाओ पंतियाओ करेति, अप्पे छिज्जाइं करेइ, अप्पेगइए वन्नएणं समालभई, अप्पेगइए चुन्नएणं समालभइ, अप्पेगइयाणं खेलणगाइ दलयति, अप्पेगइयाणं खज्जुल्लगाइ दलयति, अप्पेगइयाणं खीरभोयणं भुंजावेति, अप्पेगइयाणं पुप्फाइं ओमुयति, अप्पेगइया पादेसु ठवेति, अप्पे जंघासु करेति, एवं ऊरुसु उच्छंगे कडीए विपिट्ठीए उरंसि खंधे सीसे करतलपुडेण गहाय, हलउलेमाणी २ गायमाणी २ पुत्तपिवासं वा धूयपिवासं वा नत्तुपिवासं वा नत्तिपिवासं वा पच्चणुब्भवमाणी विहरति, तए णं ताओ सुव्वयाओ अज्जाओ सुभद्दं अज्जं एवं वयासी–अम्हे ण देवाणुप्पिए ! समणीओ निग्गंथीओ इरियासमिइयाओ जाव गुत्तबंभचारिणीओ, नो खलु अम्हं कप्पति धातीकम्मं करित्तए तुमं चणं देवाणुप्पिए ! बहुजणस्स चेडरूवेसु मुच्छिया जाव अज्झोववन्ना अब्भंगणं जाव नत्तिपिवास

पच्चणुब्भवमाणी विहरसि, तण्णं तुमं देवाणुप्पिए! एयस्स ठाणस्स आलोएहि जाव पच्छित्तं पडिवज्जाहि। तए ण सा सुभद्दा अज्जा सुव्वयाणं अज्जाणं एयमट्ठं नो आढाति, नो परिजाणइ, अणाढाएमाणी अपरिजाणमाणी विहरति। तए णं ताओ समणीओ निग्गंथीओ सुभद्दं अज्जं हीलेंति निंदंति खिंसंति गरहंति,अभिक्खणं २ एयमट्ठं निवारेंति। तए णं तीसे सुभद्दाए अज्जाए समणीहिं निग्गंथीहिं हीलिज्जमाणीए जाव अभिक्खणं अभिक्खणं एयमट्ठं निवारिज्जमाणीए अयमेयारूवे अज्झत्थिए समु०, जया णं अहं अगारवासं वसामि, तया णं अहं अप्पवसा जप्पभिइं च णं अहं मुंडा भवित्ता, अगाराओ अणगारियं पव्वइया, तप्पभिइं च णं अहं परवसा, पुव्विं च मम समणीओ आढेंति परिजाणेंति, इयाणिं नो आढेंति नो परिजाणेंति, तं सेयं खलु मम कल्लं जाव जलंते सुव्वयाणं अज्जाणं अंतियाओ पडिनिक्खमित्ता पाडियक्कं उवस्सयं उवसंपज्जित्ताणं विहरित्तए, एवं संपेहेति २ कल्लं जाव जलंते सुव्वयाणं अज्जाणं अंतियाओ पडिनिक्खमति २ पाडियक्कं उवस्सयं उवसंपज्जित्ताणं विहरति। तए णं सा सुभद्दा अज्जा अणोहट्टिता, अणिवारिया, सच्छंदमई वहुजणस्स चेडरूवेसु मुच्छिता जाव अब्भंगणं जाव नत्तिपिवासं च पच्चणुब्भवमाणी विहरति। तए णं सा सुभद्दा अज्जा पासत्था पासत्थविहारी एवं ओसन्ना०कुसीला०संसत्ता०अहाछंदा अहाछंदविहारी वहूहिं वासाइं सामन्नपरियागं पाउणति२अद्धमासियाए संलेहणाए अत्ताणं तीसं भत्ताइं अणसणाए छेएइ २ त्ता तस्स ठाणस्स अणालोइय अपडिक्कंता कालमासे कालं किच्चा सोहम्मे कप्पे वहुपुत्तियाविमाणे उववायसभाए देवसयणिज्जंसि देवदूसंतरिआ अंगुलस्स असंखिज्जभागमेत्ताए ओगाहणाए वहुपुत्तियदेवित्ताए उववन्ना। तए णं सा वहुपुत्तिया देवी अहुणोववन्नमित्ता समाणी पंचविहाए पज्जत्तीए जाव भासामणपज्जत्तीए, एवं खलु

गोयमा ! वहुपुत्तियाए देवीए सा दिव्वा देविड्ढी जाव अभिसमण्णागया, से केणट्ठेणं भंते ! एवं वुच्चइ ? बहुपुत्तिया देवी
वहु २ गो० वहुपुत्तियाणं देवीणं जाहे जाहे॰ सक्कस्स देविंदस्स देवरण्णो उवत्थाणियं करेइ, ताहे ताहे बहवे दारए य २
डिंभए य २ विउव्वति, जेणेव सक्के देविंदे देवराया तेणेव उवागच्छइ २ सक्कस्स देविंदस्स देवरण्णो दिव्वं देविड्ढिं
देवजुइं दिव्वं देवाणुभावं उवदंसेइ से तेणट्ठेणं गोयमा ! एवं वुच्चइ वहुपुत्तिया देवी । वहुपुत्तियाएणं भंते ! देवीए केवइयं कालं
ठिई पण्णत्ता ? गोयमा ! चतारि पलिओवमाइं ठिइ पण्णत्ता, बहुपुत्तियाणं भंते ! देवी तओ देवलोगाओ आऊक्खएणं
ठितीक्खएणं अणंतरं चयं चइत्ता कहिं गच्छिहिति ? कहिं ऊववज्जिहिति ? इहेव जंबुद्दीवे दीवे भारहे वासे विंझगिरिपाय-
मूले वेभेले संनिवेसे माहणकुलंसि दारियताए पच्चायाहिति । तएणं तीसेदारियाए अम्मापियरो एक्कारसमे दिवसे वीतिक्कंते
जाव वारसहिं दिवसेहिं वतिक्कंतेहिं अयमेयारूवं नामधिज्जं करेहिंति, होऊणं अम्हं इमीसे दारियाए नामधिज्जं सोमा । तए
णं सा सोमा ऊम्मुक्कवालभावा विन्नाय परिणयमित्ता जुव्वणगमणुप्पत्ता रूवेण य जोव्वणेण य लावण्णेण य उक्कट्ठा उक्किट्ठा सरीरा
यावि भविस्सति । तए णं तं सोमं दारियं अम्मापियरो उम्मुक्कबालभावं विन्नायजोव्वणगमणुप्पत्तं पडिकूइएणं सुक्केणं पडिरूवएणं
विणएणं नियगस्स भायणिज्जरट्ठकूडस्स भारियत्ताए दलयिस्संति, सा णं तस्स भारिया भविस्सति, इट्ठा कंता जावभंडकरंडग-
समाणा तिल्लकेला इव सुसंगोपिता, चेलपेला इव सुसपरिहिया, रयणकरंडगओ विव सुसंरक्खिया, सुसंगोविता, माणं सीयं
जाव विविहा रोआतंका फुसंतु । तए णं सा सोमा माहणी रट्ठकूडेणं सद्धिं विऊलाइं भोगभोगाइं भुंजमाणी संवच्छरे २ जुयलगं
पयायमाणी सोलसहिं संवच्छरेहिं वत्तीसं चेडगरूवे पयाया । तए णं सा सोमामाहणी तेहिं बहूहिं दारगेहि य दारियाहि य,

कुमारएहि य कुमारियाहि य, डिंभिएहिं डिंभियाहि य, अप्पेगइएहिं ऊत्ताणसेज्जाएहिं अप्पेगइएहि य थणियपाएहिं अप्पे० पीहगपाएहिं अप्पेगइएहिं परंगणएहिं अप्पेगइएहि परक्कममाणेहिं अप्पे० पक्खोलणएहिं अप्पेगइएहि थणं मग्गमाणेहिं अप्पेगइएहि खीरं मग्गमाणेहिं अप्पेगइएहि खिल्लणयं मग्गमाणेहिं अप्पेगइएहिं खज्जगं मग्गमाणेहिं अप्पे० कूरं मग्गमाणेहिं पाणियं मग्गमाणेहिं हसमाणेहिं रूसमाणेहिं अक्कोसमाणेहिं अक्कुस्समाणेहिं हणमाणेहिं हम्ममाणेहि विपलायमाणेहिं अणुगम्ममाणेहिं रोवमाणेहिं कंदमाणेहिं विलवमाणेहिं कूवमाणेहिं उक्कूवमाणेहिं निज्जायमाणेहिं निद्दायमाणेहिं पलवमाणेहिं दहमाणेहिं वममाणेहिं छेरमाणेहिं मत्तमाणेहिं मुत्तपुरीसवमियसुलित्तोवलित्ता मइलवसणपुव्वड जाव असुइबीभच्छा परमदुग्गंधा नो संचाएइ रट्ठकूडेण सद्धिं विऊलाइं भोगभोगाइं भुंजमाणी विहरित्तए। तए णं तीसे सोमाए माहणीए अण्णया कयाइं पुव्वरत्तावरत्त० कुडुंबजागरियं० अयमेयारूवे० समुप्पजित्था, एवं खलु अहं इमेहिं वहूहिं दारगेहि य जाव डिंभियाहिं अप्पेगइएइं ऊत्ताणसिज्जएहिं जाव अप्पेगइएहिं मुत्तमाणेहिं, दुज्जाएहि दुज्जंमएहिं हयविप्पहयभग्गेहिं एगप्पहारपडिएहिं जेणं मुत्तपुरीसवमियसुलित्तोवलित्ता जाव परमदुब्भिगंधा नो संचाएमि रट्ठकूडेण सद्धिं जाव भुंजमाणी विहरित्तए, तं धन्नाओ णं ताओ अम्मयाओ जावज्जीवियफले जाओ णं वंझाओ अवियारीओ जाणुकोप्परमायाओ सुरभिसुगंधगंधियाओ विउलाइं माणुस्सगाइं भोगभोगाइं भुंजमाणीओ विहरंति, अहण्णं अधण्णा अपुण्णा अकयपुण्णा नो संचाएमि रट्ठकूडेण सद्धिं विऊलाइं जाव विहरित्तए। तेणं कालेणं तेणं समएणं सुवयाओ नाम अज्जाओ इरिया० जाव वहुपरिवाराओ पुव्वाणुपुव्विं जेणेव वेभेले सन्निवेसे अहापडिरूवं ऊग्गहं जाव विहरंति। तए णं तासिं सुवयाणं अज्जाणं एगे संघाडए वेभेले सन्निवेसे उच्चनीयजावअडमाणे रट्ठकूडस्स गिहं अणुपविट्ठे। तए णं सा सोमा माहणी ताओ अज्जाओ

एज्जाओ एज्जमाणीओ पासति २ हट्ठा० खिप्पामेव आसणाओ अब्भुट्ठेइ २ त्ता, सत्तट्ठपयाइं अणुगच्छति वंदइ २ नमंसइ विऊलेणं असण ४ पडिलाभित्ता, एवं वयासी—एवं खलु देवाणुप्पिया ! अहं अज्जाओ ! रट्ठकूडेण सद्धिं विऊलाइं जाव संवच्छरे २ जुगलं पयामि, सोलसहिं संवच्छरेहिं बत्तीसं दारगरूवे पयाया। तए णं अहं तेहिं बहूहिं दारएहिं जाव डिंभयाहि य अप्पेगतिएहिं ऊत्ताणसिज्जएहिं जावमुत्तमाणेहिं दुज्जातेहिं जाव नो संचाएमि विहरित्तए, तं इच्छामि णं अज्जाओ ! तुम्हं अंतिए धम्मं निसामित्तए। तए णं ताओ अज्जाओ सोमाए माहणीए विचित्तं जाव केवलि०परिकहेति। तए णं सा सोमा माहणी तासिं अज्जाणं अंतिए धम्मं सोच्चा निसम्म हट्ठ०जाव हियया ताओ अज्जाओ वंदइ नमंसइ २ एवं वयासी—सद्दहामि णं अज्जाओ निग्गंथं पावयणं जाव अब्भुट्ठेमि णं अज्जाओ निग्गंथं पावयणं,एवमेयं अज्जाओ जाव से जहेयं तुब्भे वदह,नवरं अज्जाओ रट्ठकूडं आपुच्छामि, तए णं अहं देवाणुप्पियाणं अंतिअं मुंडा जाव पव्वयामि,अहासुहं देवाणुप्पिए ! मा पडिबंधं। तएणं सा सोमा माहणी ताओ अज्जाओ वंदइ नमंसइ,२ पडिविसज्जति। तए णं सा सोमामाहणी जेणेव रट्ठकूडे तेणेव ऊवागच्छइ २ करयल० एवं वयासी—एवं खलु मए देवाणुप्पिया! अज्जाणं अंतिए धम्मे निसंते सेवि अ णं धम्मे इच्छिए जाव अभिरुइए तए णं अहं देवाणुप्पिया! तुब्भेहिं अब्भणुण्णाया सुव्वयाणं जाव पव्वइत्तए। तए णं से रट्ठकूडे सोमं माहणिं एवं वयासी मा णं तुमं देवाणुप्पिए ! इयाणिं मुंडा भवित्ता,जाव पव्वयाहि,भुंजाहि ताव देवाणुप्पिए ! मए सद्धिं विउलाइं भोगभोगाइं, ततो पच्छा भुत्तभोई सुव्वयाणं अज्जाणं अंतियं मुंडा जाव पव्वयाहिं, तएणं सा सोमा माहणी रट्ठकूडस्स एयमट्ठं पडिसुणेति, तए णं सा सोमा माहणी ण्हाया जाव सरीरा चेडिया चक्कवालपरिकिण्णा साओ गिहाओ निक्खमति २ वेभेलं संनिवेसं

मज्झंमज्झेणं जेणेव सुव्वयाणं अज्जाणं उवस्सए तेणेव उवागच्छइ २ सुव्वयाओ अज्जाओ वंदति, नमंसइ, पज्जुवासइ २। तएण ताओ सुव्वयाओ अज्जाओ सोमाए माहणीए विचित्तं केवलिपण्णत्तं धम्मं कहेंति जहा जीवा सिज्झंति। तए णं सा सोमा माहणी सुव्वयाणं अंतियं जाव दुवालसविहं सावगधम्मं पडिवज्जइ २ सुव्वयाओ अज्जाओ वंदइ नमंसइ २ जामेव दिसिं पाउब्भूया जाव पडिगया। तए णं सा सोमा माहणी समणोवासिया जाया,अभिगय० जावअप्पाणं भावेमाणी विहरति। तए णं ताओ सुव्वयाओ अज्जाओ अन्नया कयाइ वेभेलाओ संनिवेसाओ पडिनिक्खमंति, बहिया जणवयविहारं विहरंति। तए णं ताओ सुव्वयाओ अज्जाओ अन्नया कयाइ पुव्वाणु० जाव विहरंति। तएणं सा सोमा माहणी इमीसे कहाए लद्धट्ठा समाणी हट्ठा ण्हाया तहेव निग्गया, जाव वंदइ नमंसइ २ धम्मं सोच्चा जाव नवरं रट्ठकूडं आपुच्छामि तए णं पव्वयामि अहासुहं। तए णं सा सोमा माहणी सुव्वयाणं अज्जाणं वंदइ नमंसइ २ सुव्वयाणं० पडिनिक्खमइ जेणेव सए गिहे जेणेव रट्ठकूडे तेणेव उवागच्छइ २ करयलपरिग्गहियं तहेव आपुच्छइ जाव पव्वइत्तए जाव अणुमण्णितथा। तए णं रट्ठकूडे विउलं असणं ४ तहेव जाव पुव्वभवे सुभद्दा जाव अज्जा जाया, इरिया समिया जाव गुत्तबंभयारिणी। तए णं सा सोमा अज्जा सुव्वयाणं अज्जाणं अंतियं सामाइयमाइयाइं एक्कारस अंगाइं अहिज्जइ २ बहूहिं छट्ठट्ठम जाव भावेमाणी बहूहिं वासाइं सामन्नपरियागं पाउणेति २ मासियाए संलेहणाए सट्ठिं भत्ताइं अणस २ आलोइय पडिक्कंता समाहिपत्ता कालमासे कालं किच्चा सक्कस्स देविंदस्स देवरण्णो सामाणियदेवत्ताए उववज्जिहिति, तत्थ णं अत्थे गइयाणं देवाणं दोसागरोवमाइं ठिई पण्णत्ता, तत्थ णं सोमस्स वि देवस्स दो सागरोवमाइं ठिई पण्णत्ता। से णं भंते! सोमे देवे तओ देव-

लोगाओ आउक्खएणं जाव कहिं उववज्जिहिति ? गोयमा ! महाविदेहे वासे जाव अंतं काहिति ॥ अथ काल्युदाहरणम् । यथा–तेणं कालेण तेणं समएणं रायगिहे नगरे गुणसिलए चेइए सेणिए राया चिल्लणा देवी सामी समोसढे, परिसा निग्गया जाव परिसा पज्जुवासेइ, तेणं कालेणं तेणं समएणं काली नामं देवी चमरचंचाए रायहाणीए कालवडिंसगभवणे कालंसि सीहासणंसि चउहिं सामाणियसाहस्सीहिं, चउहिं मयहरियाहिं, सपरिवाराहिं, तिहि परिसाहिं,सत्तहि अणिएहिं,सत्तहि अ-णियाहिवईहिं, सोलसहिं आयरक्खदेवसाहस्सीहिं,अण्णेहि य बहूहिं कालवडिंसयभवणवासीहिं असुरकुमारेहिं देवेहिं देवीहि य साद्धं संपरिवुडा महया जाव विहरइ, इमं च णं केवलकप्पं जंबुद्दीवं दीवं विउलेणं ओहिणा आभोएमाणी २ पासइ, तत्थ समणं भगवं महावीरं जंबुद्दीवे दीवे भारहे वासे रायगिहे नगरे गुणसिलए चेइए अहापडिरूवं उग्गहं उगिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे पासइ २ त्ता, हट्ठतुट्ठचित्तमाणंदिया पीयमणा जाव हयहियया सीहासणाओ अब्भुट्ठेइ २ त्ता पायपीढाओ पच्चोरुहइ २ त्ता पाउयाओ ओमुयइ २ त्ता तित्थगराभिमुही सत्तट्ठपयाइं अणुगच्छइ २ त्ता वामं जाणुं अंचेइ दाहिणं जाणुं धरणितलंसि निहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि णिवेसेइ २ त्ता इसिं पच्चुण्णमइ २ त्ता कडयतुडियथंभियाओ भुयाओ साहरइ २ त्ता करयल जाव कट्टु एवं वयासी–नमोत्थु णं अरहंताणं जाव संपत्ताणं णमोत्थु णं समणस्स भगवओ महावीरस्स जाव संपाविउकामस्स, वंदामि णं भगवंतं तत्थ गयं इह गया पासउ मे समणे भगवं महावीरे तत्थ गए इह गयं तिकट्टु वंदइ०२ सीहासणवरंसि पुरत्थाभिमुहा णिसण्णा, तए णं तीसे कालीए देवीए इमेयारूवे जाव समुप्पज्जित्था–सेयं खलु मे समणं भगवं महावीरं वंदित्ता जाव पज्जुवासित्तएत्तिकट्टु एवं संपेहेइ २ त्ता आभिओगियदेवे सद्दावेइ २ त्ता एवं वयासी–एवं खलु

देवाणुप्पिया ! समणे भगवं महावीरं एवं जहा सूरियाभो तहेव आणत्तियं देइ २ जाव दिव्वं सुरवराभिगमणजोग्गं करेह २ त्ता जाव पच्चप्पिणह, ते वि तहेव करित्ता जाव पच्चप्पिणंति, णवरं जोयणसहस्सविच्छिण्णं जाणं सेसं तहेव णामगोयं साहेइ, तहेव णट्टविहिं उवदंसेइ जाव पडिगया। भंतेत्ति भगवं गोयमे समणं भगवं महावीरं वंदइ नमंसइ २ एवं वयासी—कालीए णं भंते ! देवीए सा दिव्वा देविड्ढी ३ कहिं गया कूडागारसालादिट्ठंतो,अहो णं भंते! काली देवी महिड्ढिया ! कालीए णं भंते ! देवीए सा दिव्वा देविड्ढी किण्णा लद्धा किण्णा पत्ता किन्ना अभिसमण्णा गया ? एवं जहा सूरियाभस्स जाव एवं खलु गोयमा ! तेणं कालेणं तेणं समएणं इहेव जंबुद्दीवे दीवे भारहे वासे आमलकप्पाणामं णयरी होत्था, वण्णओ, अंबसालवणे चेइए, जियसत्तू राया, तत्थ णं आमलकप्पाए णयरीए काले णामं गाहावई होत्था, अड्ढे जाव अपरिभूए, तस्स णं कालस्स गाहावइस्स कालसिरीणामं भारिया होत्था, सुकुमाल जाव सुरूवा, तस्स णं कालस्स गाहावइस्स धूया कालसिरीए भारियाए अत्तया कालीनामं दारिया होत्था, वड्ढा वड्ढकुमारी, जुण्णा जुण्णकुमारी, पडियपुत्तत्थणी,निविन्नवरा,वरगपरिवज्जियावि होत्था। तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए आइगरे जहा वद्धमाणसामी, णवरं णवहत्थुस्सेहे, सोलसहिं समणसाहस्सीहिं अट्ठतीसाए अज्जियासाहस्सीहिं सद्धिं संपरिवुडे जाव अंबसालवणे समोसढे, परिसा निग्गया जाव पज्जुवासइ। तए णं सा काली दारिया इमीसे कहाए लद्धट्ठा समाणी हट्ठ०जाव हियया जेणेव अम्मापियरो तेणेव उवागच्छइ २ करयल जाव एवं वयासी—एवं खलु अम्मयाओ ! पासे अरिहा पुरिसादाणीए आइगरे जाव विहरइ, तं इच्छामि णं अम्मयाओ ! तुब्भेहिं अब्भणुण्णाया समाणी पासस्स अरहओ पुरिसादाणीयस्स पायवंदिया गमित्तए, अहासुहं देवाणुप्पिए मा पडिबंधं

करेहि। तए णं सा काली दारिया अम्मापिइहिं अब्भणुण्णाया समाणी हट्ठतुट्ठ० जाव हियया ण्हाया कयवलिकम्मा कयकोउयमंगलपायच्छित्ता सुद्धप्पावेसाइं मंगल्लाइ वत्थाइं पवरपरिहिया अप्पमहग्घाभरणालंकिय सरीरा चेडियाचक्कवालपरिकिण्णा साओ गिहाओ पडिनिक्खमइ २ त्ता जेणेव बाहिरिआ उवट्ठाणसाला जेणेव धम्मिए जाणप्पवरे तेणेव उवागच्छइ २ धम्मियं जाणप्पवरं एवं जहा देवई जाव पज्जुवासइ। तए णं पासे अरहा पुरिसादाणीए कालीए दारियाए तीसे य महइ महालियाए परिसाए धम्मं कहेइ। तए णं सा काली दारिया पासस्स अरहओ पुरिसदाणोयस्स अंतिए धम्मं सोच्चा णिसम्म हट्ठ०जाव हियया पासं अरहं पुरिसादाणीयं तिक्खुत्तो वंदइ नमंसइ २ एवं वयासी—सद्दहामि णं भंते! णिग्गंथं पावयणं जाव से जहेयं तुब्भे वयह। जं णवरं देवाणुप्पिआ! अम्मापिअरो आपुच्छामि। तए णं अहं देवाणुप्पियाण अंतिए जाव पव्वयामि, अहासुहं देवाणुप्पिए! तए णं सा काली दारिया पासेणं अरहा पुरिसादाणीए णं एवं वुत्ता समाणी हट्ठतुट्ठा जाव हियया पासं अरहं वंदइ णमंसइ २ त्ता, तमेव धम्मियं जाणप्पवरं दुरुहइ २ पासस्स अरहओ पुरिसादाणीयस्स अंतियाओ अंवसालवणाओ चेइयाओ पडिनिक्खमइ २ त्ता जेणेव आमलकप्पा णयरी तेणेव उवागच्छइ २ आमलकप्पं णयरिं मज्झंमज्झेणं जेणेव बाहिरिआ उवट्ठाणसाला तेणेव उवागच्छइ २ धम्मियं जाणप्पवरं ठवेइ २ धम्मियाओ जाणप्पवराओ पच्चोरुहइ २ जेणेव अम्मापियरो तेणेव उवागच्छइ २ करयल जाव एवं वयासी—एवं खलु अम्मयाओ! मए पासस्स अरहओ अंतिए धम्मे निसंते, से वि य धम्मे इच्छिए पडिच्छिए अभिरुइए। तए णं अहं अम्मयाओ! संसारभउव्विग्गा, भीया जम्मणमरणाणं, इच्छामि णं तुब्भेहिं अब्भणुण्णाया समाणी पासस्स अरहओ अंतिए मुंडा भवित्ता, अगाराओ अणगारियं

पवइत्तए, अहासुहं देवाणुप्पिए! मा पडिबंधं करेह। तए णं से काले गाहावइ विउलं असणं ४ उवक्खडावेइ २ त्ता मित्तणाइनियगसयणसंबंधिपरियणं आमंतेइ २ तओ पच्छा ण्हाए जाव विउलेणं पुप्फवत्थगंधमल्लालंकारेणं सक्कारेत्ता, सम्माणेत्ता तस्सेव मित्तणातिणियगसयणसंबंधि परियणस्स पुरओ कालियं दारियं सेयापीएहिं कलसेहिं ण्हावेइ २ सव्वालंकारविभूसियं करेइ २ त्ता पुरिससहस्सवाहणीयं सीयं दुरूहति, मित्तणाइनियगसयणसंबंधिपरियणेण सद्धिं संपरिवुडा सव्विड्ढीए जाव रवेणं आमलकप्पं णयरिं मज्झंमज्झेणं निग्गच्छइ २ त्ता जेणेव अंबसालवणे चेइए तेणेव उवा० २ त्ता छत्ताइए तित्थगराइसए पासइ २ त्ता सीयं ठवेइ २ त्ता कालियं दारियं सीयाओ पच्चोरुहति। तए णं तं कालियं दारियं अम्मापियरो पुरओ काउं जेणेव पासे अरहा पुरिसादाणीए, तेणेव उवा० २ वंदइ नमंसइ २ एवं वयासी–एवं खलु देवाणुप्पिया! काली दारिया अम्हं धूया इट्ठा जाव किमंग पुण पासणयाए! एस णं देवाणुप्पिया! संसारभउव्विग्गा, इच्छइ देवाणुप्पियाणं अंतिए मुंडा भवित्ता जाव पव्वइत्तए, तं एयं देवाणुप्पियाणं सिस्सिणिभिक्खं दलयामो, पडिच्छंतु णं देवाणुप्पिया! सिस्सिणिभिक्खं, अहासुहं देवा० मा पडिबंधं। तए णं सा काली कुमारी पासं अरहं वंदइ नमंसइ २ त्ता, उत्तरपुरच्छिमं दिसीभागं अवक्कमइ २ त्ता, सयमेव-आभरणमल्लालंकारं ओमुयइ २ त्ता सयमेव लोयं करेइ २ जेणेव पासे अरहा पुरिसादाणीए तेणेव उवा० २ पासं अरहं तिक्खुत्तो वदइ णमंसइ २ एवं वयासी–आलित्ते णं भंते लोए एवं जहा देवाणंदा जाव सयमेव पव्वाविउं। तए णं पासे अरहा पुरिसादाणीए कालिं सयमेव पुप्फचूलाए अज्जाए सिस्सिणीयत्ताए दलयइ, तए णं सा पुप्फचूला अज्जा कालिं कुमारिं सयमेव पव्वावेइ जाव उवसंपज्जित्ताणं विहरइ। तए णं सा काली अज्जा जाया, इरिया समिया

जाव गुत्तबंभयारिणी। तए णं सा काली अज्जा पुप्फचूलाए अज्जाए अंतिए सामाइयमाइयाइं एक्कारस अंगाइं अहिज्जइ, बहुइं चउत्थ जाव विहरइ, तए णं सा काली अज्जा अण्णया कयाइ सरीरवाउसिया जाया यावि होत्था, अभिक्खणं २ हत्थे धोवेइ, पाए धोवेइ, सीसं धोवेइ, मुहं धोवेइ, थणंतराणि धोवेइ, सीसं धोवेइ, कक्खंतराणि गुज्झंतराणि धोवेइ, जत्थ २ वि य णं ठाणं वा सेज्जं वा निसीहियं वा चेएइ, तं पुव्वामेव अब्भुक्खेत्ता, तओ पच्छा आसयइ वा सयइ वा, तए णं सा पुप्फचूला अज्जा कालिं अज्जं एवं वयासी—णो खलु कप्पइ देवाणुप्पिए! समणीणं निग्गंथीणं सरीरबाऊसियाणं होत्तए, तुमं च णं देवाणुप्पिए! सरीरवाऊसिया जाया, अभिक्खणं २ हत्थे धोवसि जाव आसयाहि सयाहि वा तं तुमं देवाणुप्पिए! एयस्स ठाणस्स आलोएहिजाव पायच्छित्तं पडिवज्जाहि। तए णं सा काली अज्जा पुप्फचूलाए अज्जाए एयमट्ठं नो आढाइ जाव तुसिणीया संचिट्ठइ। तए णं ताओ पुप्फचूलाओ अज्जाओ कालि अज्जं अभिक्खणं २ हीलंति णिंदंति खिसंति गरिहंति अवमण्णंति अभिक्खणं २ एयमट्ठं निवारेंति। तए णं तीसे कालीए अज्जाए समणीहिं णिग्गंथीहिं अभिक्खणं २ हीलिज्जमाणीए जाव वारिज्जमाणीए इमेयारूवे अज्झत्थिए जाव समुप्पज्जित्था, जया णं अहं अगारवासमज्झे वसित्था, तदा णं अहं सयंवसा जप्पभिइं च णं अहं मुंडा भवित्ता अगाराओ अणगारियं पव्वइया तप्पभिइं च णं अहं परवसा जाया, तं सेयं खलु मम कल्लं पाऊप्पाभायाए रयणीए जाव जलंते पाडिक्कं ऊवस्सयं ऊवसंपज्जित्ताणं विहरित्तए त्तिकट्टु एवं संपेहेइ कल्लं जाव जलंते पाडिक्कं उवस्सयं गिण्हइ, तत्थ णं अणिवारिया अणोहट्टिया सच्छंदमई अभिक्खणं २ हत्थे धोवेति जाव सयइ वा, तए णं सा काली अज्जा पासत्था पासत्थविहारी, ओस-

न्ना ओसन्नविहारी, कुसीला २ अहाछंदा २ संसत्ता २ बहूणि वासाणि सामण्णपरियागं पाउणति २ अद्धमासियाए संलेहणाए अप्पाणं झूसेति २ तीसं भत्ताइं अणसणाए छेएइ २ तस्स ठाणस्स अणालोइय अपडिक्कंता कालमासे कालं किच्चा चमरचंचाए रायहाणीए कालवडिंसए भवणे उववायसभाए देवसयणिज्जंसि देवदूसंतरिया अंगुलस्स असंखेज्जभागमित्ताए ओगाहणाए कालीदेवित्ताए उववण्णा। तए णं सा काली देवी अहुणोववण्णा समाणी पंचविहाए पज्जत्तीए जहा सूरियाभो जाव भासामणपज्जत्तीए, तए णं सा काली देवी चऊण्हं सामाणियसाहस्सीणं जाव अन्नेसिं च बहूणं कालवडिंसगभवणवासीणं असुरकुमाराणं देवाण य देवीण य आहेवच्चं जाव विहरति, एवं खलु गोयमा ! कालीए देवीए सा दिवा देविड्ढी ३ लद्धा पत्ता अभिसमण्णागया, कालीए णं भंते ! देवीए केवतियं कालं ठिती पन्नत्ता ? गोयमा ! अड्ढाइज्जाइं पलिओवमाइं ठिई पण्णत्ता। काली णं भंते ! देवी ताओ देवलोगाओ अणंतरं उवट्टित्ता कहिं गच्छिहिति ? कहिं उववज्जिहिति ? गोयमा ! महाविदेहे वासे सिज्झिहिति ५ एवं काली गमेणं राईपमुहाओ वि सव्वाओ नाया धम्मकहंगबितिअसुयक्खंधाओ णेआओ, एवं च पासस्स भगवओ सवग्गेणं छउत्तरदुसय २०६ मित्ताओ साहुणीओ बाउसत्ताइणा विराहिअसामण्णाओ भवणवइंद ११८ वंतरिंद ६४ सूर ४ चंद ४ सोहम्मी ८ साणिदाणं ८ अग्गमहिसित्तं पाविऊण वीरस्स पुरओ गोयमाईणं समणाणं नट्टविहिं उवदंसित्ता सट्ठाणं गयाओ। तओ चुया महाविदेहे सिज्झिस्संतित्ति। विषमाक्षरेति गाथाछन्दः ॥ ११३ ॥ अथ गाथात्रयेण गच्छप्रत्यनीकाया दर्शयति—

**गच्छइ सविलासगई, सयणीअं तूलिअं सविब्बोअं। उवट्टेइ सरीरं, सिणाणमाईणि जा कुणइ।११४।**

**गेहेसु गिहत्थाणं, गंतूण कहा कहेइ काहीआ। तरुणाइअहिवडंते, अणुजाणे साइ पडिणीआ ।११५।**

अनयोर्व्याख्या—' गच्छइ० गेहे० ' याऽऽर्या सविब्बोकं यथा स्यात् तथा सविलासा गतिर्यस्याः सा सविलासगतिर्गच्छति, तत्र विब्बोकविलासयोर्लक्षणमिदं–इष्टानामर्थानां प्राप्तावभिमानगर्वसम्भूतः। स्त्रीणामनादर कृतो, विब्बोको नाम विज्ञेयः ॥ १ ॥ स्थानासनगमनानां, हस्तभ्रूनेत्रकर्म्मणां चैव, उत्पद्यते विशेषो यः, श्लिष्टः स तु विलासः स्यात् ॥२॥ अन्ये त्वाहुः–विलासो नेत्रजो विकार इति, तथा शयनीयं–पल्यंकादिकं तूलिकाश्च–संस्कृतरूतादिभृतामर्कतूलादिभृतां वा सेवते इति शेषः। तथा या शरीरमुद्वर्त्तयति–तैलादिना अभ्यङ्गयति, तथा या स्नानादीनि च करोति, अथवा सविलासगतिर्गच्छति तथा शयनीयं तूलिकाश्च 'सविब्बोअं'ति उच्छीर्षकसहितां सेवते, शेषं तथैव,तथा गृहस्थानां गृहेषु गत्वा उपलक्षणत्वादुपाश्रयेऽपि स्थिता संयमयोगान्मुक्त्वा या काथिका-काथिकलक्षणोपेता आर्या कथाः–धर्मविषयाः संसारव्यापारविषया वा कथयति। काथिकलक्षणश्चेदम्-सज्जायादिकरणिज्जे जोगे मोत्तुं जो देसकहाइ कहाओ कहेइ सो काहिओ–" आहारादीणट्ठा, जसहेउं अहव पूअणनिमित्तं। तक्कम्मो जो धम्मं, कहेइ सो काहिओ होइ ॥१॥ धम्मकहंपि जो करेइ आहारादिनिमित्तं वत्थपायादिनिमित्तं जसत्थी वा वंदणादि पूआनिमित्तं वा सुत्तत्थपोरिसिमुक्कवावारो अहो अ राओ अ धम्मकहादिपढणकहणवग्गो, तदेवास्य केवलं कर्म्म तत्कर्मा, एवंविधो काहिओ भवति, चोअगआह–" नणु सज्झाओ पंचविहो वायणादिगो, तस्स पंचमो भेदो धम्मकहा, तेण भवसत्ता पडिबुज्झंति, तित्थे अ अवुच्छित्ती पभावणा य भवति, अतो ताओ निज्जरा चेव भवति, कहं काहिअत्तं पडिसिज्झइ ? आचार्य आह–" कामं खलु धम्मकहा, सज्झायस्सेव पंचमं अंगं। अव्वुच्छित्ती अ तवो, तित्थस्स पभावणा

चेव ॥ १॥ ” पूर्वाभिहितनोदकानुमते कामशब्दः खलुशब्दोऽवधारणार्थे किमवधारयति ? इमं सज्झायस्स पंचमं चेवांगं धम्मकहा, जइ अ एवं । “तहवि अ न सव्वकालं, धम्मकहा जीइ सव्वपरिहाणी । नाउं च खेत्तकालं, पुरिसं च पवेदए धम्मं ॥२॥” सव्वकालं धम्मो न कहेअव्वो जओ पडिलेहणाइ संजमजोगाणं, सुत्तत्थपोरिसीण य, आयरिय–गिलाणमाइ किच्चाण य, परिहाणी भवति; अनो न काहिअत्तं कायव्वं । जया पुण धम्मं कहेइ तया नाउं साधुसाधुणीण य बहुगच्छुवग्गहं खित्तं त्ति ओमकाले बहूणं साहुसाहुणीणं उवग्गहकरा इमे दाणसड्ढादि भविस्संति, धम्मं कहेइ रायाइपुरिसं वा नाउं कहिज्जा, महाकुले वा इमेण उवसंतेण पुरिसेण बहू उवसमंतीति कहिज्जत्ति, श्रीनिशीथसूत्रत्रयोदशोद्देशकप्रान्तगत–“ जे भिक्खू काहीअं वंदइ वंदंतं वा साइज्जतो ”–ति सूत्रचूर्णौ–तथा या तरुणादीन् पुरुषान् अभियततः–अभिमुखमागच्छत अनुजानाति–सुन्दरमागमनं भवतां, पुनरागमनं विधेयं, कार्यं ज्ञाप्यमित्यादि प्रकारेण “माइ जे राः पादपूरणे” (८–२–२१७) इति प्राकृतसूत्रोक्तेरिकारः पादपूरणार्थः । गच्छस्य प्रत्यनीका शत्रुतुल्या स्यात् भगवदाज्ञाविराधकत्वादिति । द्वे अपि गाथाछन्दसी॥११४॥११५॥

**वुड्ढाणं तरुणाणं, रत्तिं अज्जा कहेइ जा धम्मं । सा गणिणी गुणसायर ! पडिणीआ होइ गच्छस्स ॥ ११६ ॥**

व्याख्या–‘वुड्ढाणं०’ वृद्धानां–स्थविराणां तरुणानां–यूनां पुरुषाणां केवलानामकेवलानां वा रत्तिं ति “ सप्तम्या द्वितीया ” ( ८–३–१३७ ) इति प्राकृतसूत्रेण सप्तमीस्थाने द्वितीयाविधानात् रात्रौ या आर्या गणिनी ‘ धम्मं ’ति धर्मकथां कथयति, उपलक्षणत्वाद्दिवसेऽपि या केवलपुरुषाणां धर्मकथां कथयति, गुणसागर ! हे इन्द्रभूते ! सा गणिनी गच्छस्य प्रत्यनीका भवति, अत्र च गणिनी ग्रहणेन शेषसाध्वीनामपि तथाविधाने प्रत्यनीकत्वमवसेयमिति । ननु कथं साध्व्यः केव-

लपुरुषाणामग्रे धर्म्मकथां न कथयन्ति ? उच्यते–यथा साधवः केवलानां स्त्रीणां धर्म्मकथां न कथयन्ति, तथा साध्व्योऽपि केवलानां पुरुषाणामग्रे धर्म्मकथां न कथयन्ति, यत उक्तं श्रीउत्तराध्ययने–"नो इत्थीणं कहं कहित्ता हवइ से निग्गंथे, तं कहमिति ? आयरियाह–निग्गंथस्स खलु इत्थीणं कहं कहेमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जेज्जा, भेदं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं भवेज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसिज्जा, तम्हा खलु निग्गंथे नो इत्थीणं कहं कहेज्ज" त्ति 'नो इत्थीणं' ति नो स्त्रीणां एकाकिनीनां कथां कथयिता भवति, यथेदं दशब्रह्मचर्यसमाधिस्थानमध्ये द्वितीयं ब्रह्मचर्यसमाधिस्थानं साधूनामुक्तं, तथा साध्वीनामप्येतत् युज्यते, तच्च साध्वीनां पुरुषाणामेव केवलानां कथाया अकथने भवतीति तथा 'स्थानाङ्गे'ऽपि 'नो इत्थीणं कहं कहेत्ता हवइ' इदं नवब्रह्मचर्यगुप्तीनां मध्ये द्वितीयगुप्तिसूत्रं, अस्य वृत्तिः–'नो स्त्रीणां केवलानामिति गम्यते, धर्मदेशनादिलक्षणवाक्यप्रतिबन्धरूपामित्यादि' यथा च द्वितीयां गुप्तिं साधवः पालयन्ति, तथा साध्व्योऽपि पालयन्ति, सा च साध्वीनां पुरुषाणामेव केवलानामग्रे कथाया अकथने भवतीत्यतः प्रोच्यते, न केवलपुरुषाणां साध्व्यो धर्म्मकथां कथयन्तीति । गाथाछन्दः ॥११६॥

अथ यथा श्रमणीभिर्गच्छस्य प्रधानत्वं स्यात् तथा दर्शयति–

**जत्थ य समणीण-मसंखडाइ गच्छंमि नेव जायंति । तं गच्छं गच्छवरं, गिहत्थभासा उ नो जत्थ ।११७।**

व्याख्या–'जत्थ य' यत्र च गणे श्रमणीनां परस्परमसंखडानि–कलहा नैव जायन्ते–नैवोत्पद्यन्ते, तथा यत्र गणे गृहस्थानां भाषाः ममा आई बापा भाइ बाइ इत्यादिका, अथवा गृहस्थैः सह सावद्यभाषाः गृहस्थभाषास्ता नोच्यन्ते, स गच्छः

गच्छवरः-सकलगच्छप्रधानः स्यादिति । गाथाछन्दः ॥ ११७॥ अथ स्वच्छन्दाः श्रमण्यो यत्कुर्वन्ति तद्गाथापञ्चकेन प्रकटयति-

**जो जत्तो वा जाओ, नालोअइ दिवसपक्खिअं वावि। सच्छंदा समणीओ, मयहरिआए न ठायंति ॥११८।**

व्याख्या-'जो जत्तो०' यो यावान् वा अतीचार इति शेषः जातः-उत्पन्नः तं तथा दैवसिकं पाक्षिकं वाऽपि शब्दाच्चातुर्मासिकं सांवत्सरिकं वाऽतिचारं नालोचयन्ति, अत्र वचनव्यत्ययः प्राकृतत्वात् स्वेच्छाचारिणः श्रमण्यः तथा महत्तरिकाया-मुख्यसाध्व्या आज्ञायामिति शेषः, न तिष्ठन्तीति । गाथाछन्दः ॥ ११८ ॥

**विंटलिआणि पउंजति, गिलाणसेहीण नेव तप्पंति। अणगाढे आगाढं, करंति आगाढि अणगाढं॥११९॥**

व्याख्या-'विंटलि०' विंटलिकानि-निमित्तादीनि, विटलं-निमित्तादीत्योघनिर्युक्तिवृत्त्यादौ व्याख्यानात् तानि प्रयुञ्जन्ते, अत्रापि वचनव्यत्ययः प्राकृतत्वादेव, तथा ग्लानाश्च-रोगिण्यः शैक्ष्यश्च-नवदीक्षिता इति द्वंद्वोऽतस्ताः नैव तर्पयन्ति-औषधभेषजवस्त्रपात्रज्ञानदानादिना नैव प्रीणयन्तीत्यर्थः । अत्र सूत्रे 'क्वचिद् द्वितीयादेः' (८-३-१३४) इति प्राकृतसूत्रेण द्वितीयास्थाने षष्ठी । यथा 'सीमाधरस्स वंदे'त्ति तथा आगाढं-अवश्यकर्त्तव्यं ग्लानप्रतिजागरणादिकं न आगाढं अनागाढं तस्मिन् अनागाढे कार्ये इति शेषः । आगाढं-अवश्यकर्त्तव्यमिति कृत्वा कुर्वन्तीत्यर्थः । तथा आगाढे-अवश्यकर्त्तव्ये कार्ये अनागाढं कार्यं येन कृतेन विनापि सरति तत्कार्यं कुर्वन्तीत्यर्थः । अथवा अनागाढयोगाऽनुष्ठाने वर्त्तमाने आगाढयोगानुष्ठानं कुर्वन्ति, तथा आगाढयोगानुष्ठाने अनागाढयोगानुष्ठानं कुर्वन्ति स्वच्छन्दाः श्रमण्य इति कर्तृपदं पूर्वगाथात आकर्षणीयम्,

एवमग्रेतनगाथात्रिकेऽपीति । गाथाछन्दः ॥ ११९ ॥

**अजयणाए पकुव्वंति, पाहुणगाण अवच्छला । चित्तलयाणि अ सेवंते, चित्ता रयहरणे तहा ॥१२०॥**

व्याख्या–'अजय०' अयतनया–ईर्यापथशोधनेन प्रकुर्वन्ति गमनादिकमिति शेषः । तथा प्राघूर्णिकानां–ग्रामान्तराद्यागत-साध्वीनां अवत्सला–निर्दोषशुभान्नपानादिना भक्तिं न कुर्वन्तीत्यर्थः । तथा चित्रलानि सूत्रे कप्रत्ययः स्वार्थिकः प्राकृतलक्ष-णवशात् चकारः–समुच्चये विचित्रचित्राणि वस्त्राणीतिशेषः, सेवन्ते–परिदधति तथा चित्राणि–पञ्चवर्णगुल्लादिरचनोपेतानि रजोहरणानि सेवन्ते–धारयन्ति स्वच्छन्दाः श्रमण्य इति । विषमाक्षरेति गाथाछन्दः ॥ १२० ॥

**गइविब्भमाइएहिं, आगारविगार तह पणासंति । जह वुड्ढगाण मोहो, समुईरइ किं तु तरुणाणं ॥१२१॥**

व्याख्या–'गइवि०' स्वच्छन्दाः श्रमण्यो गतिविभ्रमादिभिः 'आगारविगार'त्ति अत्र विभक्तिलोपः प्राकृतत्वात् तत आकारं–मुखनयनस्तनाद्याकृतिं विकारं च–मुखनयनादिविकृतिं यद्वा आकारस्य–स्वाभाविकाकृतेर्विकारो–विकृतिस्तं तथा प्रकाशयन्ति–प्रकटयन्ति, यथा वृद्धानां–अपेर्गम्यमानत्वात् स्थविराणामपि मोहः–कामानुरागः समुदीर्यते–समुत्पद्यते किं पुनस्तरुणानां तेषां सुतरां समुत्पद्यत एवेत्यर्थः, तुः-पुनरर्थे इति । गाथाछन्दः ॥ १२१ ॥

**बहुसो उच्छोलिंती, मुहनयणे हत्थपायकक्खाओ । गिण्हेइ रागमंडल, सोइंदिअ तहय कवट्टे ॥१२२॥**

व्याख्या–'बहुसो०' मुखनयनानि हस्तपादकक्षाश्च बहुशो–वारंवारं उच्छोलयन्ति–प्रक्षालयन्ति स्वच्छन्दाः श्रम-

ण्यस्तथा रागमण्डलं-वसन्तादिरागसमूहं अग्रेतन 'तहय'त्ति पदस्य 'गेण्हइ'त्ति पदेन सह सम्बन्धात् 'तहय गेण्हेइ'त्ति तथैव गृण्हन्ति तथैव कुर्वन्तीत्यर्थः, यथा 'कप्पट्ठे'त्ति कल्पस्थाः-समयपरिभाषया बालकास्तेषामपि श्रोत्रेन्द्रियं-श्रवणेन्द्रियं गिण्हेइत्ति क्रियाया अत्रापि सम्बन्धात् गृण्हन्ति-हरन्तीत्यर्थः, अथवा कारणे कार्योपचारात् रागो-रागोत्पत्तिहेतुर्वस्तु यथा मुखे शृङ्गारगीतादि नयनेऽञ्जनादि मस्तके सीमन्तादि ललाटे तिलकादि कण्ठे कुसुममालादि अधरे ताम्बूलरङ्गादि शरीरे चन्दनलेपादि तस्य मण्डलं समूहं तथा गृण्हन्ति यथा बालानामपि श्रोत्रेन्द्रियमुपलक्षणत्वादन्यदिन्द्रियचतुष्कं मनश्च गृण्हन्ति हरन्ति, अत्रोत्तरार्द्धे पाठान्तरं यथा-'गेण्हणरामणमंडणभोयंति व ता उ कप्पडे' अस्यार्थः-'गृहस्थबालकानां ग्रहणं कुर्वन्ति रामणं वा-क्रीडनं मण्डनं वा प्रसाधनं यदिवा ताः कल्पस्थान्-गृहस्थबालकान् भोजयन्ति, अत्रापि गाथायां विभक्तिलोपविभक्तिव्यत्ययवचनव्यत्ययाः प्राकृतत्वादेवेति । गाथाछन्दः ॥ १२१ ॥ ॥ अथ साध्वीनां शयनविधिं दर्शयन्नाह—

**जत्थ य थेरी तरुणी, थेरी तरुणी अ अंतरे सुअइ । गोअम ! तं गच्छवरं, वरनाणचरित्तआहारं ॥१२२॥**

व्याख्या-'जत्थ य०' यत्र च गणे स्थविरा ततस्तरुणी पुनः स्थविरा ततस्तरुणीत्येवं अंतरिताः साध्व्यः स्वपन्तीति भावार्थः । तरुणीनां निरन्तरं शयने हि परस्परजङ्घाकरस्तनादिस्पर्शनेन पूर्वक्रीडितस्मरणादिदोषः स्यात् अतः स्थविरान्तरिता एव ताः शेरते, हे गौतम ! वरज्ञानचारित्राधारं तं गच्छवरं जानीहीति । गाथाछन्दः ॥ १२३ ॥ अथ या आर्या न भवन्ति, ताः गाथात्रयेण दर्शयति—

**धोयंति कंठिआओ, पोअंती तह य दिंति पोत्ताणि। गिहिकज्जचिंतगाओ, नहु अज्जा गोअमा! ताओ॥१२४॥**

व्याख्या–'धोयंति०' याः कण्ठिका–गलप्रदेशान् धोवन्ति–नीरेण क्षालयन्ति तथा 'पोयंति'त्ति मुक्ताफलविद्रुमादीनि प्रोतयन्ति गृहस्थानामिति गम्यते, तथा च 'पोत्ताणि'त्ति बालकाद्यर्थं वस्त्राणि ददति चकारादौपधजटिकादिकमपि ददति, अथवा 'पोत्ताणि'त्ति जलार्द्रीकृतवस्त्राणि ददति मलस्फेटनाय शरीरे घर्षयन्तीत्यर्थः, तथा गृहिकार्यचिन्तिकाः–अगारिकृत्यकरणतत्पराः, हे इन्द्रभूते ! ता आर्या न हु–नैव भवन्तीति । गाथाछन्दः ॥ १२४ ॥

**खरघोडाइट्ठाणे, वयंति ते वावि तत्थ वच्चंति। वेसत्थीसंसग्गी, उवस्सयाओ समीवंमि ॥ १२५ ॥**

व्याख्या–'खरघोडाइ०' खरा–गर्द्दभाः घोटकाः–तुरंगमाः आदिशब्दाद्धस्त्यादयस्तेषां स्थाने या व्रजन्ति। उक्तं च व्यवहारभाष्यसप्तमोद्देशके–"तह चेव हत्थिसाला–घोडगसालाण चेव आसन्ने। जंति तह जंतसाला, काहीयत्तं च कुव्वंति ।१।" अथवा 'खर'त्ति खरका–दासाः घोडाः–चट्टाः अयं चानयोः शब्दयोरर्थः, श्रीबृहत्कल्पतृतीयोद्देशकवृत्तावस्ति आदिशब्दात् द्यूनकारादयस्तेषां स्थाने व्रजन्ति ते गर्द्दभाः अश्वादयो दासचट्टादयो वा तत्रार्यिकोपाश्रये व्रजन्ति समायान्तीत्यर्थः, श्रीव्यवहारभाष्यसप्तमोद्देशके त्वेवं प्रथमपदपाठान्तरं–'थलिघोडाइट्ठाणे'त्ति तत्र स्थाल्यो–देवद्रोण्यः तत्र घोटाडिंगरा अत्रादिशब्दस्तेषामेव देवडिंगराणामनेकभेदख्यापनार्थस्तेषां स्थाने व्रजन्ति ते वा स्थलीघोटादेवडिंगराऽपरपर्यायास्तत्रार्यिकोपाश्रये व्रजन्ति तथा वेश्यास्त्रीसंसर्गिः सदैव यासां यदिवा वेश्यागृहसमीपे यासामुपाश्रयः ता आर्यिका न भव-

न्नीति शेषः इति । गाथाछन्दः ॥ १२५ ॥

**सज्झायमुक्कजोगा, धम्मकहाविगहपेसण गिहीणं । गिहिनिस्सिज्जं बाहिंति, संथवं तह करं(रं)तीओ ॥१२६॥**

व्याख्या–'सज्झाय०' स्वाध्यायेन मुक्तो योगो व्यापारो यासां ताः स्वाध्यायमुक्तयोगाः 'छक्कायमुक्कजोग'त्ति पाठे तु षट्कायेषु मुक्तो योगो–यतनालक्षणो व्यापारो याभिस्ताः षट्कायमुक्तयोगास्तथाभूताः सत्यो गृहिणां धर्मकथा-नामाख्याने विकथानां च–स्त्रीकथादीनां करणे प्रेषणे च प्रेरणे च नानारूपे गृहिणामुद्युक्ताः, तथा या गृहिनिषद्यां बाधन्ते गृहिनिषिद्यासुपविशन्तीत्यर्थः, तथा याः संस्तवं–परिचयं गृहस्थैः सह कुर्वन्त्यो वर्त्तन्ते ताः साध्व्यो न भवन्तीति । गाथा-छन्दः ॥ १२६ ॥ अथ वृत्तद्वयेन गणिनीस्वरूपं दर्शयति—

**समा सीसपडिच्छीणं, चोअणासु अणालसा । गणिणी गुणसंपन्ना, पसत्थपुरिसाणुगा ॥ १२७ ॥**

व्याख्या–'समा सी०' स्वशिष्याणां प्रातीच्छिकानां च समा–तुल्या तथा चोदनासु अनलसा–कृतोद्यमा प्रशस्त-पुरुषाऽनुगता–प्रशस्तपुरुषानुसारिणी एवंविधा गणिनी–महत्तरिका गुणसम्पन्ना–ज्ञानादिगुणसहितेति । अनुष्टुप् छन्दः॥१२७

**संविग्गा भीयपरिसा य, उग्गदंडा य कारणे । सज्झायज्झाणजुत्ता य, संगहे अविसारया ॥ १२८ ॥**

व्याख्या–'संविग्गा०' संविग्ना–संवेगवती तथा भीतपर्षद् यतः कारणे उग्रदण्डा तथा स्वाध्यायध्यानयुक्ता तत्र स्वाध्यायः पञ्चधा ध्यानं च धर्म्मशुक्ललक्षणमिति, चकाराः समुच्चयार्थाः तथा सङ्ग्रहे–शिष्यादिसङ्ग्रहणे चकारादुपग्रहे च

विशारदा–कुशलेति । विपमाक्षरेति गाथाछन्दः ॥ १२८ ॥ अथ गाथात्रयेण वचनगुप्तिमाश्रित्य साध्व्याचारं दर्शयति–

**जत्थुत्तरपडिउत्तर, वडिआ अज्जा उ साहुणा सद्धिं । पलवंति सुरुट्ठावी, गोअम ! किं तेण गच्छेण॥१२९॥**

व्याख्या–'जत्थुत्त०' यत्र गणे आर्याः साधुना सार्द्धमुत्तरं प्रत्युत्तरं वा 'वडिअ' त्ति वृद्धा अपि तोरप्यर्थस्यात्र योजनात् तथा सुरुष्टा अपि–भृशं सरोषा अपि प्रलपन्ति–प्रकर्षेण वदन्ति, हे गौतम ! तेन गच्छाधमेन गच्छेन किं ? न किमपीत्यर्थः । गाथाछन्दः ॥ १२९ ॥

**जत्थ य गच्छे गोयम ! उप्पण्णे कारणंमि अज्जाओ । गणिणीपिट्ठिठिआओ, भासंती मउअसद्देण॥१३०॥**

व्याख्या–'जत्थ य०' हे गौतम ! यत्र च गच्छे ज्ञानादिकारणे उत्पन्ने 'अज्जाउ' त्ति आर्याः–साध्व्यो गणिनीपृष्ठिस्थिता मृदुकशब्देन भाषन्ते स गच्छः स्यादिति शेषः । इति गाथाछन्दः ॥ १३० ॥

**माऊए दुहिआए, सुण्हाए अहव भइणिमाईणं । जत्थ न अज्जा अक्खइ, गुत्तिविभेयं तयं गच्छं॥१३१॥**

व्याख्या–'माऊए०' यत्र गच्छे आर्या मातुः दुहितुः स्नुषायाः अथवा भगिन्यादीनां सम्बन्धि 'गुत्तिविभेयं' ति गुप्तेः–वचनगुप्तेर्विभेदो–भङ्गो यस्मात्तद् गुप्तिविभेदं अर्थान्नात्रकोद्घाटकमित्यर्थः, वचनमिति शेषः नाख्याति इदमुक्तं भवति, हे मातः हे दुहितः हे स्नुषे हे भगिने इत्यादिनात्रकोद्घाटकवचनेन मात्रादीन् नालापयति, यदुक्तं श्रीदशवैकालिके–अज्जिए पज्जिए वा वि, अम्मो माउसिअ त्ति अपि । उस्सिए भायणिज्ज त्ति, धूए नत्तुणिइ त्ति अ ॥ १ ॥" तथा "अज्जए पज्जए वा वि,

वप्पो चुल्लपिउत्ति अ । माऊला भाउणिज्जत्ति, पुत्ता नत्तुणिइत्ति अ ॥ २ ॥ " अथवा ममेयं माता ममेयं दुहितेत्यादि अहमस्यास्या वा माता अहमस्यास्या वा दुहिता अहमस्य अस्या वा वधूटीत्यादि वा नात्रकोद्घाटकं वचनं कारणं विना न जल्पति अथवा मात्रादीनामपि 'गुत्तिविभेयं'ति गोपनीयरूपमर्थं न कथयति स गच्छः स्यादिति । गाथाछन्दः ॥ १३१ ॥

अथ गाथात्रयेण साध्वीस्वरूपवक्तव्यताशेषमाह—

**दंसणियारं कुणई, चरित्तनासं जणेइ मिच्छत्तं । दुण्हवि वग्गाणज्जा, विहारभेयं करेमाणी ॥ १३२ ॥**

व्याख्या—'दंसणि०' दर्शनातिचारं करोति चारित्रनाशं मिथ्यात्वं च जनयति द्वयोरपि वर्गयोः साधुसाध्वीरूपयोरार्या किं कुर्वाणा विहार—आगमोक्तविधिना विचरणं तस्य भेदो—मर्यादोल्लङ्घनं तं कुर्वाणा । विहारस्वरूपं च किंचित् प्रथमाधिकारे २३ गाथावृत्तौ लिखितं, किञ्चिचात्रापि लिख्यते, " नो कप्पइ निग्गंथाण वा निग्गंथीण वा इमाओ पंच महण्णवाओ महानदीओ उद्दिट्ठाओ गणिताओ वंजियाओ अंतो मासस्स दुखुत्तो वा तिखुत्तो वा उत्तरित्तए वा संतरित्तए वा तं जहा गंगा जउणा सरऊ कोसिया मही", इति बृहत्कल्पचतुर्थोद्देशके अस्य वृत्तिः—" नो कल्पन्ते—न युज्यन्ते सूत्रे एकवचननिर्देशः प्राकृतत्वात् निर्ग्रन्थीनां वा इमाः—प्रत्यासन्नाः पञ्च महार्णव कल्पा महासमुद्रगामिन्यो महानद्यो—गुरुनिम्नगा उद्दिष्टा—सामान्येनाभिहिता यथा महानद्य इति गणिता यथा पञ्चेति व्यञ्जिता—व्यक्तीकृता यथा गङ्गेत्यादि अन्तः—मध्ये मासस्य द्विकृत्वो वा उत्तरीतुं—बाहुजङ्घादिना सन्तरीतुं—नावादिना तद्यथा—गंगा १ यमुना २ सरयूः ३ कोशिका ४ मही ५ एष सूत्रार्थः । अथ निर्युक्तिविस्तरः—पंचण्हं गहणेणं, सेसावि य सूइया महासलिला । तत्थ पुरा विहरिंसु, न य ताउ कयाइ

सुकेति ॥ १ ॥ पंचानां गङ्गादीनां ग्रहणेन शेषा अपि या महासलिला–वहूदका अविच्छेदवाहिन्यस्ताः सूचिता मन्तव्याः
स्याद्बुद्धिः किमर्थं गङ्गादीनां ग्रहणमित्याह–'तत्थे'त्यादि येषु गङ्गादयः पञ्च महानद्यो वहन्ति,तेषु पुरा साधवो विहृतवन्तो
न च ताः कदाचिदपि शुष्यन्ति, अतस्तासां ग्रहण''मित्यादि तथा "अह पुण एवं जाणिज्जा एरवई कुणालाए जत्थ चक्किया
एगं पादं जले किच्चा एगं पायं थले किच्चा एवण्हं कप्पइ अंतो मासस्स दुखुत्तो वा तिखुत्तो वा उत्तरित्तए वा संतरित्तए
वा, एवं नो चक्किया एवण्हं नो कप्पइ अंतो मासस्स दुखुत्तो वा तिखुत्तो वा उत्तरित्तए वा'' इति वृहत्कल्पचतुर्थोद्देशक
एव, अस्य वृत्तिः–"अथ पुनरेवं जानीयात् ऐरावती नाम नदी कुणालाया नगर्याः समीपे जङ्घार्द्धप्रमाणेनोत्सेधेन वहति,
तस्यामन्यस्यां वा यत्रैवं 'चक्किया' शक्नुयात् उत्तरीतुमिति शेषः, कथमित्याह–एकं पादं जले कृत्वा एकं पादं स्थले–
आकाशे कृत्वा एवण्हमिति वाक्यालंकारे यत्रोत्तरीतुं शक्नुयात् तत्र कल्पते अन्तर्मासस्य द्विकृत्वो वा त्रिकृत्वो वा उत्तरीतुं–
लङ्घयितुं सन्तरीतुं–भूयः प्रत्यागन्तुं यत्र पुनरेवमुत्तरीतुं न शक्नुयात् तत्र नो कल्पते अन्तर्मासस्य द्विकृत्वो वा त्रिकृत्वो वा
उत्तरीतुं वा सन्तरीतुं वा इति सूत्रार्थः। अथ भाष्यकृद्विषमपदानि व्याचष्टे–एरवइ जत्थ चक्किय, जलथलकरणे इमं तु
णाणत्तं। एगो जलम्मि एगो, थलम्मि पायं थलागासे ॥ १ ॥ ऐरावती नाम नदी तस्यां जलस्थलयोः पादकरणेनोत्तरीतुं
शक्यम्, इदमेव चात्र नानात्वं यत्पूर्वसूत्रोक्तासु महानदीषु मासान्तर्द्वौ त्रीन् वा वारान् न कल्पते, यच्चात्रैको जले एकश्च पादः
स्थले इत्युक्तं तदिह स्थलमाकाशमुच्यते–"एरवइ कुणालाए, विच्छिन्ना अद्धजोयणं वहति। कप्पति तत्थ अपुण्णे, गंतुं
जा वेरिसी अप्पण्णा ॥ २ ॥ ऐरावती नदी कुणाला नगर्या अदूरे अर्द्धं योजनं विस्तीर्णा वहति, सा चोत्सेधेन जङ्घार्धप्रमाणा,

तत्र ऋतुबद्धे काले मासकल्पे अपूर्णे त्रिकृत्वो भिक्षाग्रहणलेपानयनादौ कार्ये यतनया गन्तुं कल्पते या वेदृशी अन्याऽपि नदी तस्यामपि त्रिकृत्वो गन्तुं कल्पते, तथा 'अन्तो मासस्स दुखुत्तो वा' इत्यादि सूत्रं व्याख्याति—एरवइ जत्थ चकिय, तारिसाए नोवहम्मती खेत्तं। पडिसिद्धं उत्तरणं, पुण्णासति खेत्तणुण्णायं ॥ १ ॥ या ऐरावती नदी कुणालाजनपदे योजनार्द्धविस्तीर्णा जङ्घार्धमानमुदकं वहति, तस्यां केचित्प्रदेशाः शुष्काः न तत्रोदकमस्ति, तामुत्तीर्य यदि भिक्षाचर्यां गम्यते, तदा ऋतुबद्धे त्रय उदकसङ्घट्टास्ते च गतागतेन षट् भवन्ति, वर्षासु सप्त दकसंघट्टास्ते च गतागतेन चतुर्दश भवन्ति, एवमीदृशे संघट्टमाणे क्षेत्रं नोपहन्यते इत एकेनाप्यधिकेन सङ्घट्टेनोपहन्यते,अन्यत्रापि यत्राधिकतराः सङ्घट्टास्तत्रोत्तरणं प्रतिषिद्धं पूर्णे मासकल्पे वर्षावासे वा यद्यनुत्तीर्णानामपरं मासकल्पप्रायोग्यक्षेत्रमस्ति ततो नोत्तरणीयम्, अथानुत्तीर्णानामन्यत्क्षेत्रं नास्ति ततोऽसति क्षेत्रे उत्तरणमनुज्ञातम्, इदमेव व्याचष्टे,—सत्त उ वासासु भवे, दगसङ्घट्टा तिण्णि हुंति उडुबद्धे ते तु न हणंति खित्तं, भिक्खायरियं च न हणंति ॥ २ ॥ ये सप्तोदकसङ्घट्टा वर्षासु त्रयः सङ्घट्टाः ऋतुबद्धे साधूनां भवन्ति त एतावन्तः क्षेत्रं नोपघ्नन्ति, न च भिक्षाचर्यामुपघ्नन्ति,—जह कारणंमि पुण्णे, अंतो तह कारणंमि असिवादी। उवहीगहणे लिंपण, नावाय गते पि जयणाए ॥ ३ ॥ यथा कारणे पूर्णे मासकल्पे वर्षावासे वा अपरक्षेत्राभावे दृष्टमुत्तरणं तथा मासस्यान्तरप्यशिवादिभिः कारणैरुपधेर्वा ग्रहणार्थं लेपानयनार्थं वोत्तरणीयम्, कारणे यत्र नावाऽप्युदकं तीर्यते तत्रापि यतनया सन्तरणीयं तत्र चायं विधिः—नावथलखेवहेट्ठा, लेवो वा उवरिए व लेवस्स। दोण्णी दिवड्ढमेकं, अद्धं नावाइपरिहाती ॥ ४ ॥ तत्र पूर्वार्द्धपश्चार्द्धपदानां यथासंख्येन योजना नावुत्तरणस्थानाद्यदि द्वे योजने वक्रं स्थलेन गम्यते तेन गन्तव्यम्, न च नौरारोढव्या।

लेवहिट्ठत्ति, लेपस्याधस्तादकसङ्घट्टेन यदि सार्धयोजनपरिरयेण गम्यते ततस्तत्र गम्यतां न च नावमधिरोहेत्, एवं योजनपरिहारेण लेपेन गच्छतु न च नावमधिरोहेत्, अर्द्धयोजनपरिहारेण लेपोपरिणा गच्छतु न च नावमधिरोहेत् १। एवं नावुत्तरणस्थानात् स्थलादिषु योजनद्वयादिकं परिहीयते, एवमेव लेपोपर्युत्तरणस्थानात् सार्द्धयोजनपरिहारेण स्थलेन, एकयोजनपरिरयेण सङ्घट्टेन, अर्द्धयोजनपरिहारेण लेपेन गम्यतां न च लेपोपरिणा २। लेपोत्तरणस्थानादेकयोजनपर्यवहारेण स्थलेन अर्द्धयोजनपरिहारेण वा सङ्घट्टेन गन्तव्यं न लेपेन ३। सङ्घट्टोत्तरणस्थानादर्द्धयोजनपर्यवहारेण स्थलेन गम्यतां न च सङ्घट्टेन ४। एतेषां परिहारपरिमाणानामभावे नावा १ लेपोपरिणा २ लेपेन ३ सङ्घट्टेन वा ४ गम्यते न कश्चिद्दोप इत्यादि एतत्सूत्रद्वयार्थः। " प्रायः सर्वोऽपि श्रीनिशीथचूर्णीद्वादशोद्देशकप्रान्तेऽप्यस्ति। तथा इदाणिं नावत्ति दारं नावातारिमग्रहणा इमेवि जलसन्तरणप्रकारा गृह्यन्ते–जंघातारिमकत्थइ, कत्थइ वाहाहि अप्पणा न तरे। कुंभे दतिए तुंबे, नावा उडु वे य पण्णीए ॥१॥ समासतो जलसंतरणं दुविहं थाहमथाहं च। जं थाहं तं तिविहं संघट्टो १ लेवो २ लेवोवरियं च ३॥२॥ एवं तिविहंपि जंघासंतारिमगहणेण गहियं 'कत्थइ'त्ति क्वचिन्नद्यादिषु इद्दशं भवतीत्यर्थः, वितियं 'कत्थइ'त्ति कचित् नद्यादिषु अत्थाहं भवतीत्यर्थः। एत्थ य वाहाहिं अप्पणा नो तरेज्जा हस्तादिप्रक्षेपे वहूदकोपघातत्वात् जलभाविएहिं इमेहिं संतरणं कायवं कुंभेण तदभावा दतितेण तदभावा तुंबेण तदभावा उडुपेण तदभावा पण्णीए तदभावा नावाए वंधणुलोमा मज्झे नावागहणं कयं ॥ एत्तो एकतरेणं, तरिअवं कारणंमि जातंमि। एतेसि विवच्चासे, चाउम्मासा भवे लहुगा ॥ ३ ॥ कंठा, नवर 'विवच्चासे'त्ति सति कुंभस्स दतिएण तरति चउलहुयं एवं एकेकस्स वि वच्चासे चउलहुयं दट्ठवं, सवे एते कुंभादी

इमाए जयणाए घेतव्वा नावं पुण अहिकिच्च भण्णति—नवानवे विभासा उ, भाविताभाविए ति य। तदण्णभाविए चेव, उ-ल्लाणोल्ले य मग्गणा ॥ ४ ॥ सा नावा अहाकडेण य जाति संजयट्ठा वा अहाकडाए गंतव्वं असति अहाकडाए संजमट्ठाए वि जा जाति तीए वि गंतव्वं, सा दुविहा 'नवानवे विभास'त्ति नवा पुराणा वा नवाए गंतव्वं न पुराणाए समत्यपायत्वात्, नवा दुविहा 'भाविताभाविय'त्ति उदकभाविआ अभाविआ य जा उदके छूढपुव्वा सा उदकभाविता इतरा—अभाविता भाविताए गंतव्वं न इतराए उदगविराहणभया, उदगभाविता दुविहा 'तदण्णभाविय'त्ति तदुदगभाविता अन्नोदयभाविया य तदुदयभाविआए गंतव्वं न इतराए मा उदगशस्त्रं भविष्यतीति कृत्वा तदुदयभाविया दुविहा 'उल्लाणोल्ले य मग्गणा' उल्लाविता अणोल्ला—सुक्का उल्लाए गंतव्वं न इतराए दगाकर्षणभयात्, 'मग्गण'त्ति एषा एव मार्गणा याऽभिहिता एरिसनावाए पुण गच्छति, इमं जयणमतिक्कंतो—असती य परिरयस्सा, दुविहे तेणे व सावते दुविहे। संघट्टणलेवुवरी, दुजोयणाहाणिजानावा ॥ ५ ॥ जत्थ नावा तारिमं ततो पदेसाओ दोहिं जोयणेहिं गंतुं थलपहेण गम्मति त पुण थलपहं इमं नदि-कोप्परो वा वरणो वा संडेवगो वा तेण दुजोयणिएण परिरयेण गच्छतु मा य नावोदएण, अह असति परिरयस्स जया सइ वा इमेहिं दोसेहिं जुत्तो परिरओ 'दुविहा तेण' त्ति सरीरोवकरणतेणा 'सावते दुविह'त्ति सीहा वाला वा तेण वा थलपहेण भिक्खं न लब्भति वसही वा तो दिवड्ढजोयणेण संघट्टेण गच्छउ मा य नावाए, अह तत्थवि एते चेव दोसा तो जोयणेण लेवेण गच्छतु मा य नावाए, अह नत्थि लेवो सति वा दोसजुत्तो तो अद्धजोयणेण लेवुवरिएण गच्छउ मा य नावाए, अह तंपि नत्थि दोसलं वा तदा नावाए गच्छउ एवं दुजोयणहाणीए नावं ॥ एत्तो संघट्ट १ लेव २ लेवुवरीण य

३ वक्खाणं कज्जइ ॥ जंघद्धा संघट्टो १, नाभि लेवो २ परेण लेवुवार । ३ एगो जले थलेगो, निप्पगलणतीरमुस्सग्गो ॥६॥ पुव्वद्धं कंठं, संघट्टे गमणजयणा भण्णति, एगं पायं जले काउं एगं थले थलमिह आगासं भण्णति सामाइय सण्णाए, एतेण विहाणेणं वक्खमाणेण य जयणमुत्तिण्णो जया भवति तया निप्पगलिते उदगे तीरे इरियावहियाए उस्सग्गं करेति संघट्ट-जयणाए भणिया ॥ इदाणिं लेवं लेवुवरिं च भणति जयणा—निभए गारत्थीणं तु, मग्गतो चोलपट्टमुस्सारे । सभए अत्थग्घे वा, उत्तिण्णेसुं वणं पट्टं ॥ ७ । निब्भयं जत्थ चोरभयं नत्थि तत्थ गारत्थीणं तु मग्गतो गारत्था—गिहत्था तेसु जलमवतिण्णेसु मग्गतो पच्छत्तो जलं उयरइत्ति भणियं होइ पच्छतो य ठिता जहा जहा जलमवतरंति तहा तहा उवरुवरि चोलपट्टमुस्सारेंनि मा बहुउदगघातो भविस्सति । जत्थ पुण सभयं चोराकुलमित्यर्थः, अत्थग्घं वा जत्थ थाघो नत्थि तत्थ उत्तिण्णेसुत्ति जलं अद्धेसु गिहत्थेसु अवतिण्णेसु घणं आयय पट्टं—चोलपट्टं वंधिउं मध्ये अवतरन्तीत्यर्थः ॥ जत्थ संतरणे चोलपट्टो उदउल्लेज्ज ततिथमा जयणा—दगतीरे वा चिट्ठे, निप्पगलो जाव चोलपट्टो । उ सभए पलंबमाणं, गच्छति काएण अफुसंतो ॥ ८ ॥ दगं—पानीयं तीरं—पर्यन्तं तत्थ ताव चिट्ठे जाव निप्पगलो चोलपट्टो तुशब्दो निर्भयावधारणे, अह पुण सभयं तो हत्थेण गहेउं पलंबमाणं चोलपट्टयं गच्छति दंडके वा काउं गच्छति, न य तं पलंबमाणं दडाग्रे वा व्यवस्थितं कायेन स्पृशतीत्यर्थः ॥ एसा गिहिसहियस्स दगुत्तरणे जयणा भणिया गिहि असती पुण इमा जयणा—असति गिहि णालियाए, आणक्खेउं पुणो वि पडिअरणं । एगा भोगपडिग्गह, केई सव्वाणि नो पुरओ ॥ ९ ॥ असति सत्थिल्लयगिहत्थाणं जतो पाडिवहिया उत्तरमाणा दीसंति तओ उत्तरियव्वं, असति वा तेसिं 'नालियाए आणक्खेउं पुणो वि पडिअरणं' आयप्पमाणाओ

चउरंगुलाहिगो दंडो नालिया भण्णति, तीए आणक्खेउं-उवधेत्तूणं परतीरं गंतुं आरपारमागमणं पडिउत्तरणं, नालियाए वा असति तरणं प्रति कयकरणे जो सो तं आणक्खेउं जया आगतो भवति तदा गंतवं, एवं जंघातारिमे विही भणिओ, इमा पुण अत्थाहे जयणा त पढमं नावाए भण्णति 'एगा भोगपडिग्गहे'त्ति एगा भोगो एगा जोगो भण्णति, एकट्ठबंधणेत्ति भणियं होइ तं च मत्तगोपकरणाणं एकट्ठं 'पडिग्गहे'त्ति पडिग्गहो सिक्कगे अहोमुहं काउं पुढो कज्जति, नौभेदादात्मरक्षणार्थं केचिदाचार्या एवं वक्खाणयन्ति 'सव्वाणि'त्ति मत्तगोपकरणं पडिग्गहो य पत्तोपकरणमसेसं पडिलेहिय एताभ्यामादेशद्वयाभ्यामन्यतमेनोपकरणं कृत्वा सीसोवरियं कायं पादे य पमज्जिऊणं नावारुहणं कायवं, तं च 'णो पुरओ'त्ति, पुरस्तादग्रतः प्रवर्त्तनदोषभयान्नो अनवस्थानदोषभयाच्च, पिट्ठओ वि न दुहेज्जा मा ताव विमुचेज्जा अतिविकृष्टजलाध्वानभयाद्वा तम्हा मज्झे दुहेज्जा। तत्थिमे ठाणे मोत्तुं-ठाणतियं मोत्तूणं,उवउत्तो तत्थ ठाति णावाहे। दतिओडु व तुंबेसु त्रि, एस विही होति संतरणे॥ १०॥ देवताट्ठाणं कूवयट्ठाणं निज्जामगट्ठाणं अहवा पुरतो मज्झे पिट्ठओ पुरतो देवयट्ठाणं मज्झे सिंचणट्ठाणं पच्छा तोरणट्ठाणं एते वज्जिय तत्थ नावाए अणाबाहे ठाणे ठायति 'उवउत्तो'त्ति नमोक्कारपरायणो सागारपच्चक्खाणं पच्चक्खाओ य ठाति जया पुण पत्तो तीरं तदा णो पुरतो उत्तरेज्जा मा महोदगे निब्बुडेज्जा न य पिट्ठतो मा सा अवसारेज्जा नावाए तद्दोसपरिहरणत्थं मज्झे उत्तरियवं, तत्थ य उत्तिण्णेण इरियावहियाए उस्सग्गो कायवो, जदि त्रि न संघट्टति दगं 'दतिओडु व तुंबेसु वि एसविही होति संतरणे' नवरं 'ठाणतिय मोत्तुं' णावत्ति दारं गतमिति श्रीनिशीथचूर्णिपीठिकागतं तथा-ऊणाइरित्तमासे, अट्ठ विहरिऊण गिम्हहेमंते। एगाहं पंचाहं, मासं च जहा समाहीए॥ १॥ चत्तारि हेमंतिया

मासा चत्तारि गिम्हिया मासा एते अट्ठ ऊणा अतिरित्ता वा विहरित्ता भण्णति, पडिमा पडिवण्णाणं एगाहो अहालंदियाणं पंचाहो जिणकप्पियाणं सुद्धपरिहारियाण थेराण य मासो जस्स जहा णाणदंसणचरित्तसमाही भवति, सो तहा विहरित्ता वासाखेत्तं उवेति ॥ १ ॥ कहं पुण ऊणा अतिरित्ता वा उडुबद्धिया मासा भवंति ? तत्थ ऊणा–काऊणं मासकप्पं, तत्थेव उवागयाण जयणाए। चिक्खल्लवासरोहेण, वा वि तेण ठिया ऊणा ॥ २ ॥ जत्थ खेत्ते आसाढमासकप्पो कओ तत्थेव खेत्ते वासावासत्तेण उवागया, एवं ऊणा अट्ठमासा आसाढमासे अनिर्गच्छतां सप्तविहरणकाला भवन्तीत्यर्थः, अहवा इमेहिं पगारेहिं ऊणा अट्ठमासा हवेज्ज सचिक्खल्ला पंथा वासं वा अज्जवि णोवरमते णयरं वा रोहितं वाहिं वा असिवादिकारणा तेण मग्गसिरं सव्वं ठिआ, अतो पोसादीया आसाढंता सत्त विहरणकाला भवंति ॥ २ ॥ इयाणिं जहा अतिरित्ता अट्ठमासा विहारो तहा भण्णइ–वासाखित्तालंभे, अद्धाणाईसु पत्तमहिगाओ, साहगवाधाएणं, अपडिक्कमिउं जइ वयंति ॥ ३ ॥ आसाढसुद्धेवासावासपाउग्गं खेत्तं मग्गंतेहिं ण लद्धं ताव जाव आसाढचाउम्मासाओ परओ सवीसतिराए मासे अतिक्कंते लद्धं ताहे भद्दवयजोण्हपंचमीए पज्जोसवंति एवं णव मासा वीसइ राया विहरणकालो दिट्ठो एवं अतिरित्ता अट्ठमासा, अहवा साहू अद्धाणपडिवण्णा सत्थवसेणं आसाढचाउम्मासीओ परेणं पंचाहेण वा दसाहेण वा जाव सवीसइराए वा मासे वासाखेत्तं पत्ताणं अतिरित्ता अट्ठ मासा विहारो भवति, अहवा सवाघाए अणावुट्ठीए आसोए कत्तिए वा णिग्गयाण अट्ठ अतिरित्ता भवंति, वसहिवाघाए वा कत्तिय चाउम्मासियस्स आरओ चेव णिग्गया, अहवा आयरियाणं कत्तियपुण्णिमाए परओ वा साहगं णक्खत्तं न भवति चंदबलाइयं सुंदरं न भवतीत्यर्थः, अण्णं वा रोहगादि कत्तिए सवाघायं जाणिऊण कत्तियचाउम्मासियं

अपडिक्कमिउं जया वयंति तया अतिरित्ता अट्ठमासा भवंति ॥ ३ ॥ 'एगाहं पंचाहं मासं व जहा समाहीए'त्ति अस्य व्याख्या- पडिमा पडिवण्णाणं, एगाहं पंचहो तहा लंदे। जिणसुद्धाणं मासो, निक्कारणओ य थेराणं ॥ ४ ॥ पुवर्द्धं कंठं, 'जिण'त्ति जिणकप्पियाणं 'सुद्धाणं'ति सुद्धपारिहारियाणं सुद्धग्गहणं पच्छित्तावन्नपरिहारियनिसेहत्थं थेराणं च एतेसिं मासकप्पविहारो णिव्वाघाए–कारणाभावे वाघाए पुण थेरकप्पिया ऊणं अतिरित्तं वा मासं अच्छंति ॥ ४ ॥ ऊणाइरित्तमासा, एवं थेराण अट्ठ नायव्वा। इयरे अट्ठ विहरिउं, नियमा चत्तारि अच्छंति ॥ ५ ॥ एवं ऊणा अतिरित्ता थेराण अट्ठमासा णायव्वा इतरे णाम– पडिमापडिवण्णा १ अहालंदिया २ विसुद्धपारिहारिया ३ जिणकप्पिया य ४ जहा विहारेण अट्ठ विहरिऊण वासारत्तिया चउरो मासा सव्वे णियमा एगखित्ते अच्छंति ॥ ५ ॥ वासावासे कंमि खेत्ते कम्मि काले पविसियव्वं अतो भण्णइ– आसाढपुण्णिमाए, वासावासम्मि होइ ठायव्वं। मग्गसिरबहुलदसमी उ, जाव एगम्मि खित्तम्मि ॥ ६ ॥ 'ठायव्वं'ति उस्सग्गेण पज्जोसवेयव्वं अहवा प्रवेष्टव्यम्, तम्मि पविट्ठा उस्सग्गेण कत्तियपुण्णिमं जाव अच्छंति अववाएण मग्ग- सिरबहुलदसमी जाव ताव तम्मि एगखेत्ते अच्छंति दसरायगहणाओ अववाओ दंसिओ अण्णे वि दोदसराया अच्छेज्जा, अववाएणं मग्गसिरमासं तत्रैवास्ते इत्यर्थः ॥ ६ ॥ कहं पुण वासा पाउग्गं खेत्तं पविसंति इमेण विहिणा?–वाहिट्ठियवसभेहिं, खित्तं गाहित्तु वासपाउग्गं। कप्पं कहित्तु ठवणा, वासाणं सुद्धदसमीए ॥ ७ ॥ 'वाहिट्ठिय' त्ति जत्थ आसाढमासे कप्पो कओ तत्थ अण्णत्थ वा आसण्णे ठिया वा सामायारी खेत्तं वसभेहिं गाहेन्ति वासासामायारी भावणाए भावयंतीत्यर्थः, तओ कप्पं पज्जोसवणाकप्पं कहित्ता आसाढसुद्धदसमीए वासाणं–वासारत्तस्स ठवणा कज्जइ, क्वचित् सावणबहुलस्स पंचाहे

इति पाठस्तत्र आसाढपुण्णिमाए पविट्ठा पडिवयाओ आरब्भ पंचदिणा सथारगतणडगलछारमल्लादीयं गेण्हंति, तम्मि चेव पणगराइए पज्जोसवणाकप्पं कहेंति, ताहे सावणबहुलपंचमीए वासकालसमायारी ठवेंति ॥ ७ ॥ इत्थ य अणभिग्गहियं, वीसइरायं सवीसइं मासं । तेण परमभिग्गहियं, गिहिणायं कत्तिओ जाव ॥ ८ ॥ 'इत्थ' त्ति एत्थ आसाढपुण्णिमाए सावण-बहुलपंचमीए वा पज्जोसविएवि अप्पणो अणभिग्गहियं, वीसइरायं सवीसइं मासं । तेण परमभिग्गहियं, गिहिणायं कत्तिओ जाव ॥ ८ ॥ 'इत्थ'त्ति एत्थ आसाढपुण्णिमाए सावणबहुलपंचमीए वा पज्जोसविएवि अप्पणो अणभिग्गहियं अहवा जति गिहत्था पुच्छंति, अज्जो ! तुब्भे एत्थ वरिसाकालं ठिया अह न ठिया ? एवं पुच्छिएहिं 'अणभिग्गहियं'ति सन्दिग्धं वक्तव्यम् । इह अन्यत्र वाऽद्यापि निश्चयो न भवतीत्यर्थः, एवं सन्दिग्धं कियत्कालं वक्तव्यम् ? उच्यते—"वीसतिरायं सवीसतिमासं जति अभिवड्ढियवरिसं नो वीसतिरायं जाव अणभिग्गहियं अह चंदवरिसं तो सवीसतिरायमासं जाव अणभिग्गहियं भवति, 'तेण' त्ति तत्कालात्परत अप्पणो आभिमुख्येन गृहीतं अभिगृहीतं इह व्यवस्थिता इति गिहीण य पुच्छंताणं कहेंति इह ठियामो वरिसा कालंति ॥ ८ ॥ किं पुण कारणं वीसइराए सवीसइराए वा मासे गए अभिग्गहियं गिहिणायं वा कहेंति आरओ ण कहेंति ? उच्यते—असिवाइकारणेहिं, अहवा वासं न सुट्ठु आरद्धं । अहिवड्ढियंमि वीसाइयरेसु सवीसइ मासो ॥ ९ ॥ कयाइ असिवं भवे आ दिग्गहणाओ रायदुट्ठाइं गहणं वा वासं वा ण सुठ आरद्धं वासितुं एवमाईाह कारणेहिं जइ अच्छंति तो आणादिया दोसा, अहवा गच्छंति ततो गिहत्था भणंति एते सवण्णुपुत्तगा ण किंचि जाणंति मुसावायं च भासंति ठितामोत्ति भणित्ता जेण णिग्गया, लोगो वा भणेज्ज साहू एत्थ वरिसारत्तं ठिया अवस्सं वासं भविस्सति,

तओ धण्णं विक्किणाति लोगो घराईणि छादेति हलादिकं मा णिवासं ठवेति, अभिग्गहिए गिहिणाए य आरओ कए जम्हा एवमादिया अधिकरणदोसा तम्हा अभिवड्डियवरिसे वीसतिराए गए गिहिणायं करेंति तिसु चंदवरिसेसु सवीसतिराए मासे गए गिहिणायं करेंति, जत्थ अधिमासगो पडति वरिसे तं अभिवड्डियं वरिसं भण्णइ, जत्थ ण पडति तं चंदवरिसं, सो य अधिमासगो जुगस्स अंते मज्झे वा भवति, जइ अंते तो णियमा दो आसाढा भवंति अह मज्झे तो दो पोसा, सीसो पुच्छति कम्हा अभिवड्डियवरिसे वीसतिरायं चंदवरिसे सवीसतिमासो ? उच्यते—जम्हा अभिवड्डियवरिसे गिम्हे चेव सो मासो अतिक्कंतो तम्हा वीसदिणा अणभिग्गहियं तं कीरति इयरेसु तिसु चंदवरिसेसु सवीसइमासो इत्यर्थः ॥ ९ ॥ एत्थ उ पणगं पणगं कारणियं जा सवीसई मासो । सुद्धदसमीठियाणं, आसाढी पुन्निमोसरणं ॥ १० ॥ एत्थओ—आसाढपुण्णिमाए ठिया डगलादीयं गेण्हंति पज्जोसवणकप्पं च करेंति पंचदिणा ततो सावणबहुलपंचमीए पज्जोसवेंति वासखित्ताभावे कारणेण पणगे संवुड्ढे दसमीए पज्जोसवेंति एवं पण्णरसीए एवं पणगवुड्ढी ताव कज्जति जाव सवीसतिमासो पुण्णो सो य सवीसतिमासो भद्दवयसुद्धपंचमीए पुज्जति, अह आसाढसुद्धदसमीए वासाखित्तं पविट्ठा अहवा जत्थ आसाढमासकप्पो कओ तं वासपाउग्गं खेत्तं अण्णं च णत्थि वासपाउग्गं ताहे तत्थेव पज्जोसवेंति वासं वा गाढं अणुवरयं आढत्तं तत्थेव पज्जोसवेंति, एक्कारसीओ आढवेउं डगलादीयं गेण्हति पज्जोसवणाकप्पं करेंति, जाहे आसाढपुण्णिमाए पज्जोसवेंति एस उस्सग्गो सेसकालं पज्जोसवेंताणं अववाओ, अववाएवि सवीसतिरायमासाओ परेण अतिक्कमेउं ण वट्टंति, सवीसतिराएमासे पुण्णे जदि वासाखेत्तं ण लब्भति तो रुक्खहेट्ठावि पज्जोसवेयव्वं, तं च पुण्णिमाए पंचमीए दसमीए एवमादिपव्वेसु पज्जोसवेयव्वं णो अपव्वेसु,

सीसो पुच्छति इयाणिं कहं चउत्थीए अपवे पज्जोसविज्जति ? आयरिओ भणति कारणिया चउत्थी अज्जकालगायरिएण पवत्तिया, कहं भण्णते कारणं, कालगायरिओ विहरंतो उज्जेणिं गओ, तत्थ वासावासं ठितो, तत्थ णयरीए बलमित्तो राया, तस्स कणिट्ठो भाया भाणुमित्तो जुवराया, तेसिं भगिणी भाणुसिरो नाम, तस्स पुत्तो बलभाणू णाम, सो य पगतिभद्द-विणीययाए साहू पज्जुवासति, आयरिएहिं सो धम्मो कहिओ पडिबुद्धो पव्वाविओ य, तेहि य बलमित्तभाणुमित्तेहिं कालगज्जो पज्जोसविए णिव्विसओ कओ। केइ आयरिया भणंति–जह बलमित्तभाणुमित्ता कालगायरियाणं भागिणेज्जा भवंति, माउलेत्ति काउं महंतं आयरं करेंति अब्भुट्ठाणादियं, तं च पुरोहियस्स अप्पत्तियं भणति य एस सुद्धपासंडो वेदादि-बाहिरो रण्णो अग्गओ पुणो पुणो उल्लवंतो आयरिएण णिप्पिट्ठप्पसिणवागरणो कओ, ताहे सो पुरोहिओ आयरियस्स पदुट्ठो रायाणं अणुलोमेहिं विप्पहिणामेति एरिसा महाणुभावा एतो जेण पहेणं गच्छंति तेण पहेणं जइ रायाणो गच्छंति पयाणि वा अक्कमंति तो असेयं भवति तम्हा विसज्जेहि ताहे विसज्जिया। अन्ने भणंति–रण्णा उवाएणं विसज्जिया कथं सव्वमि नयरे किल रन्ना अणेसणा काराविया ताहे णिग्गया, एवमादियाण कारणाण अण्णतमेण णिग्गता, विहरंता पतिट्ठाणं नगरं तेण पट्ठिया, पतिट्ठाणसमणसंघस्स य अज्जकालगेहिं संदिट्ठं जावाहं आगच्छामि ताव तुब्भेहिं णो पज्जोसवियव्वं तत्थ य सायवाहणो राया सावओ, सोय कालगज्जं ऐंतं सोउं णिग्गओ अभिमुहो समणसंघो य महाविभूतिए पविट्ठो कालगज्जो, पविट्ठेहि य भणिअं भद्दवयसुद्धपंचमीए पज्जोसविज्जति समणसंघेण पडिवन्नं, ताहे रण्णा भणियं–तद्दिवसं मम लोगाणुवत्तीए इंदो अणुजाएयव्वो होहित्ति साहू चेतिएण पज्जुवासेस्संतो छट्ठीए पज्जोसवणा किज्जउ, आयरिएहिं भणियं–ण वट्टति

अइक्कमेउं, ताहे रण्णा भणियं तो अणागयं चउत्थीए पज्जोसविज्जति, आयरिएण भणियं–एवं भवउ ताहे चउत्थीए पज्जोसवियं, एवं जुगप्पहाणेहिं चउत्थी कारणे पवत्तिता सच्चेवाणुमया सव्वसाहूणं, रण्णा अंतेउरियाओ भणिया–तुब्भे अमावासाए उववासं काउं पडिवयाए सव्वखज्जभोज्जविहीहिं साधू उत्तरपारणाए पडिलाभेत्ता पारेह, पज्जोसवणाए अट्ठमंति काउं पाडिवयाए उत्तरपारणयं भवति, तं च सव्वलोगेणवि कयं ततो पभिति मरहट्ठ विसए समणपूअओत्ति छणो पवत्तो। ' आसाढी पुण्णिमोसरणं 'ति आसाढपुण्णिमाए ओसरणं वासारत्तठवणा भवति ॥ १० ॥ इयाणिं पंचगपरिहाणीमधिकृत्य कालावग्रह उच्यते–इय सत्तरी जहन्ना, असीइनउईदसुत्तरसयं च। जइ वासइ मग्गसिरे, दस राया तिण्णि उक्कोसो ॥ ११ ॥ इति–उपप्रदर्शने, जे आसाढचाउम्मासियाओ सवीसतिराए मासे गए पज्जोसवेंति, तेसिं सत्तरि दिवसा जहन्नो वासाकालोग्गहो कहं सत्तरी? उच्यते–चउण्हं मासाणं वीसुत्तरं दिवससयं भवइ सवीसइमासो पण्णासं दिवसा ते वीसुत्तरमज्झाओ सोधिओ सेसा सत्तरी ७० जहन्नवासाकालोग्गहो भवति १, जे भद्दवयबहुलदसमीए पज्जोसवेंति, तेसिं असीई ८० दिवसा मज्झिमो वासकालोग्गहो भवति २, जे सावणपुण्णिमाए पज्जोसवेंति तेसिं णउती ९० चेव दिवसा मज्झिमो चेव वासाकालोग्गहो ३, जे सावणबहुलदसमीए पज्जोसवेंति तेसिं दसुत्तरं ११० दिवससय मज्झिमो चेव वासाकालोग्गहो भवइ ४, जे आसाढपुण्णिमाए पज्जोसवेंति तेसि वीसुत्तरं दिवससयं जेट्ठो वासुग्गहो भवति ५। एवं सेसंतरेसु वि दिवसपमाणं वत्तव्वं, एवमादिप्पगारेहि वरिसारत्तं एगखित्ते करिय कत्तिअचाउम्मासिअपडिवयाए अवस्सं णिग्गंतव्वं। अह मग्गसिरमासे वसति चिक्खल्लजलाउला पंथा तो अववाएण एक्कं उक्कोसेणं तिण्णि वा दस रा.. ३० जाव तंमि खेत्ते अच्छंति मग्गसिरपौर्णमासीं

यावदित्यर्थः, मग्गसिरपुण्णिमाए परओ जदिवि सचिक्खल्ला पंथा वासं वा गाढं अणवरयं वासति जदि विप्लवंतेहिं गम्मइ तहावि अवस्सं णिग्गंतव्वं, अह ण णिग्गच्छति तो चउगुरुगा एवं पंचमासिओ जेट्ठोग्गहो जाओ ॥ ११ ॥ काऊण मासकप्पं, तत्थेव ठियाण जाव मग्गसिरो । सालंबणाण छम्मासिओ उ जिट्ठुग्गहो होइ ॥ १२ ॥ जम्मि खित्ते कओ आसाढमासकप्पो तं च वासावासपाउग्गं खित्तं अन्नंमि अलद्धे वासपाउग्गे खित्ते जत्थ आसाढमासकप्पो कओ तत्थेव वासावासं ठिया तीसे वासावासे चिक्खल्लाइएहिं कारणेहिं तत्थेव मग्गसिर ठिया, एवं सालंबणाण कारणे अववाएण छम्मासिओ जिट्ठोग्गहो भवतीत्यर्थः ॥ १२ ॥ जइ अत्थि पयविहारो, चउपाडिवयंमि होइ निग्गमणं । अहवावि अणिंताणं, आरोवणपुव्वनिद्दिट्ठा ॥ १३ ॥ जइ कद्दमवुट्ठिमाइकारणाभावाओ पदप्रचारो अत्थि तओ वासाखेत्ते णिव्विग्घेण चउरो मासा अत्थिउं कत्तियचाउम्मासं पडिक्कमिउं मग्गसिरबहुलपडिवयाए णिग्गंतव्वं, एसा चेव चउपाडिवयं चउपाडिवए अणिंताणं अविसद्दाओ एस चेव चउलहू सवित्थारो जहापुव्वं वण्णिओ णियत्तियसुत्ते संभोगसुत्ते वा तहा दायव्वो ॥ १३ ॥ चउपाडिवए अप्पत्ते अतिक्कंते वा णिग्गए कारणे णिद्दोसो तत्थ अपत्ते इमे कारणा—राया सप्पे कंथू, अगणिगिलाणे य थंडिलस्ससई । एएहि कारणेहिं, अप्पत्ते होइ निग्गमणं ॥ १४ ॥ राया दुट्ठो सप्पो वा वसाह पविट्ठो कुंथूहिं वा वसही संसत्ता अगणीणा वा वसही दड्ढो गिलाणस्स पडिचरणट्ठा गिलाणस्स वा ओसहहेऊं थंडिलस्स वा असतीए एतेहिं कारणेहिं अप्पत्ते चउपाडिवए निग्गमणं भवइ ॥ १४ ॥ अहवा इमे कारणा—काइयभूमी संथारए अ संसत्त दुल्लहे भिक्खे । एएहि कारणेहिं अप्पत्ते होइ निग्गमणं ॥ १५ ॥ काइयभूमी संसत्ता, संथारगा वा संसत्ता दुल्लभं वा भिक्खं जायं आयपरसमुत्थेहिं वा दोसेहिं मोहोदओ

जाओ असिवं वा उप्पण्णं एतेहिं कारणेहिं अप्पत्ते णिग्गमणं भवति ॥ १५ ॥ चउपाडिवए अतिक्कंते निग्गमो इमेहिं कारणेहिं–वासं वा नोवरमई, पंथा वा दुग्गमा सचिक्खल्ला । एएहिं कारणेहिं अइक्कंते होइ निग्गमणं ॥ १६ ॥ अइक्कंते वासाकाले वासे नोवरमइ पंथा वा दुग्गमा अइजलेण सचिक्खल्ला य एवमाइएहिं कारणेहि चउपाडिवए अइक्कंते णिग्गमणं भवति ॥ १६ ॥ अहवा इमे कारणा बाहिं–असिवे ओमोदरिए, रायदुट्ठे भये व गेलन्ने। एएहि कारणेहिं अइक्कंते होइ निग्गमणं ॥१७॥ वाहिं असिवं ओमं वा बाहिं वा रायदुट्ठं बाहिं चोरादिभयं वा आगाढं–आगाढकारणेण वा ण णिग्गच्छंति, एएहिं कारणेहिं चउ पडिवए अतिक्कंते अणिग्गमणं भवति । १७ । ” इति पर्युषणाकल्पनिर्युक्तिचूर्णिनिशीथदशमोद्देशकचूर्णिगतमिति । गाथाछन्दः ॥ १३२ ॥

**तम्मूलं संसारं, जणेइ अज्जा वि गोयमा ! नूणं । तम्हा धम्मुवएसं, मुत्तुं अन्नं न भासिज्जा ॥१३३॥**

व्याख्या–‘ तम्मूलं० ’ तद्धर्म्मोपदेशं व्यतिरिक्तं वाक्यं तन्मूलं कारणं यत्र संसारजनने तत् तन्मूलं तद्यथा स्यात्तथा हे गौतम ! आर्याऽपि–साध्व्यपि नूनं–निश्चितं संसारं जनयति–वर्द्धयति यस्मादितिशेषः। तस्माद्धर्मोपदेशं मुक्त्वाऽन्यत् वचनमार्या न भाषते इति। गाथाछन्दः ॥ १३३ ॥

**मासे मासे उ जा अज्जा, एगसित्थेण पारए । कलहे गिहत्थभासाहिं, सघं तीइ निरत्थयं ॥१३४॥**

व्याख्या–‘मासे मा०’ मासे मासे उ इत्यत्र “ क्रियामध्येऽध्वकाले पञ्चमी च ” ( २–२–११० ) इति सूत्रेण सप्तमो

वीप्सायां द्विर्वचनं तुशब्देवकारार्थः, ततश्च मासे मासे एव न त्वर्द्धमासादौ या आर्या–साध्वी एकसिक्थेन–एककणेन पारयेत्–पारणकं कुर्यात् ' कलहे 'त्ति कलहेच्च–कलहं कुर्यात् गृहस्थभाषाभिर्मर्मोद्घाटनशापप्रदानजकारमकारादिवचनैरित्यर्थः । अथवा कलहे–राढौ गृहस्थभाषाभिः क्रियमाणे सतीति शेषः । सर्वं तपःप्रभृतिधर्मानुष्ठानं तस्या निरर्थकं निष्फलमिति । त्रिपमाक्षरेति गाथाछन्दः ॥ १३४ ॥ इत्येवं वर्णितं यतिनीस्वरूपम्, अथ ग्रन्थकृद् येभ्यो ग्रन्थेभ्यो यदर्थं चाऽयं गच्छाचारः समुद्धृतः तद्दर्शनायाह—

महानिसीहकप्पाओ, ववहाराउ तहेव य । साहु साहुणि अट्ठाए, गच्छायारं समुद्धिओ ॥१३५॥

व्याख्या–' महानि०' महानिशीथात्कल्पात्–बृहत्कल्पात् तथैव च व्यवहारात् छेदग्रन्थरूपादेव साधुसाध्वीनामर्थाय–कार्यायायं गच्छाचारः समुद्धृतो नपुंसकत्वमत्र प्राकृतत्वादेवेति । विषमाक्षरेति गाथाछन्दः ॥ १३५ ॥ अथ ग्रन्थकृदेतस्य ग्रन्थस्याध्ययनविधिमुपदिशन्नाह—

पढंतु साहुणो एयं, असज्झायं विवज्जिउं । उत्तमं सुअनिस्संदं, गच्छायारं सुउत्तमं ॥ १३६ ॥

व्याख्या–' पढंतु०' पठन्तु साधवः उपलक्षणत्वात् साध्व्यश्च एतद् ' गच्छायारं 'ति गच्छाचारभिधप्रकीर्णकं किं कृत्वा विवर्ज्य परित्यज्य किं ' असज्झायं 'ति अस्वाध्यायिकं आकाशभवादिभेदभिन्नं स्वाध्यायविघातकृत्, यत उक्तम्–स्थानाङ्गदशमस्थाने–" दसविहे अंतलिक्खिए असज्झाइए पन्नत्ते तं जहा–उक्कावाए १, दिसिदाहे २, गज्जिए ३, विज्जुए

४, निग्घाए ५, जुवए ६, जक्खालित्तए ७, धूमिआ ८, महिआ ९, रयउग्घाए १०। अंत० आकाशभवं अस० 'स्वाध्यायो वाचनादिपञ्चविधो यथासम्भवं यस्मिन्नस्ति तत्स्वाध्यायिकं तदभावोऽस्वाध्यायिकम्, दिसि० एकतरदिग्विभागे महानयरप्रदीपनकमिव य उद्योतो भूमावप्रतिष्ठितो गगनतलवर्त्ती स दिग्दाहः २, निर्घातः साभ्रे निरभ्रे वा गगने व्यन्तरकृतो महागर्ज्जितध्वनिः ५, सन्ध्याप्रभा चन्द्रप्रभा च यद्युगपद् भवतः तद् 'जुवगे'त्ति भणितं सन्ध्याप्रभाचन्द्रप्रभयोमिश्रत्वमिति भावः, तत्र चन्द्रप्रभावृता सन्ध्याऽपगच्छन्ती न ज्ञायते शुक्लपक्षप्रतिपदादिषु सन्ध्याछेदे वा ज्ञायमाने कालवेलां न जानन्त्यतस्त्रीणि दिनानि प्रादोषिकं कालं न गृण्हन्ति ततः कालिकस्यास्वाध्यायः स्यात् ६, यक्षादीप्तं आकाशे भवति एतेषु स्वाध्यायं कुर्वतां क्षुद्रदेवता छलनां करोति ७, धूमिकामहिकाभेदो वर्णतो धूमाकारा धूम्रेत्यर्थः ८, महिका-प्रतीता एतच्च द्वयमपि कार्तिकादिषु गर्भमासेषु भवति ९, विस्रसापरिणामतः समन्ताद्रेणुपतनं रज उद्घातो भण्यते १०, दसविहे ओरालिए असज्झाइए पन्नत्ते० तंजहा-अट्ठी १ मंसे २ सोणिए ३ असुइसामंते ४ सुसाणसामंते ५ चंदोवराए ६ सूरोवराए ७ पडणे ८ रायवुग्गहे ९ उवस्सयस्स अंतो उरालिए सरीरे १०। अशुचीनि-अमेध्यानि मूत्रपुरीषादीनि तेषां सामन्तं-समीपम् ४, शवस्थानसमीपम् ५, चंदो० चन्द्रसूर्यग्रहणे इत्यर्थः ६, ७, पतनं-मरणं राजाऽमात्यसेनापतिग्रामभोगिकादीनाम् ८, राज्ञां सङ्ग्रामः उपलक्षणात्वात् सेनापतिग्रामभोगिकमहत्तरपुरुषस्त्रीमल्लयुद्धान्यस्वध्यायिकम् ९, मनुष्यादिसत्कं शरीरकं यद्युद्भिन्नं भवति तदा हस्तशताऽभ्यन्तरेऽस्वाध्यायिकम्भवति अथानुद्भिन्नं तथापि कुत्सितत्वादाचरिताच्च हस्तशतं वर्ज्यते परिष्ठापिते तु तत्र तत्स्थानं शुद्धं भवति १०। तथा विस्तरतोऽस्वाध्यायिकस्वरूपं श्रीनिशीथसूत्रैकोनविंशोद्देशकश्रीआव-

श्यकनिर्युक्त्यादिष्वस्तीति किम्भूतं गच्छाचारं उत्तमं-प्रधानं एतदुक्तानुष्ठानपालनपरायणानामवश्यं स्वर्गसुखावाप्तिनिबन्धनत्वात्, तथा 'सुअनिस्संदं'ति सिद्धान्तोपनिषद्भूतं तथा सूत्तमगू-उत्तमोत्तम एतत्प्रणीताचारसम्यक्समाचरणचतुरान्तःस्करणवाक्कायानामवश्यमेव चतुर्वर्गप्रवेकापवर्गः शर्मसंसर्गसंसिद्धिहेतुत्वात्, नन्वत्राध्ययने साधव एवाधिकारिण उक्ताः, किं न श्राद्धादयः ? उच्यते-आगमे तेषां वाचनाप्रदानप्रतिषेधात्। उक्तञ्च-" जे भिक्खू वा भिक्खूणी वा अण्णउत्थियं वा गारत्थियं वा वाएइ वायंतं वा साइज्जइ " इत्यादि निशीथसूत्रस्यैकोनविंशतितमोद्देशकप्रान्ते अस्य चूर्णिः-" जे अण्णउत्थियं वा गारत्थिय वा इत्यादि जे भिक्खू अण्णउत्थियस्स वा गारत्थियस्स वा वायणं पडिच्छइंत्यादि. एवं पासत्थे दो सुत्ता ओसण्णे दो कुसीले दो संसत्ते दो णितिए दो एतेसिं वायणं देइ पडिच्छइ भावतेणो वा सवेसु अहाच्छंदवज्जिएसु चउलहुं अहवा अत्थे चउगुरुं, अहाछंदे सुत्ते चउगुरुं अत्थे छलहुं इत्यादि, तथाभावे कारणे वाएज्जावि 'पव्वज्जाएगाहा' गिहिं अण्णपासंडिं वा पव्वज्जाभिमुहं सावगं वा छज्जीवणियंति जावसुत्तओ, अत्थओ जावर्पिडेसणा एस गिहत्थादिसु अववादो इत्यादि। इत्यनुष्टुप् छन्दः ॥ १३६ ॥ अथ साधुसाध्वीनामेतत् प्रकीर्णकनिर्णीताचारयथावत्समाचरणोपदेशं तत्समाचरणफलगर्भं प्रकटयन्नाह—

**गच्छायारं सुणित्ताणं, पढित्ता भिक्खुभिक्खुणी। कुणंतु जं जहा भणियं, इच्छंता हियमप्पणो ॥१३७॥**

व्याख्या-'गच्छाया०' एतत् 'गच्छायारं'ति गच्छाचाराभिधप्रकीर्णकं श्रुत्वा-गुरुमुखाद्विधिना निशम्य, णमिति-

वाक्यालङ्कारे पठित्वा च-सूत्रतोऽर्थतश्च विधिनैवाधीत्य भिक्षवो भिक्षुण्यश्च आत्मनो हितमिच्छन्तो यद्यथात्र भणितं तत्तथा कुर्वन्त्विति । विषमाक्षरेति गाथाछन्दः ॥१३७॥ इति श्रीमत्तपागच्छनभोनभोमणिभट्टारकपुरन्दरश्रीआनन्दविमलसूरीश्वरचरणाम्भोजरजश्चञ्चरीकायमाणपण्डितश्रीविजयविमलगणिविरचितायां गच्छाचारप्रकीर्णकटीकायां साध्वीस्वरूपनिरूपणाधिकारस्तृतीयः समाप्तः ॥ ३ ॥ तत्समाप्तौ च समाप्तेयं श्रीगच्छाचारप्रकीर्णकटीका ॥

---

प्रायः स्वकीयोदितमप्यनादृशं, सर्वाङ्गभाजां जगतीह रोचते। इयं मदुक्तिस्तु ममैव नो तथा, कथं परेषां रुचये भविष्यति? नाभूद्वृद्धकृता वृत्ति-रस्यादर्शास्तु भूरिशः । तथाप्यस्ति गुरूपास्तिः, समस्तस्वस्तिदाऽश्मनः ॥ २ ॥
यदत्र मतिवैगुण्याद्, ग्रन्थानभ्यासतस्तथा । भ्रमाद्वा विहृतं सार्वाऽऽ-गमेनागा विरोधभाक् ॥ ३ ॥
विभक्त्यादिविरुद्धञ्च, मिथ्यादुष्कृतमस्तु तत् । शोधयन्तु च तत्त्वज्ञाः, कृत्वा तत्र घृणां मयि ॥ ४ ॥ युग्मम् ॥
विचारोपनिषद्भेदसमुच्चयचिकीर्षया । गच्छाचाराभिधग्रन्थ-वृत्तिर्निर्मितवानहम् ॥ ५ ॥

## ॥ अथ प्रशस्तिर्लिख्यते ॥

प्रकटितजगदानन्दः सुरतरुमणिसुरभिमहिमरमणीयः । प्रणते हितप्रणेता, शासननेता जयति वीरः ॥ १ ॥
तत्पट्टोदयभानु-र्गणी सुधर्म्मा यथार्थनामाऽभूत् । बोधितशरशतचौरः श्रीजम्बूः केवली चरमः ॥ २ ॥
श्रीमान् प्रभवस्वामी, गणनाथो गुणमणिसलिलनाथः । शय्यम्भवोऽपि सूरि-र्मणकपिता समजनिष्ट ततः ॥ ३ ॥

निजगतिनिर्जितभद्रः, कृतभद्रः श्रीगणी यशोभद्रः । तत्पट्टे श्रीमन्तौ सम्भूतिविजयसुभद्रबाहुगुरू ॥ ४ ॥
श्रुतकेवलीह चरमः, स्थूलीभद्रस्तयोर्विनेयोऽभूत् । शिष्योत्तमौ तदीयौ, सूरिर्महागिरिसुहस्तिगुरू ॥ ५ ॥
जिनकल्पस्तुपरिकर्म्मः प्रथमः प्रथयान्वितः प्रथयतिस्म । श्रेणिकतः प्रति सम्प्रति–नृपं द्वितीयः स्म बोधयति ॥ ६ ॥
तदनु च सुहस्तिशिष्यौ, कोटिककाकन्दकावजायेताम् । सुस्थितसुप्रतिबुद्धौ, कौटिकगच्छस्ततः समभूत् ॥ ७ ॥
तत्रेन्द्रदिन्नसूरि–र्भगवान् श्रदिन्नसंज्ञसूरीन्द्रः । तस्य पट्टे सिंहगिरिर्गिरिरिव धीरो गिरिगंभीरः ॥ ८ ॥
समजनि वज्रस्वामी, जृम्भकदेवार्पितस्फुरद्विद्यः । बाल्येऽपि जातजाति–स्मृतिः प्रभुश्चरमदशपूर्वी ॥ ९ ॥
श्रीवज्रसेनसंज्ञस्तत्पट्टपूर्वाद्रिचूलिकादित्यः । मूलं चान्द्रकुलस्या–जनि च तनश्चन्द्रसूरिगुरुः ॥ १० ॥
पूर्वगतश्रुतजलधि–स्तस्मात्सामन्तभद्रसूरीन्द्रः । श्रीमांश्च देवसूरिस्तदीयपट्टेऽभवद् वृद्धः ॥ ११ ॥
प्रद्योतनाभिधान–स्ततोऽपि सूरीन्द्रमानदेवाख्यः । शान्तिस्तवेन मारिं, यो जहे देवताभ्यर्च्यः ॥ १२ ॥
श्रीमानतुङ्गसूरिः कर्त्ता भक्तामरस्य गणभर्त्ता । श्रीमान् वीरः सूरि–स्ततोऽपि जयदेवसूरीन्द्रः ॥ १३ ॥
श्रीदेवानन्दगुरु–र्विक्रमसूरिर्गुरुश्च नरसिंहः । बोधितहिंसकयक्षः क्षपणकजेता समुद्रोऽथ ॥ १४ ॥
हरिभद्रमित्रमभवत्, सूरिः पुनरेव मानदेवगुरुः । विबुधप्रभश्च सूरिस्तस्मात् सूरिजयानन्दः ॥ १५ ॥
श्रीभद्रविप्रभगुरुर्गरिमागारं गुरुर्यशोदेवः । सद्युम्नः प्रद्युम्नाभिधश्च सूरिस्ततोऽप्यासीत् ॥ १६ ॥
विहितोपधानवाच्य–ग्रन्थस्तस्माच्च मानदेवाख्यः । सूरिः समजनि भूयो, मानवदेवार्चितः सततम् ॥ १७ ॥

केचिदिदं सूरिद्वयमिह न वन्दति । तस्माच्च विमलचन्द्रः, सहेमसिद्धिर्बभूव सूरिवरः । उद्योतनश्च सूरि–र्दूरितदुरिताङ्कुरव्यूहः॥१८
अथ युगनवनन्द ९९४ मिते, वर्षे विक्रमनृपादतिक्रान्ते । पूर्वावनितो विहरन्, सोऽर्बुदसुगिरेः सविधमागात् ॥१९॥
तत्र वटेलीखेटक–सीमावनिसंस्थवरतरवटाधः । सुमुहूर्ते स्वपदेऽष्टौ, सूरीन् स स्थापयामास ॥ २० ॥ युग्मम्
ख्यातस्ततो गणोऽयं, वटगच्छाह्वोऽपि वृद्धगच्छ इति । अभवत्तत्र प्रथमः, सूरिर्श्री सर्वदेवाह्वः ॥ २१ ॥
रूपश्रीरिति नृपति–प्रदत्तविरुदोऽथ देवसूरिरभूत् । श्रीसर्वदेवसूरिर्जज्ञे पुनरेव गुरुचन्द्रः ॥ २२ ॥
जातौ तस्य विनेयौ, सूरियशोभद्रनेमिचन्द्राह्वौ । ताभ्यां मुनीन्द्रचन्द्रः, श्रीमुनिचन्द्रो गुरुः समभूत् ॥ २३ ॥
श्रीअजितदेवसूरिः, प्राच्यस्तस्माद्बभूव शिष्यवरः । वादीति देवसूरिर्द्वितीयशिष्यस्तदीय इह ॥ २४ ॥
तत्रादिमाद्बभासे, गुरुर्विजयसिंहः । तस्याप्युभौ विनेयौ बभूवतुर्भूमिविख्यातौ ॥ २५ ॥
ख्यातस्तत्र शतार्थी, सोमप्रभसूरिपुङ्गवः प्रथमः । श्री मणिरत्नगणीन्द्रो, गुणगणमणिनीरनिधिरन्यः ॥ २६ ॥
शिष्या मणिरत्नगुरो–स्तनो जगच्चन्द्रसूरयोऽभूवन् । भूतलविदिता नूतन–वैराग्यावेगभाजस्ते ॥ २७ ॥
श्रीचैत्रगणाम्भोधौ, विधूपमाद्देवभद्रगणिमिश्रात् । उपसम्पन्नाश्चरणं, विधिना संवेगवेगवतः ॥ २८ ॥
आचामाम्लाख्यतपोऽभिग्रहवन्तो व्यधुर्विधूतमलाः [illegible] टितरणि १२८५ वर्षे, ख्यातस्तत इति तपागच्छः विशेषकम्॥
तेषामुभौ विनेयौ, देवे[illegible]गणीन्द्रविजयचन्द्राह्वौ । श्रीदेवेन्द्रगुरोरपि, शिष्यौ द्वौ भूतलख्यातौ ॥ ३० ॥
श्रीविद्यानन्दगणी प्रथमोऽन्यो धर्म्मघोषसूरिरिति । अथ सोमप्रभसूरिस्तस्य विनेयास्तु चत्वारः ॥ ३१ ॥

श्रीविमलप्रभसूरिः १, श्रीपरमानन्दसूरिगुरुराजः २ । श्रीपद्मतिलकसूरि ३–र्गणतिलकः सोमतिलकगुरुः ४ ॥ ३२ ॥
श्रीसोमप्रभसूरेः, पट्टे श्री सोमतिलकसूरिन्द्राः । तेषां त्रयो विनेया–स्तत्र श्रीचन्द्रशेखरः प्रथमः ॥ ३३ ॥
सूरिजयानन्दोऽन्य स्तृतीयका देवसुन्दरा गुरवः । श्रीसोमतिलकसूरेस्त एव पट्टाम्बरादित्याः ॥ ३४ ॥
तेषां च पञ्च शिष्याः, प्रथमे श्रीज्ञानसागरा गुरवः । कुलमण्डना द्वितीयाः श्रीगुणरत्नास्तृतीयाश्च ॥ ३५ ॥
तुर्या अहार्यवीर्या, गुरवः श्रीसोमसुन्दरप्रभवः । आसंश्च पञ्चमा अपि, गुरवः श्रीसाधुरत्नाह्वाः ॥ ३६ ॥
श्रीदेवसुन्दरगुरोः पट्टे श्रीसोमसुन्दरगणीन्द्रः । अभवन् युगप्रधानाः, शिष्यास्तेषां च पञ्चैते ॥ ३७ ॥
श्रीमुनिसुन्दरसूरिः १, श्रीजयचन्द्रो २ गुरुर्गरिमधाम । श्रीभुवनसुन्दरगुरु ३ र्जिनसुन्दरसूरि ४ र्जिनकीर्त्ती ५ ॥३८॥
श्रीसोमसुन्दरगुरोः, पट्टे [53]मुनिसुन्दरो युगप्रवरः । तत्पट्टमुकुटरत्नं, [53]रत्नशेखरगुरूत्तंसः ॥ ३९ ॥
श्राद्धविधिसूत्रवृत्त्या–द्यनेकसद्ग्रन्थनिर्मितिपटिष्ठः । [54]लक्ष्मीसागरसूरि–स्तत्पट्टमण्डनमतिगरिष्ठः ॥ ४० ॥
आसीत्तदीयपट्टे, गुरुर्गुणी सुमतिसाधुसूरीन्द्रः । [56]श्रीहेमविमलसूरिस्तदीयपट्टे गुरुः समभूत् ॥ ४१ ॥
अथ दुःषमोत्थदोषात्, प्रमादवशचेतसो ममत्वभृतः । अभवन् मुनयः प्रायः, स्वाचाराचरणशैथिल्याः ॥ ४२ ॥
किञ्चिन्निरीक्ष्याप्यसमञ्जसं तत्,शास्त्रार्थशून्यैः प्रतिभोज्झितैश्च । लुङ्काद्यनादेयमतान्धकूपेऽप्यन्धैरिवोच्चैः पतितं प्रभूतैः॥४३
इतश्च । श्रीहेमविमलसूरि–र्दूरीकृतकल्मषः ससूरिगुणम् । ज्ञात्वा योग्यं तूर्णं, धर्मस्याऽभ्युदयसंसिद्ध्यै ॥ ४४ ॥
सौभाग्यभाग्यपूर्णं, संवेगतरङ्गरङ्गनीरनिधिम् । आनन्दविमलसूरिं, स्वपट्टे स्थापयामास ॥ ४५ ॥ युग्मम् ॥

धन्यानगारसंकाशास्तपोभिर्दुस्तपैर्भृशम् । स्थूलभद्रोपमा ब्रह्म-चर्यवर्यगुणैरपि ॥ ४६ ॥
श्रीमदानन्दविमल-प्रभवः शासनाद् गुरोः । शश्वत् शुद्धां क्रियां कर्त्तु-मकुर्वन्निश्चलं मनः ॥ ४७ ॥ युग्मम् ॥
अथ कुमार्गपतज्जनतोद्धृतौ, विनयभावमवाप्य सहायकम् । सविनयं नयनिर्मलमानसं, मुदमधाद्विशदां गुरुपुङ्गवः ॥४८॥
श्रीविनयभावसंज्ञै-र्विज्ञवरैः संयुताः सहायैस्ते । समतासहिता हित्वा, वस्त्रादिपरिग्रहे ममताम् ॥ ४९ ॥
श्रीविक्रमनृपकालाद् भुजगजशरशशि १५८२ मितेगतेवर्षे । चक्रुश्चरणोद्धरणं, शरणं संवेगवेगवताम् ॥५०॥ युग्मम् ॥
तदा च तेषां जगदुत्तमानां, संविग्नतासाररसप्रसिक्तः । म्लानिं गतोऽपीह चरित्रधर्म्मैकल्पद्रुमः पल्लवितो बभूव ॥५१॥
स गुरुर्गरिमौदार्य-स्थैर्यादिगुणसेवधिः । निर्ममत्वः शरीरेऽपि, तपस्तेपे सुदुस्तपम् ॥ ५२ ॥
अथ तच्छ्रूयतां किञ्चि-दालोच्य स्वकपाप्मनः । कृतवानौपवासाणामशीत्याभ्यधिकं शतम् ॥ ५३ ॥
अर्हदादिपदध्यायी, विंशतिस्थानकं तपः । निर्विकारंश्चकारैष, चतु शतचतुर्थकैः ॥ ५४ ॥
चक्रे पुनस्तपस्त-द्वरिष्टषष्ठैश्चतुःशतप्रमितैः । विंशतिषष्ठानि ततो, विहरज्जिनपान् समाश्रित्य ॥ ५५ ॥
तीर्थाधिपवीरविभोः, षष्ठानि नवेक्षणेक्षण २२९ मितानि । पाक्षिकमुखेषु पर्वसु, षष्ठानि बहूनि चान्यानि ॥५६॥ युग्मम् ॥
द्वादशानि प्रभुः पञ्च, चक्रे प्रथमकर्मणः । तानि पञ्चान्तरायस्य, नवैव दशमानि तु ॥ ५७ ॥
दर्शनावरणस्यापि, मोहनीयस्य कर्मणः । अष्टाविंशतिसङ्ख्यानि, विशिष्टाष्टमकानि च ॥ ५८ ॥ युग्मम् ॥
अष्टमदशमान्येवं, वेद्ये गोत्रे तथायुषि बहूनि । कृतवान् भगवान्नाम्नो, न च जज्ञे कर्मणस्तु तपः ॥ ५९ ॥

तपोभिरेवं विहितैरनेकै–रनुत्तरैः श्रीगुरुकुञ्जरोऽसौ । वपुः सुशोषास्तसमस्तदोषः, स्वकं समग्रैर्दुरितैः सदैव ॥६०॥
वदन्ति तस्येति जना निरीक्ष्य, निरोहता ज्ञानतपः क्रियाढ्यम् । अवातरत्सर्वगुणः किमेषः, श्रीमान् जगच्चन्द्रगुरुर्द्वितीयः ६१
मरुस्थलीमालवगुर्जरात्रा–सौराष्ट्रमुख्येष्वपि मण्डलेषु । हरंस्तमः पङ्कमपास्तदोषः, स सूरिर्भानुर्व्यहरच्चिराय ॥ ६२ ॥
क्षितितलतिलके श्रीम–त्यहम्मदावादसंज्ञिते द्रङ्गे । विक्रमनृपतेः समति–क्रान्ते रसनवतिथि १५९६ मितेऽब्दे ॥ ६३ ॥
विधिना विहितानशनः, श्रीमानानन्दविमलसूरीन्द्रः । समवाप नाकसौख्यं, चेतसि निहितैश्चतुःशरणैः॥६४॥ युग्मम्
श्रीवर्द्धमानादिह षोडशोभूत्, श्रीचन्द्रसूरिः किल गच्छनेता । श्रीमान् स सूरिस्तु बभूव, सप्त–त्रिंशो बृहद्गच्छपसर्वदेवः६५
तपाभिधादिस्त्विह पञ्चचत्वारिंशो जगच्चन्द्रः मुनीन्द्रचन्द्रः । ततः क्रियोद्धारकृतो मुनीन्द्रा–स्त्रयोदशाः श्रीगुरवो बभूवुः॥६६
एवं श्रीवीरजिनात्, सन्ततिकृद्गच्छनाथगुरुगणने । आनन्दविमलगुरवः, श्रीमन्तः सप्तपञ्चाशः ॥ ६७ ॥
आसंस्तदीयपट्टे, प्रभवः श्रीविजयदानसूरीन्द्राः । सर्वत्र विजयवन्तो, नयवन्तः समयवन्तश्च ॥ ६८ ॥
तेषां पट्टे सम्प्रति, विजयन्ते सर्वसूरिपारीन्द्राः । सुविहितसाधुप्रभवः, श्रीमन्तो हीरविजयाह्वाः ॥ ६९ ॥
सौभाग्यमद्भुततरं भाग्यमसाधारणं सदा येषाम् । वैराग्यमुत्तमतमं, चारित्रमनुत्तरतमं च ॥ ७० ॥
येषां दोषांश्च गुणान्, शक्तौ खलसज्जनौ न जायेताम् । वर्णयितुमसद्भावा–दप्रमितेश्चापि पूज्यानाम् ॥ ७१ ॥
श्रीविजयसेनसूरि–प्रमुखैर्मुनिपुङ्गवैः प्रगतदोषैः । सेवितपदारविन्दाः, श्रीगुरवस्ते जयन्तितराम् ॥ ७२ ॥
तेषां श्रीसुगुरूणां, प्रसादमासाद्य संश्रुतानन्दः । वेदाग्निरसेन्दु १६३४ मिते, विक्रमभूपालतो वर्षे ॥ ७३ ॥

शिष्यो भूरिगुणानां, युगोत्तमानन्दविमलसूरीणाम् । निर्मितवान् वृत्तिमिमा-मुपकारकृते विजयविमलः ॥७४ युग्मम् ॥
कोविदविद्याविमला, विवेकविमलाभिधाश्च विद्वांसः । आनन्दविजयगणयो, विचिन्तयन्तो गुरौ भक्तिम् ॥ ७५ ॥
शोधनलिखनादिविधा-वस्या वृत्तेर्व्यधुः समुद्योगम् । स्युर्बाढमादरपरा, उचिते कृत्ये हि कृत्यज्ञाः ॥७६ ॥ युग्मम् ॥
प्रत्यक्षरं गणनया, वृत्तेर्मानं विनिश्चितम् । सहस्राः पञ्च सार्द्धानि, शतान्यष्टावनुष्टुभाम् ॥ ७७ ॥
यावन्महीतले मेरु-र्यावच्चन्द्रदिवाकरौ । तावद्वृत्तिरियं धीरै-र्वाच्यमानाऽश्नुतां जयम् ॥ ७८ ॥

॥ इति तपागच्छनभोनभोमणिकलिकालगौतमावतारभट्टारकपुरन्दरश्रीदआनन्दविमलसूरीश्वरचरणसरसीरुहरजश्चञ्चरी-कायमाण पं० श्रीविजयविमलगणिविरचितायां गच्छाचाराभिधप्रकीर्णकटीकायां श्रीगुरुपर्वक्रमवर्णनाधिकारः समाप्तः ॥

॥ ग्रंथाग्रं० ५८५० ॥

॥ इति श्रीगच्छाचारप्रकीर्णकं समाप्तम् ॥

श्रीमज्जैनसिध्धान्तवाचनाप्रकाशनकारिका

# श्रीमती आगमोदयसमितिः

स्थापनाः-श्रीमल्लीतीर्थे वीर सं० २४४१ माघ शुक्लदशम्याम् ।

प्रत ७०००

स. १९८२



प्राप्तिस्थानः-

**मास्तर विजयचंद मोहनलाल.**

ठे० दे० ला० धर्मशाळा, गोपीपुरा-सुरत.

### आगमोदय समितिना ग्रंथो.

| | |
|---|---|
| ीमूत्र | २-४-० |
| ुयोगद्धार .. | २-८-० |
| नाग उत्तरार्ध | ४-०-० |
| त्रतिमूत्र तृतीयभाग..... | ३-४-० |
| वारसार प्रकरण . | ०-८-० |
| स्यावली सूत्र | ०-१२-० |
| शेषावश्यक गाथा / सयाक्षरादि क्रम | ०-५-० |
| च्छाचार पयन्नो .. | ०-६-० |
| र्विंदु प्रकरण | ०-१२-० |
| शेषावश्यक भाष्य मूल / ा टिकानु गुजराती / पान्तर भा. १ लो. | २-०-० |
| पसेणी.... | १-८-० |
| ा फीलोसोफी | १-०-० |
| ा ,, | ०-१४-० |
| ,, | ०-१२-० |

### शेठ दे० ला० जै० पु० फंडना ग्रंथो.

| | | |
|---|---|---|
| आनंद काव्य म० मौ० | ४ थु | ०-१२-० |
| ,, ,, | ५ मु | ०-१०-० |
| ,, ,, | ६ ठुं | ०-१२-० |
| श्राद्ध प्रतिक्रमण सूत्र | | २-०- |
| सेन प्रश्न ( प्रश्नोत्तर रत्नाकर ) | | १-०-० |
| आवश्यक टीप्पण | | १-१२-० |
| जैबुद्वीप प्रज्ञप्ति सटीक उत्तरार्ध | | २-०-० |
| श्रीपालचरित्र संस्कृत | | ०-१४-० |
| सूक्त मुक्तावली | | २-०-० |
| प्रवचन सारोद्धार सटीक पूर्वार्ध | | ३-०-० |
| तंदुल वैयालीय पयन्नो सटीक | | १-८- |
| त्रिशति स्थानक चरित पद्यबद्ध | | १-०- |
| कल्पसूत्र सुबोधिका | | २-०- |
| सुबोधा समाचारी | | ०-८- |
| श्रीपाल चरित्र प्राकृत सावचूर्णिक | | १-४- |